साधुजनजनिततोषं निर्दोषं पुस्तकप्रवरमेतत् । तस्यात्मसुतस्य जगद्देवस्य श्रेयसेऽलेखि ॥ २४ ॥
यद् दोषैरकलंकितं गुणगणैर्युक्तं मनोहारिभिर्नित्याभ्यासवशेन निर्वृतिकरं दिव्योक्तसाधुक्रियम् ।
श्रीभूपालकुमारपालसहितं श्री हेमचन्द्रप्रभोः कर्मव्याधिविबाधकं विजयतां तद् योगशास्त्रं सदा ॥ २५ ॥
सूर्याचन्द्रमसौ यावद् द्योतयतः भुवं रुचा । अश्रान्तं पुस्तकं तावत् कोविदैर्वाच्यतामिदम् ॥ २६ ॥ छ ॥

ॐ ॥ स्वस्ति श्रीविक्रमनृपतेः संवत् १२५१ वर्षे कार्तिक सुदि १२ शुक्रे रेवतिनक्षत्रे सिद्धयोगे महाराजश्री–भीमदेवविजयिराज्ये अवनिवनिताप्रशस्तकस्तूरिकातिलकायमानलाटदेशालंकारिणि सकलजनमनोहारिणि विविधधार्मिकविराजमाने दर्भवतीस्थाने श्रीमालवंशीय श्रे० साभानंदनेन जगदानंदनेन निर्मलतमसम्यक्त्वधरेण श्रे० देवधरेण सकलधर्मकर्मविहितेन ठ० आमड–नरसिंहादिसुतसहितेन निजपुत्रजगद्देवश्रेयोनिमित्तं श्रीवटपद्रकपुरप्रसिद्धप्रबुद्ध पं० केशवसुत पं० वोसरिहस्तेनाशेषविशेषज्ञचेतश्चमत्कारकारीदमप्रतिमप्रतापश्रीजिनशासनप्रभावक–श्रीकुमारपालभूपालविधापितस्य श्रीहेमचन्द्रसूरिरचितस्य श्री योगशास्त्रस्य वृत्तिपुस्तकं लिखितमिति । मङ्गलं महाश्रीः । शुभं भवतु लेखकपाठकवाच[का]नामिति ॥ छ ॥ * ॥ छ ॥"

खं. प्रतिपरिचयः–क्रमाङ्कः १६१, पत्र १–३२३, आयाम–व्यासौ २९"×२" इंच, लेखन वर्षं १३०२ समीपकाले

॥ ३९ ॥

अन्तभागः—

"अस्तीह श्रेष्ठपर्वप्रचयपरिचितः क्ष्माभृदाप्तप्रतिष्ठः सच्छायश्चारुवर्णः सकलसरलतालंकृतः शस्तवृत्तः ।
पल्लीवालाख्यवंशो जगति सुविदितस्तत्र मुक्तेव साधुः साधुव्रातप्रणन्ता वरहुडिरिति सत्ख्यातिमान् नेमडोऽभूत् ॥१॥

तस्योच्चैस्तनया विशुद्धविनयास्तत्रादिमो राहडो जज्ञेऽतः सहदेव इत्यभिधया लब्धप्रसिद्धिर्जने ।
उत्पन्नो जयदेव इत्यवहितस्वान्तः सुधर्मे ततस्तत्राद्यस्य सदा प्रिया प्रियतमा लक्ष्मीः तथा नाइकिः ॥ २ ॥

आद्याया जिनचन्द्र इत्युनुदिनं सद्धर्मकर्मोद्यतः पुत्रश्चाहिणिसंज्ञिता सहचरी तस्य त्वमी सूनवः ।
ज्येष्ठोऽभूत् किल देवचंद्र इति यो द्रव्यं व्ययित्वा निजं सत्तीर्थेषु शिवाय संघपतिरित्याख्यां सुधीर्लब्धवान् ॥३॥

नामंधराख्योऽथ महाधराख्योऽतो वीरधवलाभिध-भीमदेवौ ।
पुत्री तथा धाहिणिनामिकाऽभूत् सर्वेऽपि जैनांह्रिसरोजभृंगाः ॥ ४ ॥

श्री देवभद्रगणिपादसरोरुहालेर्भक्त्याऽऽनमद् विजयचन्द्रमुनीश्वरस्य ।
देवेन्द्रसूरिसुगुरोः पदपद्ममूले तत्रान्तिमौ जगृहतुर्यतितां शिवोत्कौ ॥ ५ ॥

नाइकेस्तु सुता जातास्तत्र ज्येष्ठो धनेश्वरः । खेतूनाम्नी प्रिया तस्य अरिसिंहादयः सुताः ॥ ६ ॥

द्वैतीयीकः सुसाधुश्रुतवचनसुधास्वादनातृप्तचित्तः श्रीमज्जैनेन्द्रबिम्ब–प्रवरजिनगृह–प्रोल्लसत्पुस्तकादौ ।
सप्तक्षेत्र्यां प्रभूतव्ययितनिजधनो लाहडो नामतोऽभूत् लक्ष्मश्रीरित्यभिख्या सुचरितसहिता तस्य भार्या सदार्या ॥७॥

अभयकुमाराभिख्यस्तृतीयोऽजनि नन्दनः । यो दध्रे मानसं धर्मश्रद्धासंबन्धबन्धुरम् ॥ ८ ॥

धम सहाया सहदेवसाधोः सौभाग्यदेवीति बभूव जाया ।
पुत्रौ च खेढाभिध–गोसलाख्यौ प्रभावकौ श्रीजिनशासनस्य ॥ ९ ॥

किंच–

यौ कृत्वा गुणसंघकेलिभवनं श्रीसंघमुच्चैस्तरां श्रीशत्रुंजय–रैवतप्रभृतिषु प्रख्याततीर्थेषु च ।
न्यायोपार्जितमर्थसार्थनिवहं स्वीयं व्ययित्वा भृशं लेभाते सुचिराय संघपतिरित्याख्यां स्फुटां भूतले ॥ १० ॥

आद्यस्य जज्ञे किल पींवदेवी नाम्ना कलत्रं सुविवेकपात्रम् ।
तथा सुता जेहड–हेमचन्द्र–कुमारपालाभिध–पासदेवाः ॥ ११ ॥

अभवद् गोसलसाधोर्गुणदेवीति वल्लभा । नन्दनो हरिचन्द्राख्यो देमतीति च पुत्रिका ॥ १२ ॥

जयदेवस्य तु गृहिणी जाल्हणदेवीति संज्ञिता जज्ञे । पुत्रस्तु वीरदेवो देवकुमारश्च हालूश्च ॥ १३ ॥



॥ ४१ ॥

शुभशीलशीलनपरा अभवंस्तेषामिमाः सधर्मिण्यः । विजयसिरी-देवसिरी हरसिणिसंज्ञा यथासंख्यम् ॥ १४ ॥
एवं कुटुंबसमुदय उज्ज्वलवृषविहितवासनाप्रचयः । सुगुरोः गुणगणसुगुरोः शुश्राव सुदेशनामेवम् ॥ १५ ॥
दान-शील-तपो-भावभेदाद्धर्मश्चतुर्विधः । श्रयणीयः सदा भव्यैर्भाव्यभद्रपदप्रदः ॥ १६ ॥
विषयजसुखमिच्छोर्गेहिनः क्वास्ति शीलं ? करणवशगतस्य स्यात्तपो वाऽपि कीदृक् ? ।
अनवरतमदभ्रारम्भिणो भावना किं ? तदिह नियतमेकं दानमेवास्य धर्मः ॥ १७ ॥
ज्ञाना-ऽभयो-पग्रहदानभेदात्तच्च त्रिधा सर्वविदो वदन्ति ।
तत्रापि निर्वाणपथैकदीपं सज्ज्ञानदानं प्रवरं वदन्ति ॥ १८ ॥
कालानुभावान्मतिमान्द्यतश्च तच्चाधुना पुस्तकमन्तरेण ।
न स्यादतः पुस्तकलेखनं हि श्राद्धस्य युक्तं नितरां विधातुम् ॥ १९ ॥
एवं निशम्य सम्यक् ततश्च निजभुजसमर्जितधनेन । श्रीयोगशास्त्रवृत्तेः पुस्तकं लेखयामास ॥ २० ॥
यावद् व्योमसरोवरे विलसतो विश्वोपकारेच्छया सन्नक्षत्रसिताम्बुजौघकलिते श्रीराजहंसाविह ।
अज्ञानप्रसरान्धकारविधुरे विश्वे प्रदीपोपमस्तावन्नन्दतु पुस्तकोऽयमनिशं वाच्यमानो बुधैः ॥ २१ ॥

# सङ्केतविवरणम्

शां०—खंभातनगरे श्रीशान्तिनाथतालपत्रीयजैनज्ञानभाण्डागारे विद्यमाना प्रतिः

खं०— ,, ,, ,, ,,

मु०—Asiatic Society of Bengal, Calcutta इत्यनया संस्थया भावनगरस्थया जैनधर्मप्रसारकसभया च प्रकाशिता मुद्रिता आवृत्तिः

जैमु०—जैनधर्मप्रसारकसभाप्रकाशितमुद्रितग्रन्थस्थः पाठः

जैमुपा०— ,, स्थं पाठान्तरम्

जैमुसं०— ,, स्थः संशोधितः पाठः

रोमु०—Asiatic Society of Bengal, Calcutta इत्यनया संस्थया प्रकाशिते मुद्रिते ग्रन्थे विद्यमानः पाठः।

देव–गुरुकृपया अवशिष्टानपि प्रकाशान् संशोध्य शीघ्रं प्रकाशयितुं समीहामहे। अणहिलपुरपत्तनेऽपि सन्ति शुद्धाः [1]प्राचीनाः तालपत्रोपरि लिखिता योगशास्त्रस्यादर्शाः, अग्रेतनानां प्रकाशानां संशोधने तेषामपि यथासम्भवमुपयोगं कर्तुं समीहामहे। शुद्धिपत्रकमुपयुज्यैव ग्रन्थोऽयमध्येतव्य इति प्रार्थ्यते।

---

१, पृ० १२९ प० ८ इत्यत्र एतद्ग्रन्थमुद्रणानन्तरं पत्तनस्थे संघवीपाडाजैनज्ञानभाण्डागारे विद्यमानायां तालपत्रोपरि लिखितायामेकस्यां प्राचीनप्रतौ 'मनोगुप्त्यैषणादानेर्याभिः' इति शुद्धपाठो लब्ध.।

॥ ४३ ॥

धन्यवादा देव-गुरुपूजनं च—

अतिदुर्लभस्यात्युपयोगिनश्चास्य ग्रन्थस्य पुनः संशोधनं सम्पादनं चावश्यकमिति मत्वा एतत् पुण्यकार्यं जैनसाहित्यविकासमण्डलाध्यक्षैः विविधशास्त्रोपासनारसिकैरुदारचरितैः श्रेष्ठिश्री 'अमृतलाल कालीदास' महोदयैः मह्यं प्रदत्तमिति तेषां श्रुतभक्तिर्भूयो भूयो धन्यवादमर्हति । विनीतैर्मुनिराजश्रीधर्मचन्द्रविजयैरस्मिन् कार्ये विविधैः प्रकारैर्महत् साहायकमनुष्ठितमिति तेभ्यो भूयो भूयो धन्यवादान् वितरामि ।

अस्य महाग्रन्थस्यैतत् सम्पादनकार्यमनन्तोपकारिणां परमपूज्यानां पितृचरणानां सद्गुरुदेवानां च मुनिराजश्री भुवनविजयजीमहाराजानां परमकृपया साहाय्येनैव च सम्पन्नमिति अनन्तशो गुरुचरणेषु प्रणिपातं विधाय परमकृपालोः परमात्मनः श्रीशङ्खेश्वरपार्श्वनाथप्रभोः करकमलयोः पुष्परूपमेनं ग्रन्थं निधाय अनन्तशः प्रणिपात-पूर्वकमद्य श्रीपार्श्वनाथप्रभुजन्मकल्याणकदिने

श्रीशङ्खेश्वरपार्श्वं महयाम्येतेन कुसुमेन ।

| | |
|---|---|
| चारुपतीर्थम्<br>प्रभुपार्श्वनाथजन्मकल्याणकदिनम्<br>( मार्गशीर्षकृष्णदशमी )<br>विक्रम संवत् २०३३ | पूज्यपादाचार्यमहाराजश्रीमद्विजयसिद्धिसूरीश्वरपट्टालंकार-<br>पूज्यपादाचार्यमहाराजश्रीमद्विजयमेघसूरीश्वरशिष्य-<br>पूज्यपादगुरुदेवमुनिराजश्रीभुवनविजयान्तेवासी<br>मुनि जम्बूविजयः |

# शुद्धिपत्रकम्

| पृ० | पं० | शुद्धः पाठः |
|---|---|---|
| ३ | ७ | पुनर्योगगर्भा° |
| ४ | ९ | भक्तिकोमल° |
| ,, | १२ | सत्वरं |
| ७ | ९ | धीरा[२] |
| १२ | १ | व्योमेवा° |
| १८ | ४ | दक्षिणलोकार्धे |
| २८ | ३ | नभो-भूगत° |
| ३२ | ८ | भेदोपचार । |
| ,, | १० | °ऽसूया-ऽरत्य° |
| ,, | १३ | °मित्यर्थ. । " |

| पृ० | पं० | शुद्धः पाठः |
|---|---|---|
| ३८ | ३ | °ज्वर-श्वासा-ऽरुचि° |
| ४० | १३ | °श्च प्रभूत |
| ४१ | ४ | केचिद् बीज° |
| ४२ | १ | °स्यार्थं ग्रन्थं च |
| ४३ | ११ | °लब्धिर्मनोद्रव्य° |
| ,, | १२ | वा भरत° |
| ४८ | १ | °ध्वजाः |
| ४९ | १० | °कुलिशा-ऽङ्कुशैः |
| ५० | ३ | तिस्रो लेखा मूले |
| ५१ | ३ | वृत्तमुत्तुङ्ग° |
| ५९ | ६ | कन्येभाश्वादि |
| ,, | ७ | स्वामी |

| पृ० | पं० | शुद्धः पाठः |
|---|---|---|
| ८१ | १२ | कुला [नि तन्न हि] ॥४०३॥ |
| ,, | १४ | °मन्यतो(मितो) बाहुः |
| ८७ | ८ | ब्राह्मी |
| ८८ | ४ | भ्रातॄन् |
| ९२ | ७ | गोर्धनोः |
| ,, | ८ | यद्यपि |
| ९७ | १ | कुप्याम्यहं |
| ११६ | ९ | °नुपपत्तेः । सर्वे° |
| ११९ | ५ | [५]कामाश्च |
| ११९ | १० | °ऽनुमत-कारितैरिति[६] |
| १२१ | ८ | मनोगुप्त्यैषणादानेर्याभिः× |

× एतद्ग्रन्थमुद्रणानन्तरं शुद्धोऽयं पाठः पत्तनस्थे संघवीपाडाजैनभाण्डागारे विद्यमानायां तालपत्रोपरि लिखितायां प्रतौ लब्धः ।



॥ ४५ ॥

| पृ० | पं० | शुद्धः पाठः |
|---|---|---|
| १३१ | ४ | हिंसामेत्तेण |
| ,, | ८ | याक्यशुद्ध्य° |
| ,, | १० | " ³महुरं |
| १३५ | ६ | -कृपणा- |
| ,, | ७ | -वस्ति° |
| १४० | ५ | निर्जन्तुत्रस-स्थावर° |
| १४४ | ११ | ¹न्याय° |
| १४९ | १२ | °गम-निधाना° |
| १५० | ८ | °धूर्त-विट° |
| १५१ | १ | जनकः, |
| १५२ | ९ | कुर्वन्निति |
| १५८ | ११ | विक्रान्त° |
| १६२ | ७ | गुरवश्च |
| १६७ | २ | सालक्षण्य-वैलक्षण्याभ्यां |
| १६९ | १ | °पढमो " [ स्थानाङ्गे नवमस्थाने ] |
| १८२ | १२ | ३ दृश्यतां पृ० १७९ |
| १८४ | ११ | धर्मसं० |
| १८५ | ९ | °फलक-संस्तारा° |
| ,, | १० | °क्रियते, यथा° |
| ,, | १३ | तत्त्वार्थभा० |
| १८९ | ३ | भगवद्वचना° |
| १९१ | ३ | ²होज्जा |
| १९४ | ६ | अकुसला उ |
| १९७ | ४ | पञ्चत्वमिति |
| १९९ | ५ | तेष्वपि |
| २०८ | ४ | कृतवीर्यो |
| २१२ | १० | बाणेनैकेनैककालं |
| २१९ | २ | इव |
| २२५ | १३ | पतिरस्या |
| २२९ | ८ | शूर्पणखास्तु° |
| २३३ | ७ | तत्रैकः |
| ,, | ११ | ⁵प्रनष्टो |
| २६८ | ४ | सृष्टाः' |
| २९० | १ | °बंभण-भूणंतगा |
| २९५ | २ | सपुत्र-पौत्रस्य |
| २९७ | १० | पूर्णैर्गुणैः |

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| ३२० | १ | ऽभूद्रौद्रो | ३४७ | ९ | क्रुद्धा | ,, | ११ | नग्नो |
| ३३८ | ९ | मांसविस्र॰ | ३७७ | १ | सुदर्शनोऽप्युच्चैः | ३९२ | ७ | [ उपदेश॰ |
| ,, | ११ | विस्रमामगन्धि | ३८१ | ११ | व्यबुद्धयत | ३९७ | १ | ॰ज्जह्नुः |
| ३३९ | ३ | मांसविस्रत्वं | ३८५ | १० | सद्गतौ स्वं | ४०४ | ११ | क्रुद्धं |
| ३४३ | ८ | परदारप्रसङ्गे,तस्य दाराः, | ३८६ | ३ | परित्याज्याः | ४१९ | १० | प्रव्राज्यो॰ |

# सम्पादनोपयुक्तग्रन्थसूचिः संकेतविवरणं च

अनेकार्थसंग्रहः
अभि० चि० =अभिधानचिन्तामणिः
अभि० चि० वृ०=,, स्वोपज्ञवृत्तिः
अभि० चिन्ता० स्वो०= ,,
अयोगव्य०=अयोगव्यवच्छेदद्वात्रिंशिका
आव० चू०=आवश्यकचूर्णिः
आव० नि०=आवश्यकनिर्युक्तिः
आव० म० (मल०)=आवश्यकसूत्रस्य मलयगिरीया वृत्तिः
आव० हा० (हारि०)= ,, हारिभद्री वृत्तिः
उत्तरा०=उत्तराध्ययनसूत्रम्
उपदेश०=उपदेशमाला धर्मदासगणिविरचिता
ओघनि०=ओघनिर्युक्तिः
ओघनिर्युक्तिवृत्तिः द्रोणाचार्यकृता
कल्पसू०=कल्पसूत्रम्

॥ ४७ ॥

कामशास्त्रम्
कामशास्त्रस्य जयमङ्गला टीका
कौ० अ०=कौटिलीयम् अर्थशास्त्रम्
गा०=गाथा
खंटि०=खं. प्रतिस्थं टिप्पणम्
चउप्पन्न०=चउप्पन्नमहापुरिसचरियं
तत्त्वार्थ०=तत्त्वार्थसूत्रम्
तत्त्वार्थभा०=तत्त्वार्थसूत्रभाष्यम्
तत्त्वार्थराज०=तत्त्वार्थराजवार्तिकम्
तत्त्वार्थ० सि०=तत्त्वार्थसूत्रस्य सिद्धसेनीया वृत्तिः
तिलोयप०=तिलोयपण्णत्ती
त्रिषष्टि०=त्रिषष्टिशलाकापुरुषचरितम्
दशवै०=दशवैकालिकसूत्रम्
दशवै० हा०=दशवैकालिकसूत्रस्य हारिभद्री वृत्तिः
धर्मवि०=धर्मविन्दुः
धर्मविन्दुटीका
धर्मसं०=धर्मसंग्रहणी श्रीहरिभद्रसूरिविरचिता
धर्मसं० वृ०=धर्मसंग्रहस्य स्वोपज्ञा वृत्तिः
ध्यानश०=ध्यानशतकम्
नन्दीसूत्रम्
नाट्यशा०=नाट्यशास्त्रम्
नाट्यशा० अ०=नाट्यशास्त्रस्य अध्यायः
निशीथभाष्यम्
न्यायमं०=न्यायमञ्जरी जयन्तभट्टरचिता
पंचसू०=पञ्चसूत्रम्
पञ्चसंग्रहस्य स्वोपज्ञा वृत्तिः
पञ्चाशकवृत्तिः अभयदेवसूरिविरचिता
पाक्षिकसूत्रम्

पिण्डनि०=पिण्डनिर्युक्तिः
पृ०=पृष्ठम् । पं=पङ्क्तिः ।
प्रमाणवा०=प्रमाणवार्तिकम् ( बौद्धग्रन्थः )
प्रमाणसमु०=प्रमाणसमुच्चय. ( बौद्धग्रन्थः )
प्रवचनसा०=प्रवचनसारोद्धारः
,, वृ०= ,, वृत्तिः
प्रशम०=प्रशमरतिप्रकरणम्
बृ० भा०=बृहत्कल्पसूत्रभाष्यम्
भक्ता०=भक्तामरस्तोत्रम्
भगवतीसूत्रम्
मनुस्मृ०=मनुस्मृतिः
महावीर०=महावीरचरियं
मी० श्लो० वा०=मीमांसाश्लोकवार्तिकम्
मूलशुद्धिप्र०=मूलशुद्धिप्रकरणम्

योo=योगशास्त्रम्
यो० वृ०=योगशास्त्रस्य स्वोपज्ञा वृत्तिः
वि० भा०=विशेषावश्यकभाष्यम्
विशेषाव०= ,,
वी० स्तो०=वीतरागस्तोत्रम्
वीतराग स्तो०= ,,
व्य० भा०=व्यवहारभाष्यम्
शक्रस्तवः सिद्धसेनाचार्यप्रणीतः
शाबरभा०=शाबरभाष्यम् (मीमांसादर्शनस्य)
श्रा० प्र०=श्रावकप्रज्ञप्तिप्रकरणम्
षट्खंडागमधवला टीका
सांख्यकारिकाया युक्तिदीपिका वृत्तिः
सि०=सिद्धहेमशब्दानुशासनम्
सि० ल०= ,, लघुवृत्तिः
हैमधा०=हैमधातुपाठः



॥ ४९ ॥

# स्वोपज्ञवृत्तिविभूषितस्य योगशास्त्रस्य विषयानुक्रमः ।

[શ્રી જૈન સાહિત્ય વિકાસ મંડળના સ્થાપક અન તેના પ્રાણ સમાન **શેઠશ્રી અમૃતલાલ કાળીદાસ દોશીના** જીવનકાળ દરમ્યાન જ આ પ્રકાશિત થતો ગ્રંથ–યોગશાસ્ત્રનો પ્રથમ વિભાગ–સંપૂર્ણ પણે છપાઇ ગયો હતો. પ્રસ્તાવના આદિ પણ છપાઇ ગયાં હતાં. પ્રકાશનવિધિ જ ખાસ બાકી રહી હતી. તે વિધિ થાય તે પૂર્વે જ તેઓશ્રીનો સ્વર્ગવાસ થયો હોવાથી તેઓશ્રી તરફ કૃતજ્ઞતારૂપે જૈ. સા. વિ. મં. તરફથી તેમની **જીવનઝરમર** અહીં સંક્ષેપમાં રજુ કરવામાં આવે છે.]

## શેઠ શ્રી અમૃતલાલ કાલીદાસ દોશીની

# જીવન ઝરમર

ઊંચા હિમાલયની શ્વેત ગિરિકંદરાઓ વચ્ચે આવેલા કોઈ સરોવરની કલ્પના કરો અને તેનાં નિર્મળ ઝીલમીલ થતાં પાણીનાં તરંગોમાં તરતાં બાલ–સૂર્યનાં [Rising–Sun] નાં તેજ કિરણો જુવો. અંતરપટ પર તેનું જે વિમળ અને ભવ્ય દૃશ્ય અંકિત થાય તેના જેવું શ્રી અમૃતલાલ કાલીદાસ દોશીનું બાહ્ય અને આંતર વ્યક્તિત્વ હતું. સૌમ્ય પ્રસન્ન અને ઓજસ્વી.

સપ્રમાણ ઊંચી દેહયષ્ટિ, એકવડું શરીર, સ્ફટિક કે સંગેમરમરના આરસ જેવો સફેદ વાન, ઝગારા મારતું વિશાળ લલાટ, ઊંડાણને તાગતી ઝીણી પાણીદાર આંખો, વ્યક્તિ, વસ્તુ અને વિચારની ગંધને દૂરથી જ પારખી



॥ ५३ ॥

લેતાં એવા પહોળાં નસકોરાં, પ્રભાવક લાંબા કાન અને મલપતા હોઠ, સફેદ ધોતિયું અને સફેદ ખમીસ પહેરણુ પહેરી ઉઘાડા માથે બેઠા હોય તો દૂરથી જોનારને પહેલી નજરે અમૃતલાલભાઈ કોઈ ઋષિ જણાય. ટટ્ટાર બેઠા હોય અને દુનિયાને વિસરી પોતાના સ્વાધ્યાયમાં લયલીન હોય અને તેમની સાથે વાતો કરતાં કે તેમના સાન્નિધ્યમાં મૌનપણે બેસતાં જાણે ગંગાસ્નાનનો આહ્લાદક રોમાંચ અનુભવાય.

## સંસ્કારનું સિંચન

**શ્રી અમૃતલાલભાઈનો** જન્મ વિ. સં. ૧૯૫૦ માં શરદપૂનમે થયો હતો. દિનાંક ૧૪ મી ઓકટોબર ૧૮૯૪ દિવસ રવિવાર. પિતાનું નામ **શ્રી કાલિદાસ વીરજી દોશી** માતાનું નામ **સંતોકબાઈ**. તેમનું મૂળ વતન સૌરાષ્ટ્રમાં જામનગર પાસેનું **મોડા** ગામ.

શ્રી કાલિદાસભાઈની આર્થિક સ્થિતિ સામાન્ય. પરંતુ તેમનો સંસ્કારવૈભવ ઘણો સમૃદ્ધ હતો. વિશાળ કુટુંબની જવાબદારી સફળતાથી ઉપાડતા સંસારના અનેક તડકા-છાંયડામાંથી તે પસાર થયેલા. જેવા કરૂણાળુ હતા તેવા જ તે ઉદારચિત્ત હતા અને અપકારી ઉપર પણ પ્રેમભાવે ઉપકાર કરતા હતા. પોતાનો અભ્યાસ ઓછો ન હતો પરંતુ ઉચ્ચ શિક્ષણનું મહત્ત્વ તેમને તે જમાનામાં સમજાયું હતું. અને પોતાના પનોતા પુત્રને આગ્રહ કરીને કોલેજ સુધીનું ઉચ્ચ શિક્ષણ અપાવ્યું હતું.

પોતાનું કર્તવ્યનિષ્ઠ અને કર્મઠ જીવન, સહનશીલતા અને ધીરજ, સાદાઈ અને કરકસર, ઉમદા અને ઉચ્ચ ભાવનાઓ, સારા-માઠા પ્રસંગોમાં પણ સદાય હસતા રહેવાનો સ્વભાવ, અજાણ્યાઓ પ્રત્યે પણ નિઃસ્વાર્થ

પ્રેમ, બીજાનું કંઈક ભલું કરી છૂટવાની તમન્ના. હૈયે સતત પરમાત્માનું સ્મરણ, પરમાત્મા પ્રત્યે દૃઢ શ્રદ્ધા, ધર્મ પ્રત્યે અનુરાગ વગેરે સંસ્કાર અને ગુણોની અસર શ્રી અમૃતલાલભાઈના જીવનમાં બાલ્યવયથી જ પડી.

પિતાના જીવનના ઊંડા પ્રભાવના લીધે, ઉગતી જવાનીમાં જ તેઓશ્રી મોજ–શોખથી વિરક્ત બન્યા. સાદાઇને જીવનનો શણગાર માન્યો. કૉલેજમાં ભણતા હતા ત્યાં સુધી તેમને પિતાના પ્રેમ, પ્રેરણા અને પ્રોત્સાહન મળ્યાં. પિતાની સમ્યક્ કેળવણીથી તેમનું આંતર અને બાહ્ય વ્યક્તિત્વ સુંદર રીતે ખીલતું ગયું. પિતાના પ્રેમ અને વિશ્વાસને તેમણે પિતાની હયાતીમાં જ તપાવ્યા. એમ કહી શકાય કે જ્યોતમાંથી જ્યોત પ્રકટે તેમ એક ઉદાત્ત જીવનમાંથી બીજું તેવું જ ઉદાત્ત જીવન ઝગમગી ઊઠયું.

## અભ્યાસ

મેટ્રીક સુધીનો વ્યાવહારિક અભ્યાસ તેમણે જામનગરમાં કર્યો હતો. અને બી. એ. સુધીનો ઉચ્ચ અભ્યાસ જુનાગઢમાં કર્યો. જે જમાનામાં કેળવણી પ્રત્યે લોકોને ઓછો રસ અને રુચિ હતાં તેમજ ઉચ્ચ અભ્યાસ કરવો એ સાહસ ગણાતું, તે જમાનામાં ૧૯૧૮ માં તે બી. એ. થયા. સંસ્કૃત અને ફિલોસોફી–તત્ત્વજ્ઞાનના ગંભીર વિષયો લઇ બી. એ. ની ડીગ્રી મેળવી હતી. અમૃતલાલભાઈ સફળ અને યશસ્વી જૈન પ્રાચીન સાહિત્ય સંશોધક બની શકયા તેનાં બીજ તેમણે બી. એ. થવા માટે પસંદ કરેલા આ બે વિષયોમાં જોઈ શકાય છે.

॥ ૬૯ ॥

## જવાબદારી અને સિદ્ધિના સોપાન

બી. એ. થઇને વૃદ્ધ પિતાનો બોજો હળવો કરવા ઝંખતા અમૃતલાલભાઈની ઈચ્છા ફળી નહિ. એ સૌભાગ્ય જોઇને ઉલ્લાસ અનુભવવા કાલીદાસભાઇ ત્યારે ન હતા. બી. એ. નો છેલ્લા વરસનો અભ્યાસ પૂરો થાય તે પહેલાં જ તેમના પિતા આ ફાની દુનિયા છોડી ચાલ્યા ગયા હતા. પિતાના અવસાનથી મોટા કુટુંબના ભરણ-પોષણની જવાબદારીનો ભાર ઉગતી યુવાન ઉંમરમાં જ તેમના ઉપર આવી પડ્યો.

'કર્મરેખા બલિયસી'– કર્મરેખા બળવાન છે એમ સમજીને તેમણે આ પવિત્ર જવાબદારી ઉપાડી લીધી. ૧૯૧૮માં સ્નાતક બન્યા બાદ તુરત તે મુંબઇ આવ્યા અને પોતાની વીશાશ્રીમાળી જૈન જ્ઞાતિના શેઠ શ્રી લધુભાઈ દામજી દોશીની 'પેઇન્ટ મેન્યુફેકચરીંગ કંપની'ની નોકરીમાં જોડાયા. વિજ્ઞાનના સ્નાતક ન હોવા છતાં રંગ અને રસાયણ ક્ષેત્રમાં અભ્યાસ અને કામ કામ કરવાની સૂઝ, કામ પ્રત્યેની ચીવટ અને ચોકસાઈ, વફાદારી અને પ્રામાણિકતા, ચપળતા અને કઠોર પરિશ્રમ વગેરે તેમના ગુણોથી આકર્ષાઇને 'બી શિવચંદ જેઠાલાલ એન્ડ કું. એ તેમને ભાગીદાર થવા સામેથી નિમંત્રણ આપ્યું'. અને ૧૯૨૪માં ધંધામાં ભાગીદાર બન્યા. ૧૯૨૮માં વિદેશની એલ. હોલીડે એન્ડ કું.ની સોલ એજન્સી લીધી. ભારતમાં પ્રતિનિધિત્વ કરતી આ કંપનીના ડીરેકટરોને મળવા તેમણે ૧૯૩૪માં ઇંગ્લેન્ડ, ફ્રાન્સ, હોલેન્ડ, સ્વીટ્ઝર્લેન્ડ અને જર્મનીની પણ મુલાકાત લીધી.

વ્રતધારી શ્રાવકને છાજે તેવી રીતે તેમણે આ વિદેશની સફર ખેડી. ૧૯૩૪માં વિદેશની ધરતીપર જૈનત્વને ટકાવી રાખવાની કોઈ જ સાનુકૂળતા ન હતી. આથી અમૃતલાલભાઇ વિદેશના ચાર–છ માસના રોકાણ દરમ્યાન માત્ર દુધ અને ફળ પર જ રહ્યા. જેવા શુદ્ધ જૈન ભારતમાં હતા તેવા જ શુદ્ધ જૈન વિદેશમાં પણ રહ્યા.

વિદેશથી પાછા ફર્યા બાદ થોડા સમયમાં તેમણે 'બી. શીવચંદ જેઠાલાલ એન્ડ કું.' નું કલેવર ધરમૂળથી બદલી નાખ્યું. આ કંપની પછી 'બી. શીવચંદ અમૃતલાલ એન્ડ કું.' બની. સમયાંતરે તેનું નામ બદલીને 'અમૃતલાલ એન્ડ કું. લી.' રાખ્યું.

૧૯૪૧ માં તેમણે ધંધામાં હરણફાળ ભરી. પોતાના ધંધાની વધતી જવાબદારીઓમાં તેમણે પોતાના ભત્રીજા શ્રી જે. એમ. દોશીને સહભાગી બનાવ્યા અને આ 'કાકા-ભત્રીજા' ની જોડીએ પોતાના વિકસતા જતા વ્યવસાયને વિશ્વવ્યવસાયની ક્ષિતિજે મૂકી દીધો. ૧૯૫૪ માં તેમણે 'અમર-ડાઈ-કેમ લીમીટેડ' નામનું વિશાળ ઔદ્યોગિક સંકુલ ઊભું કર્યું. ડાય-સ્ટફ અને રંગ-રસાયણના ક્ષેત્રમાં આજ "અમર-ડાય-કેમ' પહેલી હરોળનું નામ બની ચૂક્યું છે.

## સામાજિક સિદ્ધિ

ઔદ્યોગિક ક્ષેત્રના જેવી જ યશસ્વી અને ઝળહળતી સફળતા અને પ્રતિષ્ઠા તેમણે સામાજિક અને સાહિત્યિક ક્ષેત્રાએ પણ પ્રાપ્ત કરી છે. માત્ર પૈસા રળવામાં જ તેમણે પોતાના જીવનની ઇતિશ્રી નહોતી માની. ધંધાના પ્રશ્નોમાં જ તે ગુથાયેલા નહોતા રહ્યા. જૈનધર્મ અને જૈનસમાજના પ્રશ્નોમાં પણ એમણે સક્રિય રસ લીધો હતો.

૧૯૫૨ માં જૈન શ્વેતામ્બર કોન્ફરન્સ વિવિધ પ્રવૃત્તિઓથી ધમધમતી હતી. સમાજ અને રાષ્ટ્રમાં ત્યારે તેનું નિર્ણયાત્મક સ્થાન હતું. તેનો અવાજ આદેશાત્મક બની રહેતો હતો. આવી ગૌરવવંતી કોન્ફરન્સના સુવર્ણજયંતી અધિવેશનનું અધ્યક્ષપદ તેમણે શોભાવ્યું હતું અને ચારેય ફિરકાઓની પ્રતિનિધિત્વવાળી સંસ્થા



॥ ૯૭ ॥

"ભારત જૈન મહામંડળ" ના ૧૯૬૬ ના ૩૧ મા અધિવેશનમાં તેમના અધ્યક્ષપદે "ભગવાન મહાવીરસ્વામીનો ૨૫૦૦ મો નિર્વાણ મહોત્સવ" અખિલ વિશ્વ ધોરણે ઉજવવાનો ઐતિહાસિક ઠરાવ થયો હતો. ભારતભરના જૈન દેરાસરોની માર્ગદર્શક પ્રતિષ્ઠિત સંસ્થા "શેઠ આણંદજી કલ્યાણજી પેઢી" ના વરસો સુધી ટ્રસ્ટી રહ્યા હતા. આ પેઢીનું બંધારણ ઘડવામાં તેમણે મહત્ત્વનો ભાગ ભજવ્યો છે. આ બંધારણ તૈયાર કરવામાં તેમણે છ માસ સુધી ગંભીર અને ગહન પ્રયત્ન કર્યો હતો.

આ અને આવી બીજી નાની મોટી સંસ્થાઓમાં તેમણે આપેલ સક્રિય સેવાઓમાં તેમના એક વિશિષ્ટ વ્યક્તિત્વનો પરિચય થાય છે. કૉન્ફરન્સ અને ભારત જૈન મહામંડળના અધિવેશનના અધ્યક્ષપદેથી આપેલા પ્રવચન, અમદાવાદ આચાર્ય મહારાજ શ્રી અમૃતસૂરિની નિશ્રામાં યોજાયેલ 'કર્મગ્રન્થ' પ્રકાશન સમારોહ પ્રસંગે આપેલ તથા તેવા સમયોચિત અન્ય પ્રવચનો આજ પણ એટલા જ મનનીય અને પ્રેરક છે. આ પ્રવચનો દર્શાવે છે કે અમૃતલાલભાઇ કુશળ વક્તા જ ન હતા, સુસ્પષ્ટપણે પોતાના મંતવ્યો રજુ કરનારા, નિર્ભય તત્ત્વચિંતક પણ હતા.

## વિવેકપૂર્ણ દાનપ્રવાહ

અમૃતલાલભાઇના વ્યક્તિત્વનું આગવું તરી આવતું જીવન લક્ષણ છે–જાગ્રત્ વિવેક. વિવેકથી બોલતા, વિવેકથી વર્તતા, વિવેકથી ઊઠતા. તેમના જીવનનાં દરેક સોપાનમાં વિવેકની પરિમલ મ્હેકે છે. આથી જ તેમણે નામના મોહ વિના વિશુદ્ધ લોક-કલ્યાણના હેતુ માટે જ દાન કર્યાં.

૧૯૪૨ માં તેમણે પોતાના પૂજ્ય પિતાશ્રીની પુણ્યસ્મૃતિમાં પાલિતાણામાં તળેટી પાસેના આગમમંદિરમાં "શ્રી સિદ્ધચક્ર ગણધર મંદિર" નુ નિર્માણ કરાવ્યું. આ મંગળ પ્રસંગે બ્રહ્મચર્ય વ્રતનો અંગીકાર કર્યો. પિતાનું યત્કિંચિત્ ઋણ ચુકવવા રૂા. ૮૦ હજારની માતબર રકમનો ત્યારે સદ્વ્યય કર્યો. અમૃતલાલભાઇનું સમગ્ર જીવન જોતાં તેમનું આ મંદિરનું નવનિર્માણ ઘણું જ સૂચક જણાય છે. અમૃતલાલભાઇએ "શ્રી સિદ્ધચક્ર ગણધર મંદિર" બંધાવી પોતાની આત્મભાવનાના મંગળ દર્શન કરાવ્યાં છે. સિદ્ધચક્ર એટલે યોગનું આલંબન અને ગણધર ભગવંતો એટલે શ્રુતજ્ઞાનનાં પ્રતીક. અમૃતલાલભાઈના જીવનની છેલ્લી ચાલીશીમાં યોગ અને શ્રુતજ્ઞાનની જે ઉત્કૃષ્ટ સાધના જોવા મળે છે તેનું આ મંદિર કદાચ પ્રથમ પ્રકટીકરણ જણાય છે.

ઉચ્ચ કેળવણી પોતે લીધી હતી અને તે માટે પોતે વેઠેલાં દુઃખોમાંથી જીવનપાઠ શીખીને તેમણે જામનગરમાં "કાલીદાસ વીરજી દોશી ચેરીટીઝ ટ્રસ્ટ" ની સ્થાપના કરી નબળા વર્ગનો પણ લાયક વિદ્યાર્થી પૈસાના અભાવે કેળવણીથી વંચિત ન રહે-તેવી સમસંવેદનામાંથી આ ટ્રસ્ટ અને બીજા ટ્રસ્ટોની સ્થાપના કરી હતી. અને આ દ્વારા જૈન તેમજ જૈનેતર કોઇપણ ગરીબ વિદ્યાર્થીને સહાય અપાય છે.

અમૃતલાલભાઈના લગ્ન ૧૯૧૨ માં શેઠશ્રી દેવચંદ મૂળચંદ સુતરીયાની સુપુત્રી મૂળીબેન સાથે થયાં હતાં. તેમનાં આ પ્રસન્ન દાંપત્યથી તેમને ચાર સંતાન થયાં. ત્રણ પુત્રો (૧) રસિકભાઈ (૨) ચંદ્રકાંતભાઈ (૩) અરૂણભાઇ અને એક પુત્રી જયોત્સ્નાબેન. તેમનું દાંપત્યજીવન ૬૨ વર્ષ રહ્યું. ધર્મપત્ની મૂળીબેનનું જામનગરમાં તા. ૨૪-૨-૭૪ ના અવસાન થયું ત્યારે તેમની પુણ્યસ્મૃતિમાં તેમણે જામનગરમાં "અન્નપૂર્ણા સમિતિ" સંસ્થા

ઊભી કરી. શ્રી એટલે અન્નપૂર્ણા. આ કલ્પનાને તેમણે આ સમિતિમાં સાકાર કરી અને રૂા. ૫૦,૦૦૦) નું દાન કર્યું. આ સમિતિએ રાહતના ભાવે અનાજ વગેરેનું ૧૫ માસ વિતરણ કર્યું અને મોંઘવારીમાં ભિસાઈ રહેલા સેંકડો કુટુંબોને રાહત પહોંચાડી. એ જ પ્રમાણે દોશી પરિવારે જામનગરમાં દોશી કાલીદાસ વીરજી આર્ટ્સ એન્ડ સાયન્સ કૉલેજની સ્થાપના માટે રૂા. ૨,૫૦,૦૦૦ નું દાન આપ્યું. હવે ભારતીય વિદ્યા ભવનને રૂા. ૧૦ લાખનું દાન અને જમીન મળ્યા એટલે તેમણે મહિલા કૉલેજની સ્થાપના કરી છે અને અમૃતલાલભાઈના શિક્ષણના ક્ષેત્રે મળેલા ઉમદા ફાળાને લક્ષમાં લઈને તેમનું નામ જોડીને "અમૃતલાલ કાળીદાસ દોશી મહિલા કૉલેજ" નામ આપ્યું છે. શૈક્ષણિક ક્ષેત્ર ઉપરાંત દુકાળ, રેલ વગેરે કુદરતી આફતોના સમયે પણ તેમણે લાખો રૂપિયાના દાન કર્યા છે. આ સંસ્કારમૂર્તિ પાસેથી પ્રેરણા મેળવીને દોશી પરિવાર, દોશી ગ્રુપ ઓફ કંપનીઝ અને દોશી ગ્રુપ ઓફ ટ્રસ્ટસ આ ત્રણેય તરફથી ધર્મ, સમાજ, શિક્ષણ, સાહિત્ય, માનવતા અને રાષ્ટ્રને દાન મળતાં જ રહ્યાં છે.

## સાહિત્ય સાધના

જૈન સાહિત્યનું ઊંડું અધ્યયન એ જાણે એમની પૂર્વભવની અધૂરી રહેલી ઇચ્છા હતી. એ ઇચ્છા પૂર્તિના પ્રયત્નોમાંથી "જૈન સાહિત્ય વિકાસ મંડળ" નામની સંસ્થાનો જન્મ થયો છે. ૧૯૪૮ માં અમૃતલાલભાઈએ પોતે આ સંસ્થાને જન્મ આપ્યો. આ તેમનું એકમેવ માનસસંતાન છે. તેના ઉછેર અને સંવર્ધન માટે તેમણે એક મમતાભર્યા પિતાથી પણ સવિશેષ કાળજી લીધી હતી.

સ્વાધ્યાય એ તેમનો હૃદય ધબકાર હતો. તો સંશોધન એ તેમનો રક્તસંચાર. તત્ત્વજ્ઞાનનાં ગ્રંથોનું તેમનું વાંચન વિશાળ હતું. તેમની કલ્પનામાં એક ચિત્ર સતત રમતું હતું કે જૈન પ્રાચીન સાહિત્યનું સંશોધન કરી કરાવીને તે ગ્રંથોનું કલાત્મક પ્રકાશન કરાવવું. જૈન સાહિત્ય વિકાસ મંડળ દ્વારા તેમણે પોતાની કલ્પનાને સાકાર કરવા વ્યવસાયમાંથી ફાજલ પડતાં સમયમાં જ્ઞાનયજ્ઞ પ્રજ્વલિત કર્યો. અને ૧૯૬૪ માં તો વ્યવસાયમાંથી સંપૂર્ણ નિવૃત્તિ લઇને જીવનના અંતિમ શ્વાસ સુધી આ જ્ઞાનયજ્ઞને અખંડ અને સતત ઝળહળતો રાખ્યો.

૧૯૪૮ માં સંસ્થાની સ્થાપના કરી ત્યારે તો અમૃતલાલભાઈ વ્યવસાયની અનેકવિધ પ્રવૃત્તિઓ સાથે સંકળાયેલા હતા, છતાંય સ્વ–સંસ્થાપિત સંસ્થાના વિકાસ માટે સક્રિય રસ લીધો. સૌ પ્રથમ તેમણે આ સંસ્થાના ઉપક્રમે 'પંચ પ્રતિક્રમણ સૂત્ર' અંગે વિશદ સંશોધન કાર્ય ઉપાડ્યું. આવશ્યક ક્રિયાના આ ઉપયોગી ગ્રંથને પરિપૂર્ણ અને સાંગોપાંગ બનાવવા માટે સંખ્યાબંધ શાસ્ત્રગ્રંથો વસાવ્યા. દસેક જેટલાં જ્ઞાનભંડારોની મુલાકાતો લીધી. પૂજ્ય શ્રમણ ભગવંતો ખાસ કરીને પૂજ્ય પંન્યાસપ્રવર શ્રી ભદ્રંકરવિજયજી મહારાજ, પૂજ્ય પંન્યાસ શ્રી ધુરંધરવિજયજી મહારાજ સાથે તેમજ વિદ્વાનો અને પંડિતો સાથે સુ–દીર્ઘ પત્રવ્યવહાર કર્યો. આ અંગે જરૂરી ખર્ચ કશાય સંકોચ વગર કર્યો. એટલું જ નહિ પ્રસ્તુત પુસ્તકનું સંશોધન જેમ જેમ આગળ વધતું ગયું જાહેરમાં મૂક્યું. તેમ–તેમ તેને જોયું, તપાસ્યું. ફરી–ફરીને તપાસ્યું અને પૂજ્ય વિદ્વાન શ્રમણોની માન્યતા મેળવીને તેને



॥ ૬૧ ॥

મંડળનો આ પ્રથમ ગ્રંથ એટલે શ્રી પ્રતિક્રમણસૂત્ર પ્રબોધ ટીકા લગભગ બે હજાર પાનામાં ત્રણ ભાગમાં પ્રકટ થયેલ. આ ગ્રંથ પહેલી જ નજરે સર્વત્ર લોકાદર પામ્યો. આજે તો આ 'પ્રબોધ-ટીકા' ધાર્મિક શિક્ષકો તેમજ પ્રતિક્રમણ સૂત્રના અભ્યાસીઓ માટે આધાર ગ્રંથ બની ચૂકેલ છે.

## યોગાનુયોગ પણ કેવો !!!

અમૃતલાલભાઈએ સૌ પ્રથમ સંશોધન અને પ્રકાશન 'પંચ પ્રતિક્રમણ સૂત્ર' પર કર્યું-કરાવ્યું અને તેમના હસ્તકનું છેલ્લું સંશોધિત પ્રકાશન પણ આ જ સૂત્ર પર થયું. આ પ્રકાશન તે 'શ્રાદ્ધ પ્રતિક્રમણ સૂત્ર' પ્રબોધ ટીકાની ત્રીજી આવૃત્તિ. તેમાં પ્રથમની બે આવૃત્તિ કરતાં અનેકવિધ મનનીય સંશોધન આમેજ થયું છે.

જીવનની સંધ્યાએ તે માંદગીના બિછાનેથી નાદુરસ્ત તબિયતે પણ તે વાંચતા, વિચારતા અને સંશોધન માટે ફરી નોંધો કરતા-કરાવતા રહ્યા. તેમની તીવ્ર ઝંખના-કામના હતી કે—

—શ્રાદ્ધ પ્રતિક્રમણ સૂત્ર—પ્રબોધ ટીકા

—સૂરિમંત્ર કલ્પ સમુચ્ચય—ભાગ બીજો અને

—યોગશાસ્ત્ર પ્રથમ-દ્વિતીય પ્રકાશનું

[આ ત્રણેય] પ્રકાશન પોતાની હયાતીમાં થાય પણ વિધાતાને કંઈક બીજું જ મંજુર હતું !!!

આ ત્રણેયમાંથી પ્રબોધ ટીકાની ત્રીજી આવૃત્તિનો પ્રથમ ભાગ તો તે સાદ્યંત જોઈ તપાસી ગયા છે. બાકીના બે ભાગ તથા બે પ્રકાશનો હવે સંસ્થા મારફત બહાર પડશે.

## સંશોધન કાર્ય

મંડળનાં ઉપક્રમે તેમણે સંશોધિત પચ્ચીસથી પણ વધુ ગ્રંથોનું સમાજને પ્રદાન કર્યું છે. આ ગ્રંથો સંસ્કૃત, પ્રાકૃત, હિન્દી, ગુજરાતી અને અંગ્રેજી એમ વિવિધ ભાષામાં પ્રકટ થયા છે. નમસ્કાર મંત્ર, ઉવસગ્ગહરં સ્તોત્ર, લોગસ્સ સૂત્રના ઉપર પ્રબોધ ટીકામાં માહિતી પૂર્ણ છણાવટ થઈ હતી છતાં તે સૂત્રો ઉપર તેમનું અધ્યયન અને ચિંતન ચાલુ રહ્યા અને મંત્ર તથા તંત્રની દ્રષ્ટિએ સંશોધન કરીને વધારે વિશદ અને ગહન ગ્રંથો રૂપે આ સૂત્રો ઉપર સ્વતંત્ર પ્રકાશનો પ્રગટ થયા. જૈન યોગના તેમના અભ્યાસના ફળ સ્વરૂપે યોગસાર, યોગપ્રદીપ, સામ્યશતક, સમતાશતક, ધ્યાનવિચાર પ્રગટ થયા. તદુપરાંત ઋષિમંડળ સ્તવન, અને સૂરિમંત્ર કલ્પ સમુચ્ચય ભાગ-૧, આ વિષયોના જ્ઞાતાઓ માટે માહિતીપૂર્ણ ગ્રંથો બની રહ્યા છે. સૂત્રોનો અભ્યાસ કરતા તેમના ગહન અર્થો પ્રગટ કરવા માટે મંત્ર તથા તંત્રનો અભ્યાસ જરૂરી બન્યો એટલે આ વિષયોમાં તેમણે ઊંડું અધ્યયન કર્યું. છેવટના વર્ષોમાં અનાસક્તિભાવ કેળવાતો ગયો એટલે તેમનું અધ્યયન વિશેષ કરીને "ધ્યાન" ના વિષય ઉપર વધારે કેન્દ્રિત થતું ગયું.

॥ ૬૩ ॥

અમૃતલાલભાઈ સ્વભાવે વૈજ્ઞાનિક હતા. સાચા વૈજ્ઞાનિકને ક્યારેય પોતાના એક સંશોધનથી તૃપ્તિ થતી નથી. પોતાના જ સંશોધનનું તે વધુને વધુ ગહન અને વિશદ સંશોધન કરતો જ રહે છે. અમૃતલાલભાઇ ઉપર જણાવ્યા મુજબ લોગસ્સ સૂત્ર ઉપર એક સંશોધિત ગ્રંથ આપી જ ચૂકયા હતા, છતાંય જીવનનાં અંતિમ વરસોમાં પણ તે આ સૂત્રના ગૂઢાર્થને શોધતા હતા. એ જ પ્રમાણે 'લઘુશાંતિ' નું થોડુંક સંશોધન પણ તે પ્રબોધ ટીકામાં આપી ચૂકયા હતા, છતાંય તેનું વિરાટ અને ગહન સંશોધન કરતા રહ્યા હતા. આ લોગસ્સ સૂત્રના ગૂઢાર્થની હસ્તપ્રત તૈયાર છે અને ઘણા વિદ્વાન શ્રમણોની તેને માન્યતા પણ વરી છે. નાની શાંતિનું સંશોધન હજી તેમની ડાયરીઓમાં અને ફાઇલોમાં છે. જ્યારે શ્રી અરિહંત ચેઈયાણું સૂત્રના ગૂઢાર્થની ફાઈલ તૈયાર છે.

## વિરલ સમન્વય

વિસ્તૃત વટવૃક્ષ જેવા ઉન્નત ધીર અને ગંભીર આ વડીલની છત્રછાયા નીચે વિશાળ કુટુંબ આનંદ કલ્લોલ કરતું હતું. દરેકના ક્ષેમ કુશળની તેઓ ચિંતા કરતા હતા. બીજાની ઉણપો-ભૂલો માફ કરવામાં તેઓ ઉદાર દિલ હતા. તેમની વત્સલતા, જ્ઞાનગોષ્ટિ અને વિનોદમય વાણી સારાયે પરિવારને માટે ચિર-સ્મરણીય રહેશે. તેમના જીવનમાં સાદાઈ, સરળતા, સંયમ અને ચિત્તપ્રસન્નતા સહજ ગુણો હતા. તેમના દેહનો મૂલ્યવાન શણગાર જ સાદાઇ હતી, તેમના ચહેરાપર સદાય સૌમ્યતા અને પ્રસન્નતા જોવા મળતી. શ્રી અને સરસ્વતીનો વિદ્વત્તા અને વિનોદ વૃત્તિનો, શ્રીમંતાઇ અને સાદાઈનો, ભૌતિક સિદ્ધિઓ અને નિરભિમાનતાનો તેમનાં જીવનમાં

વિરલ સમન્વય હતો. 'ત્યાગ કરીને ભોગવો' એ સિદ્ધાંત તેમણે ચરિતાર્થ કર્યો હતો. પુષ્પસમ સુકોમળ તેમનું હૃદય હતું. તેઓ કોઈનું દુઃખ જોઇ શકતા નહી. મદદ માટે આવે તેને ખાલી હાથે જવા દઇ શકતા નહી. પોતાનાથી શકય બધું કરી છૂટે નહિ ત્યાં સુધી તેમને શાંતિ થતી નહિ. આવી રીતે સ્નેહ સંબંધથી તેમની સાથે સંકળાયેલ અનેક વ્યક્તિઓ વિષે કદી જાણી શકાશે નહિ !

## આત્મસાધના

ગત જન્મની કોઈ ઉત્કૃષ્ટ ઈચ્છા પૂરી કરવાને આવ્યા હોય તેમ સમગ્ર જીવન તેમણે જ્ઞાનની આરાધનામાં વિતાવ્યું છે. વિદ્યાર્થી જીવનમાં સંસ્કૃત, ગુજરાતી અને અંગ્રેજી સાહિત્યનો ઊંડો અભ્યાસ, વ્યવસાયમાં રંગ અને રસાયણના ઉપયોગ વિષે ટેકનીકલ જ્ઞાન, ધાર્મિક અને સામાજિક ક્ષેત્રે તેમની સમક્ષ આવેલા પ્રશ્નોમાં તેમણે દર્શાવેલ સમાધાન ખોળતો ચિંતન અને અધ્યયન પ્રેરિત ઉદાર દૃષ્ટિકોણ અને ઉત્તરાકળમાં જિનધર્મનું તત્ત્વચિંતન આમ તેમના સારાય જીવનને આવરી લેતી દીર્ઘ જ્ઞાનઉપાસના દૃષ્ટિએ પડે છે. તેમની જ્ઞાનની પિપાસાએ સૂત્રોના ગૂઢાર્થો ખોળવામાં તૃપ્તિ શોધી–સંશોધન, સ્વાધ્યાય, મનન અને ઊંડા ચિંતનમાંથી તેમને આત્મસ્ફૂરણારૂપે નવો પ્રકાશ લાધતો. અજાણતાં પણ વિરાધના ન થાય તે માટે તેઓ જાગ્રત્ રહેતા અને પોતાને સુઝી આવેલા ગૂઢાર્થો



॥ ૬૯ ॥

માટે શાસ્ત્રમાં આધારો શોધવા અથાક પ્રયત્ન કરતા તથા અનેક વિદ્વાનો અને સાધુ ભગવંતો સાથે તલસ્પર્શી ચર્ચા કરતા. આવા મંથનમાંથી જે જ્ઞાનરૂપી અમૃત મળે તેનો સર્વને લાભ આપવાના શુભ ઉદ્દેશથી તેનું પ્રકાશન કરતાં અને તેને આચરણમાં મુકવા માટે પણ પ્રયત્નશીલ રહેતા. સામાયિક અને પ્રતિક્રમણ ધ્યાન અને કાઉસ્સગ્ગ તેમના માટે ફક્ત વિધિઓ ન હતી પણ કર્મ ખપાવવાના અને આધ્યાત્મિક વિકાસ માટેના અમોઘ સાધનો હતા. Herpes- જેવા રોગમાં થતી તીવ્ર પીડા અને Emphesyma થવાથી ફેફસાં જડ થઈ જતાં દેહને પ્રાણવાયુ ન મળવાથી કેવા કષ્ટો થાય તે તો અનુભવી જ સમજી શકે. શરીરથી અલગ આત્મભાવે પોતાને ભાળીને આ પીડાઓ તેમના માટે પીડા નહોતી રહી. 'રોગદ્વારા પોતાની શુદ્ધિ થઈ રહી છે એમ તે વિચારે તો પીડા થાય છે પણ એનો અનુભવ થતો નથી બલ્કે પ્રભુ પાસેથી કંઈક પામી રહ્યો છું તેમ રોગી અનુભવે છે. સુખ કે દુઃખ દ્વારા આપણું ભલું જ થઇ રહ્યું છે એવો દૃઢ વિશ્વાસ એ જ ભક્તિ છે.' આ તેમના શબ્દોમાં તેમના અનુભવનો નિચોડ છે. જ્ઞાનની આરાધના અને દેહના કષ્ટોનું સમભાવે વેદન એ તેમની આધ્યાત્મિક સાધનાનાં સોપાન બની રહ્યાં. તેના ફળસ્વરૂપે આખરે પ્રગટ થયું ધર્મશ્રવણ કરતાં કરતાં પૂર્ણ સભાન અવસ્થામાં સમાધિ મૃત્યુ.

## સમાધિમરણ

૭ મી જાન્યુઆરી ૧૯૭૭ ને શુક્રવારના સવારે ૬ વાગે હ્રદયરોગનો સખત હુમલો થયો. તુરત ડૉક્ટર આવ્યા. સારવાર આપવામાં આવી ૬–૪૫ વાગે કાંઈક સ્વસ્થ થયા અને ડૉક્ટર પણ તેઓ હવે ભયમુક્ત છે એવું આશ્વાસન પામીને ઘરે ગયા, આવી રહેલા અંતકાળને તેઓ પારખી ગયા હતા એટલે તેમણે બાકી રહેલા શેષ કાળમાં દેહના કષ્ટોથી નિર્લેપ રહીને ચીર–વિદાય લેવાની તૈયારી શરૂ કરી. બુઝાતો દીપક થોડી પળો માટે ઝળહળી રહ્યો. બધા કુટુંબીજનોને તેમણે બોલાવ્યા અને યાદ કરીને ખમાવ્યા. સંયોગવશાત્ સાધ્વીજી મહારાજનો લાભ મળ્યો. તેમને વંદન કર્યું. તેમની પાસે માંગલિક સાંભળ્યું અને વ્રત પચ્ચખાણ કર્યા. જિન-પૂજા અને જ્ઞાનપૂજા કરી અને ધર્મશ્રવણ શરૂ કર્યું. નવકારમંત્ર, ઉવસગ્ગહરં, સંતિકરં અને ભક્તામર પૂરા થયા એટલે તેમણે લઘુશાંતિ શરૂ કરવાનું કહ્યું. તેમાં ગાનારથી વિસરાઇ ગયેલી બીજી ગાથાની પંક્તિને પણ પોતે યાદ કરી આપી. વિષાદમય પળો પસાર થતી ગઇ અને શાંતિની છેલ્લી ગાથાની પહેલી પંક્તિ "સર્વ મંગલ માંગલ્યમ...." સાંભળીને તેમણે ૭–૪૫ વાગે સદાયને માટે આંખ મીંચી દીધી. થોડી પળો માટે તેમના ચહેરા પર કોઇ અનોખો અને દિવ્ય પ્રકાશ રેલાઈ રહ્યો.

અમૃતલાલભાઇ પૂર્ણ ખીલેલાં લાલ ગુલાબ જેવું સુગંધી અને સુંદર જીવન જીવ્યા અને મૃત્યુને પણ ધન્યાતિધન્ય બનાવી ગયા.

પ્રસ્તુત પુસ્તકનું પ્રકાશન આજ તેમનો પુણ્યવંતો સંસ્પર્શ પામ્યા વિના પ્રકટ થાય છે તેથી હૈયે વિષાદની ઘેરી લાગણી ઘૂંટાય છે. આ સાથે જ તેમના જીવનની છેલ્લી તીવ્રેચ્છા આજ મોડે મોડે પણ સાકાર બને છે તેથી અલ્પાતિઅલ્પ આનંદ પણ થાય છે.

આ સિવાયનાં અમૃતલાલભાઇના બીજા અધૂરાં સંશોધનો બનતી ત્વરાએ પ્રકાશિત કરવાં માટે શાસન દેવતાઓ અમને બળ અને બુદ્ધિ આપે તેવી પ્રાર્થના સહ.

પ્રમુખ,
**જૈન સાહિત્ય વિકાસ મંડળ**
ઇર્લા બ્રીજ, પાર્લા, મુંબઇ.



॥ श्रीऋषभदेवस्वामिने नमः ॥

॥ श्रीशंखेश्वरपार्श्वनाथाय नमः ॥

॥ श्रीसद्गुरुदेवेभ्यो नमः ॥

परमार्हतकुमारपालभूपालप्रतिबोधक–कलिकालसर्वज्ञ–श्रीहेमचन्द्राचार्यप्रणीतं

स्वोपज्ञवृत्तिविभूषितं

# योगशास्त्रम् ।

——*——

## प्रथमः प्रकाशः

॥ अर्हँ ॥

प्रणम्य सिद्धाद्भुतयोगसम्पदे श्रीवीरनाथाय विमुक्तिशालिने ।
स्वयोगशास्त्रार्थविशेषनिर्णयो भव्यावबोधाय मया विधास्यते ॥१॥

॥ १ ॥

तस्य चायमादिश्लोकः—

**नमो दुर्वाररागादिवैरिवारनिवारिणे ।**
**अर्हते योगिनाथाय महावीराय तायिने ॥१॥**

अत्र 'महावीराय' इति विशेष्यपदम् । विशेषेण ईरयति क्षिपति कर्माणीति वीरः,

" विदारयति यत् कर्म तपसा च विराजते ।
तपोवीर्येण युक्तश्च तस्माद् वीर इति स्मृतः ॥" [ ]

इति लक्षणाद् निरुक्ताद्वा वीरः । महांश्चासावितरवीरापेक्षया वीरश्च महावीरः । इदं च जन्ममहोत्सवसमये 'तनुशरीरोऽयं कथं जलप्राग्भारभारं सोढा' इति शक्रशङ्काशङ्कुसमुद्धरणाय भगवता वामचरणाङ्गुष्ठनिपीडितसुमेरुशिखरप्रकम्पमानमहीतलोल्लसितसरित्पतिक्षोभशङ्कितब्रह्माण्डभाण्डोदरदर्शनप्रयुक्तावधिज्ञानज्ञातप्रभावातिशयविस्मितेन वास्तोष्पतिना[1] नाम निर्ममे 'महावीरोऽयम्' इति । तत् पुनरनादिभवप्ररूढप्रौढकर्मसमुन्मूलनबलेन[2] यथार्थीकृतं[3] भगवता । वर्धमान इति तु नाम मातरपितराभ्यां कृतम् । श्रमणो देवार्य इति च जनपदेन । तस्मै नम इति सम्बन्धः । शेषाणि[4] विशेषणानि । तैस्तु सद्भूतार्थप्रतिपादनपरैश्चत्वारो भगवदतिशयाः प्रकाश्यन्ते । तत्र पूर्वार्धेनापायापगमाति-

१ इन्द्रेण ॥ २ °अपनयन°—खं० ॥ ३ °कृतं च भगवता—मु० खं० ॥ ४ °णानि स्पष्टानीति—खं० ॥

शयः, अपायभूता हि रागादयः, तदपगमेन भगवतः स्वरूपलाभः १ । 'अर्हते' इत्यनेन च सकलसुरासुरमनुजजनितपूजाप्रकर्षवाचिना पूजातिशयः २ । 'योगिनाथाय' इत्यनेन तु ज्ञानातिशयः, योगिनोऽवधिजिनादयः, तेषां नाथो विमलकेवलवलावलोकितलोकालोकस्वभावो भगवानेव ३ । 'तायिने' इत्यनेन तु वचनातिशयः ४ । तायी सकलसुरासुरमनुजतिरश्चां पालकः । पालकत्वं च सकलभुवनाभयदानसमर्थसर्वभाषापरिणामिधर्मदेशनाद्वारेण[1] भगवत एव । पालकत्वमात्रं तु स्वापत्यादेर्व्याघ्रादीनामपि सम्भवति । तदेवं चतुरतिशयप्रतिपादनद्वारेण भगवतो महावीरस्य पारमार्थिकी स्तुतिरभिहितेति ॥१॥

पुनर्योगगर्भां स्तुतिमाह—

**पन्नगे च सुरेन्द्रे च कौशिके पादसंस्पृशि ।**
**निर्विशेषमनस्काय श्रीवीरस्वामिने नमः ॥२॥**

पन्नगस्य कौशिकत्वं पूर्वभवभूत[2]कौशिकगोत्रत्वेन 'बुध्यस्व कौशिक' इति भगवता तथैव भाषितत्वेन च, सुरेन्द्रस्य तु कौशिकत्वं कौशिकाभिधानात् । पादस्पर्शश्च पन्नगस्य दशनवुद्धया सुरेन्द्रस्य च भक्त्यतिशयेन । निर्विशेषमनस्कत्वं च भगवतो द्वेष-रागविशेषरहितत्वेन माध्यस्थ्यात् ॥

१ °समग्रभाषा°—मु० ॥ २-ख० ग० । °भवस्थित०—मु० ॥

सम्प्रदायगम्यश्चायमर्थस्तथाहि—

श्रीवीरः प्राणतस्वर्गपुष्पोत्तरविमानतः । पूर्वजन्मार्जितोर्जस्वितीर्थकृन्नामकर्म्मकः ॥१॥
ज्ञानत्रयपवित्रात्मा सिद्धार्थनृपवेश्मनि । त्रिशलाकुक्षौ सरस्यां राजहंस इवागमत् ॥२॥ युग्मम् ।
[1]सिंहो गजो वृषः साभिषेकश्रीः स्रक् शशी रविः । महाध्वजः पूर्णकुम्भः पद्मसरः सरित्पतिः ॥३॥
विमानं रत्नपुञ्जश्च निर्धूमाग्निरिति क्रमात् । देवी चतुर्दश स्वप्नानपश्यत्तत्र गर्भगे ॥४॥
त्रैलोक्योद्द्योतकृद् देवदानवासनकम्पकृत् । अपि नारकजन्तूनां क्षणदत्तसुखासिकम् ॥५॥
प्रभुः सुखंसुखेनैव जन्म प्राप शुभे दिने । तत्कालं दिक्कुमार्यश्च सूतिकर्माणि चक्रिरे ॥६॥ [ युग्मम् ]
अथ जन्माभिषेकाय कृत्वोत्सङ्गे जगत्प्रभुम् । मेरुमूर्ध्नि सुधर्मेन्द्रः सिंहासनमशिश्रियत् ॥७॥
इयन्तं वारिसम्भारं कथं स्वामी सहिष्यते ? । इत्याशशङ्के शक्रेण भक्तिकोमलचेतसा ॥८॥
तदाशङ्कानिरासाय लीलया परमेश्वरः । मेरुशैलं वामपादाङ्गुष्ठाग्रेण न्यपीडयत् ॥९॥
[2]शिरांसि मेरोरनमन्नमस्कर्तुमिव प्रभुम् । तदन्तिकमिवायातुमचलंश्च कुलाचलाः ॥१०॥
अतुच्छमुच्छलन्ति स्म स्नात्रं कर्तुमिवार्णवाः । विवेपे सत्वरं तत्र नर्त्तनाभिमुखेव भूः ॥११॥

१ सार्धश्लोकः त्रिषष्टि० १०।२।३०-३१ ॥
२ इत आरभ्य ॥३५॥ पर्यन्तमष्टाविंशतिः श्लोकाः समानप्रायाः त्रिषष्टि० १०।२।६०-८७ ॥



5

10

॥ ९ ॥

किमेतदिति सञ्चिन्त्यावधिज्ञानप्रयोगतः । लीलायितं भगवतो विदाञ्चक्रे विडौजसा ॥१२॥
स्वामिन्ननन्यसामान्यं सामान्यो मादृशो जनः । विदाङ्करोतु माहात्म्यं कथङ्कारं तवेदृशम् ॥१३॥
तन्मिथ्यादुष्कृतं भूयाच्चिन्तितं यन्मयाऽन्यथा । इतीन्द्रेण ब्रुवाणेन प्रणेमे परमेश्वरः ॥१४॥
सानन्दं वादितातोद्यं चक्रे शक्रैर्जगद्गुरोः । तीर्थगन्धोदकैः पुण्यैरभिषेकमहोत्सवः ॥१५॥
अभिषेकजलं तत्तु सुरासुरनरोरगाः । ववन्दिरे मुहुः सर्वाङ्गीणं च परिचिक्षिपुः ॥१६॥ 5
प्रभुस्नात्रजलालीढा वन्दनीया मृदप्यभूत् । गुरूणां किल संसर्गाद् गौरवं स्याल्लघोरपि ॥१७॥
निवेश्येशानशक्राङ्के सौधर्मेन्द्रोऽप्यथ प्रभुम् । स्नपयित्वाऽर्चयित्वाऽथ[1] कृत्वाऽऽरात्रिकमस्तवीत् ॥१८॥
नमोऽर्हते[2] भगवते स्वयम्बुद्धाय वेधसे । तीर्थङ्करायादिकृते पुरुषेषूत्तमाय ते ॥१९॥
नमो लोकप्रदीपाय लोकप्रद्योतकारिणे । लोकोत्तमाय लोकाधीशाय लोकहिताय ते ॥२०॥
नमस्ते पुरुषवरपुण्डरीकाय शम्भवे । पुरुषसिंहाय पुरुषैकगन्धद्विपाय ते ॥२१॥ 10
चक्षुर्दायाभयदाय बोधिदायाध्वदायिने । धर्मदाय धर्मदेष्ट्रे नमः शरणदाय ते ॥२२॥
धर्मसारथये धर्मनेत्रे धर्मैकचक्रिणे । व्यावृत्तच्छद्मने सम्यग्ज्ञानदर्शनधारिणे ॥२३॥
जिनाय ते जापकाय तीर्णाय तारकाय च । विमुक्ताय मोचकाय नमो बुद्धाय बोधिने ॥२४॥ ॥ ९ ॥

१—क. ख. ग. । स्नपयित्वार्चयित्वारात्रिकं कृत्वेति तुष्टुवे-मु० ॥ २ तुलनार्थं दृश्यतां ' नमुत्थुणं ' सूत्रम् ॥

सर्व्वज्ञाय नमस्तुभ्यं स्वामिने सर्वदर्शिने । सर्वातिशयपात्राय[1] कर्माष्टकनिषूदिने ॥२५॥
तुभ्यं क्षेत्राय पात्राय तीर्थाय परमात्मने । स्याद्वादवादिने वीतरागाय मुनये नमः ॥२६॥
पूज्यानामपि पूज्याय महद्भ्योऽपि महीयसे । आचार्याणामाचार्याय ज्येष्ठानां ज्यायसे नमः ॥२७॥
नमो विश्वसृजे तुभ्यं योगिनाथाय योगिने । पावनाय पवित्रायानुत्तरायोत्तराय च ॥२८॥
योगाचार्याय सम्प्रक्षालनाय प्रवराय च । अग्र्याय[2] वाचस्पतये मङ्गल्याय नमोऽस्तु ते ॥२९॥ 5
[3]तमःपरस्तादुदितायैकवीराय[4] भास्वते । ॐभूर्भुवःस्वरितिवाक्स्तवनीयाय ते नमः ॥३०॥
नमः सर्व्वजनीनाय सर्व्वार्थायामृताय च । उदितब्रह्मचर्यायाप्ताय पारगताय ते ॥३१॥
नमस्ते दक्षिणीयाय निर्व्विकाराय तायिने । वज्रऋषभनाराचवपुषे तत्त्वदृश्वने ॥३२॥

---

१ तुलनार्थं दृश्यतां सिद्धसेनाचार्यप्रणीतः शक्रस्तवः [ नमस्कारस्वाध्याये संस्कृतविभागे पृ० ३०२ ] ॥
२ अग्राय—शां. खं. त्रिषष्टि० १० । २ । ८१ ॥
३ नमः पुरस्ता°—मु० । तुलना— 10
"यः परात्मा परं ज्योतिः परमः परमेष्ठिनाम् । आदित्यवर्णं तमसः परस्तादामनन्ति यम् ॥" वी० स्तो० १ । १ ।
"त्वामामनन्ति मुनयः परमं पुमांसमादित्यवर्णममलं तमसः परस्तात् ।" –भक्ता० २३ ॥
४ °धीराय—खं. ॥

नमः कालत्रयज्ञाय जिनेन्द्राय स्वयम्भुवे । ज्ञानबलवीर्यतेजःशक्त्यैश्वर्यमयाय ते ॥३३॥
आदिपुंसे नमस्तुभ्यं नमस्ते परमेष्ठिने । नमस्तुभ्यं महेशाय ज्योतिस्तत्त्वाय ते नमः ॥३४॥
तुभ्यं सिद्धार्थराजेन्द्रकुलक्षीरोदधीन्दवे । महावीराय धीराय त्रिजगत्स्वामिने नमः ॥३५॥
इति स्तुत्वा नमस्कृत्य गृहीत्वा परमेश्वरम् । आनीय तत्क्षणं मातुरर्पयामास वासवः ॥३६॥
स्ववंशवृद्धिकरणाद् यथार्थं पितरौ तदा । नामधेयं विदधतुर्वर्द्धमान इति प्रभोः ॥३७॥
सो[१]ऽहंपूर्व्विकया भक्तैः सेव्यमानः सुरासुरैः । दृशा पीयूषवर्षिण्या सिञ्चन्निव वसुन्धराम् ॥३८॥
अष्टोत्तरसहस्रेण लक्षणैरुपलक्षितः । निसर्गेण गुणैर्वृद्धो वयसा ववृधे क्रमात् ॥३९॥
राजपुत्रैः सवयोभिः समं निःसीमविक्रमः । वयोऽनुरूपक्रीडाभिः कदाचित् क्रीडितुं ययौ ॥४०॥
तदा ज्ञात्वावधिज्ञानान्मध्येसुरसभं हरिः । धी[२]रा अनु महावीरमिति वीरमवर्णयत् ॥४१॥
क्षोभयिष्यामि तं वी[३]रमेषोऽहमिति मत्सरी । आजगामामरः कोऽपि यत्र क्रीडन्नभूद्विभुः ॥४२॥
कुर्व्वत्यामलकीक्रीडां राजपुत्रैः सह प्रभौ । सो[४]ऽववेष्टद्विटपिनं भुजगीभूय मायया ॥४३॥
तत्कालं राजपुत्रेषु वित्रस्तेषु दिशो दिशि । स्मित्वा रज्जुमिवोत्क्षिप्य तं चिक्षेप क्षितौ विभुः ॥४४॥

---

१ इत आरभ्याष्टादश श्लोकाः समानप्रायाः त्रिषष्टि० १०। २। १०१–११८॥
२ वीरा-क. ख. ॥ ३ —ख. । धीर° मु. ॥ ४ ऽविवेष्ट° -ख. ॥

5

10

सव्रीडाः क्रीडितुं तत्र कुमाराः पुनराययुः । कुमारीभूय सोऽप्यागात् सर्व्वेऽप्यारुरुहुस्तरुम् ॥४५॥
पादपाग्रं कुमारेभ्यः प्राप प्रथमतः प्रभुः । यद्वा कियदमुष्येदं यो लोकाग्रं गमिष्यति ॥४६॥
शुशुभे भगवांस्तत्र मेरुशृङ्ग इवार्यमा । लम्बमाना बभुः शाखास्वन्ये शाखामृगा इव ॥४७॥
जिग्ये भगवता तत्र कृतश्चासीदयं पणः । जयेद्य इह स ह्यन्यान् पृष्ठमारुह्य वाहयेत् ॥४८॥
आरुह्यावाहयद्वाहानिव वीरः कुमारकान् । आरुरोह सुरस्यापि पृष्ठं प्रष्ठो महौजसाम् ॥४९॥ 5
ततः करालं वेतालरूपमाधाय दुष्टधीः । भूधरानप्यधरयन् प्रारब्धो वर्धितुं सुरः ॥५०॥
वक्त्रे पातालकल्पेऽस्य जिह्वया तक्षकायितम् । पिङ्गैस्तुङ्गे शिरःशैले केशैर्दावानलायितम् ॥५१॥
तस्यातिदारुणे दंष्ट्रे अभूतां क्रकचाकृती । जाज्वल्यमाने अङ्गारशकट्याविव लोचने ॥५२॥
घोणारन्ध्रे महाघोरे महीधरगुहे इव । भृकुटीभङ्गुरे भीमे महोरग्याविव भ्रुवौ ॥५३॥
व्यरंसीद् वर्धनान्नासौ यावत्तावन्महौजसा । आहत्य मुष्टिना पृष्ठे स्वामिना वामनीकृतः ॥५४॥ 10
एवं च भगवद्धैर्यं[1] साक्षात्कृत्येन्द्रवर्णितम् । प्रभुं नत्वात्मरूपेण निजं धाम जगाम सः ॥५५॥[2]
मातापितृभ्यामन्येद्युः प्रारब्धेऽध्यापनोत्सवे । आः सर्व्वज्ञस्य शिष्यत्वमितीन्द्रस्तमुपास्थित[3] ॥५६॥

---

१ भगवद्वीर्यं साक्षात् कृत्वेन्द्र' क. ख. ङ. ॥ २ अर्धतृतीयाः श्लोकाः समानाः त्रिषष्टि० १० । २ । १२०-१२२ ॥
३ °पास्थितः-सर्वत्र पाठः । ०पास्थित-जैमुसं०, त्रिषष्टि० १० । २ । १२० ॥

उपाध्यायासने तस्मिन् वासवेनोपवेशितः । प्रणम्य प्रार्थितः स्वामी शब्दपारायणं जगौ ॥५७॥
इदं भगवतेन्द्राय प्रोक्तं शब्दानुशासनम् । उपाध्यायेन तच्छ्रुत्वा लोकेष्वैन्द्रमितीरितम् ॥५८॥
मातापित्रोरनुरोधादष्टाविंशतिवत्सरीम् । कथञ्चिद् गृहवासेऽस्थात् प्रव्रज्योत्कण्ठितः प्रभुः ॥५९॥
अथ पूर्णायुषोः पित्रोर्देवभूयमुपेयुषोः । ईहाञ्चक्रे परिव्रज्यां निरीहो राज्यसम्पदः ॥६०॥
भगवन् मा क्षते क्षारं क्षैप्सीरिति सगद्गदम् । भ्रात्रोक्त्वा ज्यायसा नन्दिवर्द्धनेनोपरोधितः ॥६१॥
भावतो यतिरेवाथ[1] नानाभरणभूषितः । कायोत्सर्गं श्रयंश्चित्रशालिकायामवस्थितः ॥६२॥
एषणीयप्रासुकान्नपानवृत्तिर्महामनाः[2] । वर्षमेकं कथमपि भगवानत्यवाहयत् ॥६३॥
तीर्थं प्रवर्त्तयेत्यभ्यर्थितो लोकान्तिकामरैः । यथाकामीनमर्थिभ्यो[3] दानं दातुं प्रचक्रमे ॥६४॥
द्वैतीयीकेन[4] वर्षेण विनिर्मायानृणां भुवम् । औज्झद्राज्यश्रियं स्वामी मन्यमानस्तृणाय ताम् ॥६५॥
सर्वैर्देवनिकायैश्च कृतनिष्क्रमणोत्सवः । सहस्रवाह्यामारुह्य शिबीं चन्द्रप्रभाभिधाम् ॥६६॥
ज्ञातखण्डवने गत्वा सर्वसावद्यवर्ज्जनात् । प्रव्रज्यामग्रहीदह्नश्चतुर्थप्रहरे प्रभुः ॥६७॥

---

१ यतिरेवाहं खं. ॥ २ श्लोकद्वयं त्रिषष्टि० १० । २ । १६८-१६९ ॥ ३ यथाकामितम-त्रिषष्टि० १० । २ । १६९ ॥ ४ द्वैतीयैकेन शां. । द्वितीयैकेन खं. ॥

जगन्मनोगतान् भावान् प्रकाशयदथ प्रभोः। ज्ञानं तुरीयं संजज्ञे मनःपर्ययसंज्ञकम् ॥६८॥
ततश्च गत्वा सन्ध्यायां कर्म्मारग्रामसन्निधौ[1]। गिरीन्द्र इव निष्कम्पः कायोत्सर्गं व्यधाद्विभुः ॥६९॥
गोपालेनाथ यामिन्यां निष्कारणकृतक्रुधा। उपद्रोतुं समारेभे भगवानात्मवैरिणा ॥७०॥
अथेन्द्रेणावधिज्ञानाज्जज्ञे प्रभुमुपद्रवन्। स दुःशीलो महाशैलमाखुश्चिखनिषन्निव ॥७१॥
कल्याणीभक्तिरागाच्च शक्रः प्रभुपदान्तिकम्। नष्टो मत्कुणनाशं च स गोपहतकः क्वचित् ॥७२॥
[2]ततः प्रदक्षिणीकृत्य त्रिर्मूर्ध्ना प्रणिपत्य च। इति विज्ञपयाञ्चक्रे प्रभुः प्राचीनबर्हिषा ॥७३॥
भविष्यति द्वादशाब्दान्युपसर्गपरम्परा। तां निषेधितुमिच्छामि[3] भगवन् पारिपार्श्विकः ॥७४॥
समाधिं पारयित्वेन्द्रं भगवानुचिवानिति। नापेक्षाञ्चक्रिरेऽर्हन्तः परसाहायकं क्वचित् ॥७५॥
[4]ततो जगद्गुरुः शीतलेश्यः शीतमयूखवत्। तपस्तेजोदुरालोकोऽधिपतिस्तेजसामिव ॥७६॥

१ कुमरि°—जैमुसं०। तु०—"अणणया य भयवं परिब्भमन्तो पत्तो कम्मारगामंतियं।"—चउप्पन्न० पृ० २७४॥
२ श्लोकत्रय त्रिषष्टि० १०। ३। २७-२९॥ ३ तत्तां निरोद्धुमिच्छामि-शां.। तत्तां निषेद्धुमिच्छामि-खं.॥
४ नव श्लोकाः त्रिषष्टि० १०। ३। ३७-४५। तुलना—"तए णं समणे भगवं महावीरे अणगारे जाए ईरियासमिए भासासमिए एसणासमिए आदाणभंडमत्तनिक्खेवणासमिए उच्चारपासवणखेलजल्लसंघाणपारिट्ठावणियासमिए मणसमिए वयसमिए कायसमिए मणगुत्ते वयगुत्ते कायगुत्ते गुत्ते गुत्तिंदिए गुत्तबंभयारी अकोहे अमाणे अमाए


5
10

शौण्डीर्यवान् गज इव सुमेरुरिव निश्चलः। सर्व्वस्पर्शान् सहिष्णुश्च यथैव हि वसुन्धरा ॥७७॥
अम्भोधिरिव गम्भीरो मृगेन्द्र इव निर्भयः। मिथ्यादृशां दुरालोकः सुहुतो हव्यवाडिव ॥७८॥
खड्गिश्रृङ्गमिवैकाकी जातस्थामा महोक्षवत्। गुप्तेन्द्रियः कूर्म्म इवाहिरिवैकान्तदत्तदृक् ॥७९॥
निरञ्जनः शङ्ख इव जातरूपः सुवर्णवत्। विप्रमुक्तः खग इव जीव इवास्खलद्गतिः ॥८०॥

---

अलोहे संते पसंते उवसंते परिनिव्वुडे अणासवे अममे अकिंचणे छिन्नगंथे निरुवलेवे, कंसपाई इव मुक्कतोए १, संखे इव निरंजणे २, जीवे इव अप्पडिहयगई ३, गगणमिव निरालंबणे ४, वाऊ इव अप्पडिबद्धे ५. सारयसलिलं व सुद्धहियए ६, पुक्खरपत्तं व निरुवलेवे ७, कुम्मे इव गुत्तिंदिए ८, खग्गिविसाणं व एगजाए ९, विहग इव विप्पमुक्के १०, भारंडपक्खी इव अप्पमत्ते ११, कुंजरे इव सोंडीरे १२, वसहो इव जायथामे १३, सीहो इव दुद्धरिसे १४, मंदरे इव निक्कंपे १५, सागरो इव गंभीरे १६, चंदो इव सोमलेसे १७, सूरो इव दित्ततेए १८, जच्चकणगं व जायरूवे १९, वसुंधरा इव सव्वफासविसहे २०, सुहुयहुयासणो इव तेयसा जलंते २१॥ नत्थि णं तस्स भगवतस्स कत्थइ पडिबंधे। से अ पडिबंधे चउव्विहे पन्नत्ते, तं जहा–दव्वओ खित्तओ कालओ भावओ।...॥ ११८ ॥ से ण भगवं वासावासवज्जं अट्ठ गिम्हहेमंतिए मासे गामे एगराइए नगरे पंचराइए वासीचंदणसमाणकप्पे समतिणमणिलेट्ठुकचणे समदुक्खसुहे इहलोगपरलोगअप्पडिबद्धे जीवियमरणे अ निरवकंखी संसारपारगामी कम्मसत्तुनिग्घायणट्ठाए अब्भुट्ठिए एवं च णं विहरइ ॥ ११९ ॥" कल्पसू० ॥

व्योमेवानाश्रयो[1] भारुण्डपक्षीवाप्रमद्वरः । अम्भोजिनीदलमिवोपलेपपरिवर्जितः ॥८१॥
शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि । इहामुत्र सुखे दुःखे भवे मोक्षे समाशयः ॥८२॥
निष्कारणैककारुण्यपरायणमनस्तया । मज्जद् भवोदधौ मुग्धमुद्दिधीर्षुरिदं जगत् ॥८३॥
प्रभुः प्रभञ्जन इवाप्रतिबद्धोऽब्धिमेखलाम् । नानाग्रामपुरारण्यां विजहार वसुन्धराम् ॥८४॥
देशं दक्षिणचावालमवाप्य प्रभुरन्यदा । श्वेतवीं[2] नगरीं गच्छन्नित्यूचे गोपदारकैः ॥८५॥
देवार्यायमृजुः पन्थाः श्वेतवीमुपतिष्ठते[3] । किन्त्वन्तरेऽस्य कनकखलाख्यस्तापसाश्रमः ॥८६॥
स हि दृग्विषसर्पेणाधिष्ठितो वर्त्ततेऽधुना । वायुमात्रैकसञ्चारोऽप्रचारः पक्षिणामपि ॥८७॥
विहाय तदमुं मार्गं वक्रेणाप्यमुना व्रज । सुवर्णेनापि किं तेन कर्णच्छेदो भवेद्यतः ॥८८॥
तं चार्हं प्रभुरज्ञासीद् यदसौ पूर्वजन्मनि । क्षपकः पारणकार्थं विहर्त्तुं वसतेरगात् ॥८९॥
गच्छता तेन मण्डूकी पादपाताद्विराधिता । आलोचनार्थमेतस्य दर्शिता क्षुल्लकेन सा ॥९०॥
सोऽथ प्रत्युत मण्डूकीर्दर्शयन् लोकमारिताः । ऊचे क्षुल्लं मया क्षुद्र किमेता अपि मारिताः ॥९१॥

5

10

१ ०श्रय. शश्वत् भारुण्ड इव तत्परः-शां. । तु०—पृ० १० टि० ४ । "भारण्ड इवाप्रमत्तो व्योमेव च निराश्रयः ।" त्रिषष्टि० १० । ३ । ४२ ॥ २ श्वेतम्बीं—मु० । एवमग्रेऽपि ॥ ३ इत आरभ्य ॥१३९॥ श्लोकपर्यन्तं सर्वं चण्डकौशिककथानकं समानं त्रिषष्टि० १० । ३ । २२५–२७९ ॥

तूष्णीकोऽभूत्ततः क्षुल्लोऽमंस्त चैवं विशुद्धधीः । महानुभावो यदसौ सायमालोचयिष्यति ॥९२॥
आवश्यकेऽप्यनालोच्य यावदेष निषेदिवान् । क्षुल्लकोऽचिन्तयत्तावद्विस्मृताऽस्य विराधना ॥९३॥
अस्मारयच्च तां भेकीमालोचयसि किं नहि । क्षपकोऽपि क्रुधोत्थाय क्षुल्लं हन्मीति धावितः ॥९४॥
कोपान्धश्च ततः स्तम्भे प्रतिफल्य व्यपद्यत । विराधितश्रामण्योऽसौ ज्योतिष्केषूदपद्यत ॥९५॥
स च्युत्वा कनकखले सहस्रार्द्धतपस्विनाम् । पत्युः कुलपतेः पत्न्याः पुत्रोऽभूत् कौशिकाह्वयः ॥९६॥ 5
तत्र कौशिकगोत्रत्वादासन्नन्येऽपि कौशिकाः । अत्यन्तकोपनत्वाच्च स ख्यातश्चण्डकौशिकः ॥९७॥
श्राद्धदेवातिथित्वं च तस्मिन् कुलपतौ गते । असौ कुलपतिस्तत्र तापसानामजायत ॥९८॥
मूर्च्छया वनखण्डस्य सोऽन्तर्भ्राम्यन्नहर्निशम् । अदात् कस्यापि नादातुं पुष्पं मूलं फलं दलम् ॥९९॥
विशीर्णमपि योऽगृह्णाद्वने तत्र फलादिकम् । उत्पाट्य परशुं यष्टिं लोष्टुं[१] वा तं जघान सः ॥१००॥
फलाद्यलभमानास्तु सीदन्तस्ते तपस्विनः । पतिते लगुडे काका इव जग्मुर्दिशो दिशम् ॥१०१॥ 10
अन्येद्युः कण्टिकाहेतोः कौशिके बहिरीयुषि । अभाङ्क्षुर्मङ्क्षु राजन्याः श्वेतव्या एत्य तद्वनम् ॥१०२॥
अथ व्यावर्त्तमानस्य गोपास्तस्य न्यवीविदन् । पश्य पश्य वनं कैश्चिद् भज्यते भज्यते तव ॥१०३॥
जाज्वल्यमानः क्रोधेन हविषेव हुताशनः । अकुण्ठधारमुद्यम्य कुठारं सोऽभ्यधावत ॥१०४॥ 

---

१ लोष्टं—मु. ॥

राजपुत्रास्ततो नेशुः श्येनादिव शकुन्तयः। स्खलित्वा च पपातायं यमवक्त्र इवावटे ॥१०५॥
पततः पतितस्तस्य सम्मुखः परशुः शितः। शिरो द्विधा कृतं तेन ही विपाकः कुकर्मणाम् ॥१०६॥
स विपद्य वनेऽत्रैव चण्डोऽहिर्दृग्विषोऽभवत्। क्रोधस्तीव्रानुबन्धो हि सह याति भवान्तरे ॥१०७॥
अवश्यं चैष बोधार्ह इति बुद्ध्या जगद्गुरुः। आत्मपीडामगणयन्नृजुनैव पथा ययौ ॥१०८॥
अभवत्पदसञ्चारसुषमीभूतवालुकम्। उदपानावहत्कुल्यं शुष्कजर्जरपादपम् ॥१०९॥
जीर्णपर्णचयास्तीर्णं कीर्णं वल्मीकपर्व्वतैः। स्थलीभूतोटजं जीर्णारण्यं न्यविशत प्रभुः ॥११०॥
तत्र चाथ जगन्नाथो यक्षमण्डपिकान्तरे। तस्थौ प्रतिमया नासाप्रान्तविश्रान्तलोचनः ॥१११॥
ततो दृष्टिविषः सर्प्पः सदर्प्पो भ्रमितुं बहिः। बिलान्निस्सरज्जिह्वा कालरात्रिमुखादिव ॥११२॥
भ्रमन् सोऽनुवनं रेणुसंक्रामद्भोगलेखया। स्वाज्ञालेखामिव लिखन्नीक्षाञ्चक्रे जगद्गुरुम् ॥११३॥
अत्र मां किमविज्ञाय किमवज्ञाय कोऽप्यसौ। आः प्रविष्टो निराशङ्कं निष्कम्पः शङ्कुवत् स्थितः ॥११४॥
तदेनं भस्मसादद्य करोमीति विचिन्तयन्। आध्मायमानः कोपेन फटाटोपं चकार सः ॥११५॥
ज्वालामालामुद्वमन्त्या निर्दहन्त्या लताद्रुमान्। भगवन्तं दृशाऽपश्यत् स्फारफूत्कारदारुणः ॥११६॥
दृष्टिज्वालास्ततस्तस्य ज्वलन्त्यो भगवत्तनौ। विनिपेतुर्दुरालोका उल्का इव दिवो गिरौ ॥११७॥

5

10

प्रभौ[1] महाप्रभावाढ्ये प्रभवन्ति स्म नैव ताः। महानपि मरुन्मेरुं किं कम्पयितुमीश्वरः ॥११८॥
दारुदाहं न दग्धोऽसावद्यापीति क्रुधा ज्वलन्। दर्शं दर्शं दिनकरं दृग्ज्वालाः सोऽमुचत् पुनः ॥११९॥
सम्पन्नासु प्रभौ वारिधाराप्रायासु तास्वपि। ददंश दन्दशूकोऽसौ निःशूकः पादपङ्कजे ॥१२०॥
दृष्ट्वा दृष्ट्वाऽपचक्राम स्वविषोद्रेकदुर्म्मदः। यत् पतन् मद्विषाक्रान्तो मृद्नीयादेष मामपि ॥१२१॥
दशतोऽप्यसकृत्तस्य न विषं प्राभवत् प्रभौ। गोक्षीरधाराधवलं केवलं रक्तमक्षरत् ॥१२२॥
ततश्च पुरतः स्थित्वा किमेतदिति चिन्तयन्। वीक्षाञ्चक्रे जगन्नाथं वीक्षापन्नः स पन्नगः ॥१२३॥
ततो निरूप्य रूपं तदनुरूपं जगद्गुरोः। कान्तसौम्यतया[2] मङ्क्षु विध्याते तद्विलोचने ॥१२४॥
उपसन्नं च तं ज्ञात्वा बभाषे भगवानिति। चण्डकौशिक बुध्यस्व बुध्यस्व ननु मा मुहः ॥१२५॥
श्रुत्वा तद् भगवद्वाक्यमूहापोहं वितन्वतः। पन्नगस्य समुत्पेदे स्मरणं पूर्वजन्मनाम् ॥१२६॥
स त्रिः प्रदक्षिणीकृत्य ततश्च परमेश्वरम्। निष्कषायः सुमनसा[3]ऽनशनं प्रत्यपद्यत ॥१२७॥
कृतानशनकर्म्माणं निष्कर्माणं महोरगम्। प्रशमापन्नमज्ञासीदन्वज्ञासीच्च तं प्रभुः ॥१२८॥
कुत्राप्यन्यत्र मा यासीद् दृष्टिर्मे विषभीषणा। इति तुण्डं बिले क्षिप्त्वा पपौ स समतामृतम् ॥१२९॥

१ प्रभोर्महाप्रभावस्य-खं. मु. त्रिषष्टि० १०। ३। २५८॥ २ कान्तिसौ-मु.॥ ३ स्वमनसा-खं. त्रिषष्टि० १०। ३। २६७॥

तस्थौ तथैव तत्रैव स्वामी तदनुकम्पया। परेषामुपकाराय महतां हि प्रवृत्तयः ॥१३०॥
भगवन्तं तथा दृष्ट्वा विस्मयस्मेरलोचनाः। गोपाला वत्सपालाश्च तत्रोपससृपुर्द्रुतम् ॥१३१॥
वृक्षान्तरे तिरोभूय यथेष्टं ग्रावलोष्टुभिः[1]। प्रणिजघ्नुरनिघ्नास्ते[2] पन्नगस्य महात्मनः ॥१३२॥
तथाप्यविचलन्तं तं वीक्ष्य विश्रम्भभाजिनः। यष्टिभिर्घट्टयामासुर्निकटीभूय तत्तनुम् ॥१३३॥
आख्यन् जनानां तद्[3] गोपास्ततस्तत्रागमन् जनाः। ववन्दिरे महावीरममहंश्च महोरगम् ॥१३४॥
घृतविक्रयकारिण्यो गच्छन्त्यस्तेन वर्त्मना। नागं हैयङ्गवीनेनाभ्रक्षयन् पस्पृशुश्च तम् ॥१३५॥
आगत्य घृतगन्धेन तीक्ष्णतुण्डाः पिपीलिकाः। चक्रिरे तितउ[4]प्रायमहेस्तस्य कलेवरम् ॥१३६॥
मत्कर्म्मणां कियदेतदित्यात्मानं विबोधयन्। वेदनामधिसेहे तां दुःसहां सोऽहिपुङ्गवः ॥१३७॥
वराक्यो मा स्म पील्यन्त स्वल्पसाराः पिपीलिकाः। इत्यचीचलदङ्गं न मनागपि महोरगः ॥१३८॥
सिक्तः कृपासुधावृष्ट्या दृष्ट्या भगवतोरगः। पक्षान्ते पञ्चतां प्राप्य सहस्रारदिवं ययौ ॥१३९॥

विदधति विधिधोपसर्गबाधां फणिभृति दृष्टिविषे हरौ तु भक्तिम्।
इति तुल्यमनस्कता शशंसे चरमजिनस्य जगत्त्रयैकबन्धोः ॥१४०॥ २ ॥

5 10

---

१ लेष्टुभिः—शां. त्रिषष्टि० १०।३।२७२॥ २ प्रतिजघ्नु° —जैमुसं० ॥ ३ ते गोपा° -मु० ॥
४ "चालनी तितउ" इति अभिधानचिन्तामणौ ४।८४॥

प्रकारान्तरेण पुनर्योगगर्भमेव स्तुतिमाह–

कृतापराधेऽपि जने कृपामन्थरतारयोः ।
ईषद्बाष्पार्द्रयोर्भद्रं श्रीवीरजिननेत्रयोः ॥ ३ ॥

विहितविप्रियेऽपि जने सङ्गमकादौ कृपया मन्थरे ईषन्नते तारे कनीनिके ययोः, ईषद्बाष्पश्चक्षुर्जलम्, स च करुणाकृत एव, तेन आर्द्रे क्लिन्ने भगवतो नेत्रे, तयोर्भद्रमिति सामर्थ्यान्नमस्कारप्रतीतिः । तथाहि—

अनुग्राममनुपुरं विहरन्[1] विभुरन्यदा । दृढभूमिमनुप्राप बहुम्लेच्छकुलाकुलाम् ॥१॥
पेढालग्रामं निकषा पेढालाराममन्तरा । कृताष्टमतपःकर्म्मा पोलासं चैत्यमाविशत् ॥२॥
जन्तूपरोधरहितमधिष्ठाय शिलातलम् । आजानुलम्बितभुजो दरावनतविग्रहः ॥३॥
स्थिरीकृतान्तःकरणो निर्निमेषविलोचनः । तस्थौ तत्रैकरात्रिक्या महाप्रतिमया प्रभुः ॥४॥
तदा शक्रः[2] सुधर्म्मायां सभायां परिवारितः । सहस्रैश्चतुरशीत्या सामानिकदिवौकसाम् ॥५॥

१ इत आरभ्य सर्वमपि संगमककृतपरीषहसम्बद्धं महावीरचरितं समानप्रायं त्रिषष्टि० १० । ४ । १६०—२८० । तु०—आव० चू० पृ० ३०१-३१४ । आव० हा० पृ० २१६-२२० । आव० म० पृ० २८८-२९३ ॥

२ तु०—" तेणं कालेणं तेणं समएणं सक्के देविंदे देवराया दाहिणड्ढलोगाहिवई सोहम्मे कप्पे सोहम्मवर्डिसए



॥ १७ ॥

त्रयस्त्रिंशत्त्रायस्त्रिंशैः पर्षद्भिस्तिसृभिस्तथा । चतुर्भिर्लोकपालैश्च संख्यातीतैः प्रकीर्णकैः ॥६॥
प्रत्येकं चतुरशीत्या सहस्रैरङ्गरक्षकैः । दृढाबद्धपरिकरैः ककुप्सु चतसृष्वपि ॥७॥
सेनाधिपतिभिः सेनापरिवीतैश्च सप्तभिः । देवदेवीगणैराभियोग्यैः किल्बिषिकादिभिः ॥८॥
तूर्यत्रयादिभिः[1] कालं विनोदैरतिवाहयन् । गोप्ता दक्षिणलाकार्धं शक्रः[2] सिंहासने स्थितः ॥९॥

विमाणे सुहम्माए सभाए सक्कंसि सीहासणंसि, से णं तत्थ बत्तीसाए विमाणवाससयसाहस्सीणं चउरासीए सामाणिअसाहस्सीण, तायत्तीसाए तायत्तीसगाणं, चउण्हं लोगपालाणं, अट्ठण्हं अग्गमहिसीणं, सपरिवाराण, तिण्हं परिमाणं, सत्तण्हं अणीयाणं, सत्तण्हं अणीयाहिवईणं, चउण्हं चउरासीए आयरक्खदेवसाहस्सीणं, अन्नेसिं च बहूणं सोहम्मकप्पवासीणं वेमाणियाणं देवाण देवीण य आहेवच्चं कारेमाणे पालेमाणे महयाहयनट्टगीयवाइयतंतीतलतालतुडियघणमुइंगपडुपडहवाइयरवेणं दिव्वाइं भोगभोगाइं भुंजमाणे विहरइ ॥१३॥ इमं च णं केवलकप्पं जंबुद्दीवं दीवं विउलेणं ओहिणा आभोएमाणे २ विहरइ । . . . तत्थ णं समणं भगवं महावीरं.. पासइ । पासित्ता.... सुरिंदे सीहासणाओ अब्भुट्ठेइ । अब्भुट्ठित्ता पायपीढाओ पच्चोरुहइ । पच्चोरुहित्ता . पाउयाओ ओमुअइ । ओमुइत्ता एगसाडिअं उत्तरासंगं करेइ । करित्ता अंजलिमउलिअग्गहत्थे तित्थयराभिमुहे सत्तट्ठ पयाइं अणुगच्छइ । सत्तट्ठ पयाइं अणुगच्छित्ता वामं जाणुं अंचेइ । अंचित्ता दाहिणं जाणुं धरणिअलंसि साहट्टु तिक्खुत्तो मुद्धाणं धरणिअलंसि निवेसेइ । निवेसित्ता . अंजलिं कट्टु एवं वयासी ॥१४॥ नमुत्थु णं अरिहंताणं भगवंताणं... ॥ १५ ॥"—कल्पसू० ॥

१ तूर्यत्रय नाट्यम् । "गीतनृत्यवाद्यत्रयं नाट्यं तौर्यत्रिकं च तत् ।"—अभि० चि० २ । १९३ ॥
२ 'शक्रसिंहासने' इति पाठोऽत्र सम्भाव्यते, दृश्यतां पृ० १८ पं० ५ । त्रिषष्टि० १० । ४ । १६८ ॥

अवधिज्ञानतो ज्ञात्वा भगवन्तं तथास्थितम् । उत्थाय पादुके त्यक्त्वोत्तरासङ्गं विधाय च ॥१०॥
जान्वसव्यं भुवि न्यस्य सव्यं च न्यञ्च्य किञ्चन । शक्रस्तवेनाभिवन्द्य भूतलन्यस्तमस्तकः ॥११॥
समुच्छ्राय च सर्वाङ्गोदञ्चद्रोमाञ्चकञ्चुकः । शचीपतिरुवाचेदमुद्दिश्य सकलां सभाम् ॥१२॥
भोः भोः सर्वेऽपि सौधर्मवासिनस्त्रिदशोत्तमाः । शृणुत श्रीमहावीरस्वामिनो महिमाद्भुतम् ॥१३॥
दधानः पञ्च समितीर्गुप्तित्रयपवित्रितः । क्रोध-मान-माया-लोभानभिभूतो निराश्रवः ॥१४॥ 5
द्रव्ये क्षेत्रे च काले च भावे चाप्रतिबद्धधीः । रुक्षैकपुद्गलन्यस्तनयनो ध्यानमास्थितः ॥१५॥
अमरैरसुरैर्यक्षै रक्षोभिरुरगैर्नरैः । त्रैलोक्येनापि शक्येत ध्यानाच्चालयितुं न हि ॥१६॥
इत्याकर्ण्य वचः शाक्रं शक्रसामानिकः सुरः । ललाटपट्टघटितभ्रकुटी[1]भङ्गभीषणः ॥१७॥
कम्पमानाधरः कोपाल्लोहितायितलोचनः । अभव्यो गाढमिथ्यात्वसङ्गः सङ्गमकोऽवदत् ॥१८॥
मर्त्यः श्रमणमात्रोऽयं यदेवं देव वर्ण्यते । स्वच्छन्दं सदसद्वादे प्रभुत्वं तत्र कारणम् ॥१९॥ 10
देवैरपि न चाल्योऽयं ध्यानादित्युद्भटं प्रभो[2] । कथं धार्येत हृदये धृतं[3] वा प्रोच्यते कथम् ॥२०॥
रुद्धान्तरिक्षः शिखरैर्मूले रुद्धरसातलः । यैः किलोदस्यते दोष्णा सुमेरुर्लोष्टलीलया ॥२१॥

१ °भ्रूकु—ख. । भृकु-मु० ॥    २ प्रभोः—शां. मु. ॥    ३ धृते—मु. ॥

सकुलाचलमेदिन्याः प्लावनव्यक्तवैभवः। येषामेषोऽपि[1] गण्डूषसुकरो मकराकरः ॥२२॥
अप्येकभुजदण्डेन प्रचण्डा[2]श्छत्रलीलया। उद्धरन्ति म[3]हानेकभूधरां ये वसुन्धराम् ॥२३॥
तेषामसमऋद्धीनां सुराणाममितौजसाम्। इच्छासम्पन्नसिद्धीनां मर्त्यमात्रः कियानयम् ॥२४॥
एषोऽहं चालयिष्यामि तं ध्यानादित्युदीर्य्य सः। करेण भूमिमाहत्योदस्थादास्थानमण्डपात् ॥२५॥
अर्हन्तः परसाहाय्यात्तपः कुर्वन्त्यखण्डितम्। मा ज्ञासीदिति दुर्बुद्धिः शक्रेण स उपेक्षितः ॥२६॥
ततो वेगानिलोत्पातपतापतघनाघनः। रौद्राकृतिर्दुरालोको भयापसरदप्सराः ॥२७॥
त्रिकटोरस्थलाघातपुञ्जितग्रहमण्डलः। स पापस्तत्र गतवान् यत्रासीत् परमेश्वरः ॥२८॥
निष्कारणजगद्बन्धुं निराबाधं तथास्थितम्। श्रीवीरं पश्यतस्तस्य मत्सरो ववृधेऽधिकम् ॥२९॥
गीर्व्वाणपांसनः पांसुवृष्टिं दुष्टोऽतनिष्ट सः। अकाण्डघटितारिष्टामुपरिष्टाज्जगत्प्रभोः ॥३०॥
विधुर्विधुन्तुदेनेव दुर्दिनेनेव भास्करः। पिदधे पांसुपूरेण सर्व्वाङ्गीणं जगत्प्रभुः ॥३१॥
समन्ततोऽपि पूर्णानि तथा स्रोतांसि पांसुभिः[4]। यथा समभवत् स्वामी निश्वासोच्छ्वासवर्ज्जितः ॥३२॥
तिलमात्रमपि ध्यानान्न चचाल जगद्गुरुः। कुलाचलश्चलति किं गजैः परिणतैरपि ॥३३॥



5

10

---

१ " गण्डूषंकरश्च मकराकरः " त्रिषष्टि० १०। ४। १८१ ॥ २ प्रचण्डां छत्र-जैमुसं, त्रिषष्टि० १०। ४। १८२ ॥
३ महाने-खं. ॥ ४ पांशुभिः—शां. मु. ॥

अपनीय ततः पांसुं[१] वज्रतुण्डाः पिपीलिकाः । स समुत्पादयामास प्रभोः सर्वाङ्गपीलिकाः ॥३४॥
प्राविशन्नेकतोऽङ्गेषु स्वैरं निर्ययुरन्यतः । विध्यन्त्यस्तीक्ष्णतुण्डाग्रैः सूच्यो निवसनेष्विव ॥३५॥
निर्भाग्यस्येव वाञ्छासु मोघीभूतासु तास्वपि । स दंशान् रचयामास नाऽकृत्यान्तो दुरात्मनाम् ॥३६॥
तेषामेकप्रहारेण रक्तैर्गोक्षीरसोदरैः । क्षरद्भिरभवन्नाथः सनिर्झर इवाद्रिराट् ॥३७॥
तैरप्यक्षोभ्यमाणेऽथ जगन्नाथे स दुर्म्मतिः । चक्रे प्रचण्डतुण्डाग्रा दुर्निवारा घृतेलिकाः ॥३८॥ 5
शरीरे परमेशस्य निमग्नमुखमण्डलाः । ततस्ताः समलक्ष्यन्त रोमालीवत्[२] सहोत्थिताः ॥३९॥
ततोऽप्यविचलच्चित्ते योगचित्ते[३] जगद्गुरौ । स महावृश्चिकांश्चक्रे ध्यानव्रश्चननिश्चयी ॥४०॥
प्रलयाग्निस्फुलिङ्गाभास्तप्ततोमरदारुणैः । तेऽभिन्दन् भगवद्देहं लाङ्गूलाङ्कुटकण्टकैः ॥४१॥
तैरप्यनाकुले नाथे कूटसङ्कल्पसङ्कुलः । सोऽनल्पान् कल्पयामास नकुलान् दशनाकुलान् ॥४२॥
खिखीति रसमानास्ते दंष्ट्राभिर्भगवत्तनुम् । खण्डखण्डैस्त्रोटयन्तो मांसखण्डान्यपातयन् ॥४३॥ 10
तैरप्यकृतकृत्योऽसौ यमदोर्दण्डदारुणान् । अत्युत्कटफटाटोपान् कोपात् प्रायुङ्क्त पन्नगान् ॥४४॥
आशिरःपादमापीडय महावीरं महोरगाः । अवेष्टयन् महावृक्षं कपिकच्छूलता इव ॥४५॥

१ पांशुं— शां. मु. ॥ २ रोमाणीव सहो—खं. मु. । " रोमालीव सहोत्थिता "– त्रिषष्टि० १० । ४ । १९८ ॥
३ योगवित्ते–त्रिषष्टि० ॥

प्रजह्नुस्ते[1] तथा तत्र स्फुटन्ति स्म फटा यथा । तथा दशन्ति स्म यथाऽभज्यन्त दशना अपि ॥४६॥
उद्भ्रान्तगरलेष्वेषु लम्बमानेषु रज्जुवत् । स वज्रदशनानाशु मूषकानुदपीपदत् ॥४७॥
स्वाम्यङ्गं खनकाश्चखनुर्नखैर्दन्तैर्मुखैः खरैः । मोमूत्र्यमाणास्तत्रैव क्षते क्षारं निचिक्षिपुः ॥४८॥
तेष्वप्यकिञ्चिद्भूतेषु भूतीभूत इव क्रुधा । उद्दण्डदन्तमुसलं हस्तिरूपं ससर्ज्ज सः ॥४९॥
सोऽधावत् पादपातेन मेदिनीं नमयन्निव । उद्धून्युदस्तहस्तेन नभस्तस्त्रोटयन्निव ॥५०॥ 5
कराग्रेण गृहीत्वा च दुर्वारेण स वारणः । दूरमुल्लालयामास भगवन्तं नभस्तले ॥५१॥
विशीर्य कणशो गच्छत्वसाविति दुराशया[2] । दन्तावुन्नम्य स व्योम्नः पतन्तं स्म प्रतीच्छति ॥५२॥
पतितं दन्तघातेन विध्यति स्म मुहुर्मुहुः । वक्षसो वज्रकठिनात् समुत्तस्थुः स्फुलिङ्गकाः ॥५३॥
न शशाक वराकोऽसौ कर्तुं किञ्चिदपि द्विपः । यावत् तावत् सुरश्चक्रे करिणीं वैरिणीमिव ॥५४॥
अखण्डशुण्डदन्ताभ्यां भगवन्तं बिभेद सा । स्वैरं शरीरनीरेण विषेणेव सिषेच च ॥५५॥ 10
करेणो रेणुसाद्भूते तस्याः सारे सुराधमः । पिशाचरूपमकरोन्मकरोत्कटदंष्ट्रकम् ॥५६॥
ज्वालाजालाकुलं[3] व्यात्तव्यायतं वक्त्रकोटरम् । अभवद् भीषणं तस्य वह्निकुण्डमिव ज्वलत् ॥५७॥

---

१ प्रजघ्नु- खं. मु. ॥ २ दुराशयः- मु. त्रिषष्टि० १० । ४ । २११ ॥
३ ज्वालामालाकुलव्यात्तव्यायतं- खं. । ज्वालाजालाकुलं व्यात्तं व्यायतं- मु० ॥

यमौकस्तोरणस्तम्भाविव प्रोत्तम्भितौ भुजौ । अभूच्च तस्य जङ्घोरु तुङ्गं[1] तालद्रुमोपमम् ॥५८॥
स साट्टहासः फेत्कुर्वन् स्फूर्ज्जत्किलकिलारवः । कृत्तिवासाः कर्तिकाभृद् भगवन्तमुपाद्रवत् ॥५९॥
तस्मिन्नपि हि विध्याते क्षीणतैलप्रदीपवत् । व्याघ्ररूपं क्रुधाघ्रातः शीघ्रं चक्रे स निर्घृणः ॥६०॥
अथ पुच्छच्छटाच्छोटैः पाटयन्निव मेदिनीम् । बूत्कार[2]प्रतिशब्दैश्च रोदसी[3] रोदयन्निव ॥६१॥
दंष्ट्राभिर्वज्रसाराभिर्नखरैः शूलसोदरैः । अव्यग्रं व्यापिपर्त्ति स्म व्याघ्रो भुवनभर्त्तरि ॥६२॥
तत्र विच्छायतां प्राप्ते दवदग्ध इव द्रुमे । सिद्धार्थराजत्रिशलादेव्यो रूपं व्यधत्त सः ॥६३॥
किमेतद् भवता तात[4] प्रक्रान्तमतिदुष्करम् । प्रव्रज्यां मुञ्च मास्माकं प्रार्थनामवजीगणः ॥६४॥
वृद्धावशरणावावां त्यक्तवान् नन्दिवर्द्धनः । त्रायस्वेति स्वरैर्दीनदीनै[5]र्व्यलपतां च तौ ॥६५॥ युग्मम् ।
ततस्तयोर्विलापैरप्यलिप्तमनसि प्रभौ । आवासितं दुराचारः स्कन्धावारमकल्पयत् ॥६६॥
तत्रानासाद्य दृषदं सूदः सादर ओदने । चुल्लीपदे प्रभोः पादौ कृत्वा स्थालीमकल्पयत् ॥६७॥
तत्कालं ज्वालितस्तेन जज्वाल ज्वलनोऽधिकम् । पादमूले जगद्भर्त्तुर्गिरेरिव दवानलः ॥६८॥
तप्तस्यापि प्रभोः स्वर्णस्येव न श्रीरहीयत । ततः सुराधमश्चक्रे पक्वणं[6] दारुणक्वणम् ॥६९॥

१ कर्तृका-रोमु. । कर्त्रिका°- जैमु. त्रिषष्टि० १० । ४ । २१८ ॥ २ फूत्कार— खं. ॥ ३ रोदसीं— मु. ।
४ तावत्- खं. ॥ ५ °नदैन्यैर्व्य०- खं. ॥ ६ क्वणः- खं. ॥

पक्वणोऽपि प्रभोः कण्ठे कर्णयोर्भुजदण्डयोः । जङ्घयोश्च क्षुद्रपक्षिपञ्जराणि व्यलम्बयत् ॥७०॥
खगैश्चञ्चुनखाघातैस्तथा दद्रे प्रभोस्तनुः । यथाच्छिद्रशताकीर्णा तत्पञ्जरनिभाऽभवत् ॥७१॥
तत्राप्यसारतां प्राप्ते पक्वणे पक्वपत्रवत् । उत्पादितमहोत्पातं खरवातमजीजनत् ॥७२॥
अन्तरिक्षे महावृक्षांस्तृणोत्क्षेपं समुत्क्षिपन् । विक्षिपन् पांसुविक्षेपं[1] दिक्षु च ग्रावकर्करान् ॥७३॥
सर्व्वतो रोदसीगर्भं भस्त्रापूरं च पूरयन् । उत्पाट्योत्पाट्य वातोऽसौ भगवन्तमपातयत् ॥७४॥ युग्मम् ।
तेनापि खरवातेनापूर्णकामो विनिर्म्ममे । द्युसत्कुलकलङ्कोऽसौ द्राक् कलङ्कलिकानिलम्[2] ॥७५॥
भूभृतोऽपि भ्रमयितुमलङ्कर्म्मीणविक्रमः । भ्रमयामास चक्रस्थमृत्पिण्डमिव स प्रभुम् ॥७६॥
भ्राम्यमाणोऽर्णवावर्त्तेनेव तेन नभस्वता । तदेकतानो न ध्यानं मनागपि जहौ प्रभुः ॥७७॥
वज्रसारमनस्कोऽयं बहुधाऽपि कदर्थितः । न क्षोभ्यते कथमहं भग्नागूर्यामि तां सभाम् ॥७८॥
तदस्य प्राणनाशेन ध्यानं नश्यति नान्यथा । चिन्तयित्वेति चक्रे स कालचक्रं सुराधमः ॥७९॥

---

१ पांशु— शां मु. ॥ २ " ताहे खरवायं विउव्वइ जेण सक्का मंदरं पि चालेउं, न पुण सामी विचलइ, तेण उप्पाडेत्ता उप्पाडेत्ता पाडेइ । पच्छा कलंकलियवायं विउव्वइ, जेण जहा चक्काइद्धगो तहा भमाडिज्जइ नदि-आवत्तो वा । जाहे एवं न सक्का ताहे कालचक्कं विउव्वति । "–आव० हारि० पृ. २१७ B । आव० चू० पृ० ३०५ । आव० म० पृ० २९० A । " पच्छा कलंकलियावायं विरएइ, तेण वि चक्काविद्धो व्व सलिलावत्तनिवडिओ व्व भामिओ जिणो देहमेत्तेण, न उण चित्तासपणं ।" महावीर० पृ० २२८ B ॥

अह्नाय तदयोभारसहस्रघटितं ततः । उद्दधार सुरः शैलं कैलासमिव रावणः ॥८०॥
पृथिवीं सम्पुटीकर्तुं[1] कृतं मन्ये पुटान्तरम् । उत्पत्य कालचक्रं स प्रचिक्षेपोपरि प्रभोः ॥८१॥
ज्वालाजालैरुच्छलद्भिर्दिशः सर्वाः करालयत् । तत् पपात[2] जगद्भर्त्तर्यौर्वानल इवार्णवे ॥८२॥
कुलक्षितिधरक्षोदक्षमस्यास्य प्रभावतः । ममज्जाजानु भगवानन्तर्वसुमतीतलम् ॥८३॥
एवं भूतेऽपि[3] भगवानशोचदिदमस्य यत् । तितारयिषवो विश्वं वयं संसारकारणम् ॥८४॥
कालचक्रहतोऽप्येष प्रपेदे पञ्चतां न यत् । अगोचरस्तदस्त्राणामुपायः क इहापरः ॥८५॥
अनुकूलैरुपसर्गैः क्षुभ्येद्यदि कथञ्चन । इति बुद्ध्या विमानस्थः स पुरोऽस्थादुवाच च ॥८६॥
महर्षे तव तुष्टोऽस्मि सत्त्वेन तपसौजसा । प्राणानपेक्षभावेनारब्धनिर्वहणेन च ॥८७॥
पर्याप्तं तपसानेन शरीरक्लेशकारिणा । ब्रूहि याचस्व मा कार्षीः शङ्कां यच्छामि किं तव ॥८८॥
इच्छामात्रेण पूर्यन्ते यत्र नित्यं मनोरथाः । किमनेनैव देहेन त्वां स्वर्गं प्रापयामि तम् ॥८९॥
अनादिभवसंरूढकर्मनिर्मोक्षलक्षणम् । एकान्तपरमानन्दं मोक्षं वा त्वां नयामि किम् ॥९०॥
अशेषमण्डलाधीशमौलिलालितशासनम् । अथवाऽत्रैव यच्छामि साम्राज्यं प्राज्यमृद्धिभिः ॥९१॥

१ सम्पुटीं कर्तुं—शां. खं. ॥ २ उत्पपात—मु. ॥ ३ पवम्भूतोऽपि—मु. ॥



॥ २५ ॥

इत्थं प्रलोभनाशस्त्रैरक्षोभ्यमनसि प्रभौ। अप्राप्तप्रतिवाक् पापः पुनरेवमचिन्तयत् ॥९२॥
मोघीकृतमनेनैतन्मम शक्तिविजृम्भितम्। तदिदानीममोघं स्याद् यद्येकं कामशासनम् ॥९३॥
यतः कामास्त्रभूताभिः कामिनीभिः कटाक्षिताः। दृष्टा महापुमांसोऽपि लुम्पन्तः पुरुषव्रतम् ॥९४॥
इति निश्चित्य चित्तेन निर्दिदेश सुराङ्गनाः। तद्विभ्रमसहायान् षट् प्रायुङ्क्त स ऋतूनपि ॥९५॥
कृतप्रस्तावना मत्तकोकिलाकलकूजितैः। कन्दर्प्पनाटकनटी वसन्तश्रीरशोभत ॥९६॥
मुखवासं सज्जयन्ती विकसन्नीपरेणुभिः। सैरन्ध्रीव दिग्वधूनां ग्रीष्मलक्ष्मीरजृम्भत ॥९७॥
राज्याभिषेके कामस्य मङ्गल्यतिलकानिव। सर्वाङ्गं केतकव्याजात् कुर्व्वती प्रावृडाबभौ ॥९८॥
सहस्रनयनीभूय नवनीलोत्पलच्छलात्। स्वसम्पदमिवोद्दामां पश्यन्ती शुशुभे शरत् ॥९९॥
जयप्रशस्ति कामस्य श्वेताक्षरसहोदरैः। हेमन्तश्रीर्लिलेखेव प्रत्यग्रैः कुन्दकुड्मलैः ॥१००॥
गणिकेवोपजीवन्ती हेमन्त-सुरभी समम्। कुन्दैश्च सिन्दुवारैश्च शिशिरश्रीरचीयत ॥१०१॥
एवमुज्जृम्भमाणेषु सर्व्वर्त्तुषु समन्ततः। मीनध्वजपताकिन्यः प्रादुरासन् सुराङ्गनाः ॥१०२॥
सङ्गीतमविगीताङ्ग्यः पुरो भगवतस्ततः। ताः प्रचक्रमिरे जैत्रं मन्त्रास्त्रमिव मान्मथम् ॥१०३॥



5

10

|| २७ ||

तत्राधिस्त्रित्रितलयं[1] गान्धारग्रामबन्धुरम्[2][3][4] । काभिश्चिदुदगीयन्त जातयः[5] शुद्ध-वेसराः ॥१०४॥

---

१ तत्राधिस्त्र—शां. खं. त्रिषष्टि० १० । ४ । २६६ । तत्रातिस्त्र—ख. ॥

२ "कालस्य क्रियया मानं तालः, साम्यं पुनर्लयः । द्रुतं विलम्बितं मध्यम् ....... । २ । २०६ ॥

. ...लयो द्रुतादिः, वाद्यादीनामन्योन्यं समत्वमिति यावत् । तालविशेषस्तु लयोऽन्यः ।" अभि० चि० वृ० ।

"त्रिलयं नाम द्रुतो मध्यो विलम्बितश्चेति ।" —नाट्यशा० अ० ३४ ॥

३ तत्र स्वराः—षड्जश्च ऋषभश्चैव गान्धारो मध्यमस्तथा । पञ्चमो धैवतश्चैव सप्तमोऽथ निषादवान् ॥२२॥

......अथ [द्वौ] ग्रामौ षड्जग्रामो मध्यमग्रामश्चेति । —नाट्यशा० अ० २८ ॥ ४ ग्रामसुन्दरम्—च. ॥

५ "जातीरिदानीं वक्ष्यामः—.... . ... . ........

षाड्जी[1] चैवार्षभी[2] चैव धैवती[3] सनिषादिनी[4] । षड्जोदीच्यवती[5] चैव तथा वै षड्जकैशिकी[6] ॥४२॥

षड्जमध्या[7] तथा चैव षड्जग्रामसमाश्रया । अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ॥४३॥

गान्धारी[8] मध्यमा[9] चैव गान्धारोदीच्यवा[10] तथा । पञ्चमी[11] रक्तगान्धारी[12] तथा गान्धारपञ्चमी[13] । ४४॥

मध्यमोदीच्यवा[14] चैव नन्दयन्ती[15] तथैव च । कर्मारवी[16] च विज्ञेया तथान्ध्री[17] कैशिकी[18] तथा ॥४५॥

एतासामष्टादशानां सप्त स्वराख्याः । तच्च द्विविधाः—शुद्धाः विकृताश्च । तत्र शुद्धा' .अन्यूनस्वराः स्वरांशग्रहन्यासाः ।

एषामन्यतमेन द्वाभ्यां बहुभिर्वापि लक्षणैर्विक्रियामुपगता न्यासवर्जं विकृतसंज्ञा भवन्ति ।

शुद्धा विकृताश्चैव हि समवायाज्जातयस्तु जायन्ते । ता एव शुद्धविकृता भवन्ति चैकादशान्यास्तु ॥४६॥

—नाट्यशा० अ० २८ ॥

5

10

|| २७ ||

क्रमव्युत्क्रमगैस्तानैर्व्यक्तैर्व्यञ्जनधातुभिः । प्रवीणाऽवादयद्वीणां काचित् सकलनिष्कलाम् ॥१०५॥
स्फुटत्तकारधोङ्कारप्रकारैर्मेघनिस्वनान् । काश्चिच्च वादयामासुर्मृदङ्गांस्त्रिविधानपि ॥१०६॥
नभो भूगतचारीकं विचित्रकरणोद्भटम् । दृष्टिभावैर्नवनवैः काश्चिदप्यनरीनृतुः ॥१०७॥

१ तत्र मूर्छनासंश्रितास्तानाश्चतुरशीतिः । ... द्विविधा तानक्रिया तन्त्र्याम्—प्रवेशो निग्रहश्च । तत्र प्रवेशो नामधर-स्वरप्रकर्षणादुत्तरमार्दवाच्च । निग्रहश्चासंस्पर्शः ।" —नाट्यशा० अ० २८ ॥
5
२ विस्तारः करणश्च स्यादाविद्धो व्यञ्जनस्तथा । चत्वारो धातवो ज्ञेयाश्चाद्यन्तकरणाश्रयाः ॥५२॥ इति दशविधः प्रयोज्यो वीणायां व्यञ्जको धातुः ॥७१॥ —नाट्यशा० अ० २९ ॥
३ " निमेषाः पञ्च विज्ञेया गीतकाले कलान्तरम् । ततः कलाकालकृतो लय इत्यभिसंज्ञितः ॥३॥
त्रयो लयास्तु विज्ञेया द्रुत-मध्य-विलम्बिताः । यस्तत्र तु लयो मध्यस्तत्प्रमाणकला स्मृता ॥४॥"
—नाट्यशा० अ० २९ ॥
10
४ काश्चितु—खं. ॥ ५ मृदङ्गो मुरजः सोऽङ्क्यालिङ्ग्यूर्ध्वक इति त्रिधा । २ । २०७ ।...स मृदङ्गः त्रिधा त्रिप्रकारः अङ्कोऽस्यास्तीति अङ्की, उत्सङ्गस्थत्वात् । आलिङ्गोऽस्यास्तीति आलिङ्गी, आलिङ्ग्य वादनात् । ऊर्ध्वं कृत्य एकेन मुखेन वादनात् ऊर्ध्वं कायति ऊर्ध्वकः आभोगिकाख्यः ।" अभि० चि० वृ० ॥
६ " एकपादप्रचारो यः स चारीत्यभिधीयते । द्विपादक्रमणं यत्तु करणं नाम तद् भवेत् ॥३॥
समपादा. .मतल्ली चेति षोडश । एता भौम्यः स्मृताश्चार्यः शृणुताऽऽकाशिकीः पुनः ॥१०॥
15
अतिक्रान्ता.. भ्रमरी चेति षोडश । आकाशिक्यः स्मृता ह्येता लक्षणं च निबोधत ॥१३॥"—नाट्यशा० अ० १० ॥

[1] दृढाङ्गहारा-ऽभिनयैः सद्यस्त्रुटितकञ्चुका । बध्नती[2] श्लथधम्मिल्लं दोर्मूलं काप्यदीदृशत् ॥१०८॥

[3] दण्डपादाभिनयनच्छलात् कापि मुहुर्मुहुः । चारुगोरोचनागौरमूरूमूलमदर्शयत् ॥१०९॥

श्लथचण्डातक[4]ग्रन्थिदृढीकरणलीलया । कापि प्राकाशयद्वापीसनाभिं नाभिमण्डलम्[5] ॥११०॥

---

७ "अतः परं प्रवक्ष्यामि दृष्टीनामिह लक्षणम् ॥३७॥ कान्ता[1] ..........मदिरा[36] तथा ।
षट्त्रिंशद् दृष्टयो ह्येता नामतोऽभिहिता मया ॥४२॥" —नाट्यशा० अ० ८ ॥

८ "भावानिदानीं व्याख्यास्यामः— ....... तत्राष्टौ भावाः स्थायिनः ।
त्रयस्त्रिंशद् व्यभिचारिणः । अष्टौ सात्त्विका इति त्रिभेदाः ।" —नाट्यशा० अ० ७ ॥

१ स्थिरहस्तादयो द्वात्रिंशदङ्गहारा विस्तरेण नाट्यशास्त्रे चतुर्थेऽध्याये वर्णिताः, अभिनयानां विविधा भेदप्रभेदा अष्टमे नवमे चाध्याये वर्णिताः सन्ति ॥

२ बध्नन्ती—खं. त्रिषष्टि० १० । ४ । २७० ॥

३ दण्डपादा आकाशिकी चारी । अस्याः स्वरूपम्—
"नूपुरं चरणं कृत्वा पुरतः संप्रसारयेत् । क्षिप्तमाविद्धकरणं दण्डपादा तु सा स्मृता ॥४३॥"-नाट्यशा० अ० १० ।
दण्डपादं मण्डलम् । अस्य स्वरूपं नाट्यशास्त्रे एकादशेऽध्याये [श्लो० १६-१८] विलोकनीयम् ॥

४ "वरस्त्र्यर्धोरुकांशुकम् । चण्डातकश्चलनकः ।" अभि० चि० ३ । ३३८ ॥

५ मण्डलशब्दस्त्रिलिङ्गः ॥

व्यपदिश्येभदन्ताख्यहस्तकाभिनयं[1] मुहुः । गाढमङ्गपरिष्वङ्गसंज्ञां काचिच्च निर्ममे ॥१११॥
सञ्चारयन्त्यन्तरीयं[2] नीवीनिविडनच्छलात् । नितम्बबिम्बफलकं काचिदाविरभावयत् ॥११२॥
अङ्गभङ्गापदेशेन वक्षः पीनोन्नतस्तनम् । सुचिरं रोचयामास काचिद् रुचिरलोचना ॥११३॥
यदि त्वं वीतरागोऽसि रागं तन्नस्तनोषि किम् । शरीरनिरपेक्षश्चेद्दत्से वक्षोऽपि किं न नः ॥११४॥
दयालुर्यदि वासि त्वं तदानीं विषमायुधात् । अकाण्डाकृष्टकोदण्डादस्मान्न त्रायसे कथम् ॥११५॥
उपेक्षसे कौतुकेन यदि नः प्रेमलालसाः । किञ्चिन्मात्रं हि तद्युक्तं मरणान्तं न युज्यते ॥११६॥
स्वामिन् कठिनतां मुञ्च पूरयास्मन्मनोरथान् । प्रार्थनाविमुखो मा भूः काश्चिदित्यूचिरे चिरम् ॥११७॥
एवं गीता-ऽऽतोद्य-नृत्तविकारैराङ्गिकैरपि । चाटुभिश्च सुरस्त्रीणां न चुक्षोभ जगत्प्रभुः ॥११८॥
एवं रात्रौ व्यतीतायां ततो विहरतः प्रभोः । निराहारस्य षण्मासान् सुराधम उपाद्रवत् ॥११९॥
भट्टारक सुखं तिष्ठ स्वैरं भ्रम गतोऽस्म्यहम् । षण्मासान्ते ब्रुवन्नेवं खिन्नः सङ्गमकोऽगमत् ॥१२०॥

---

१ गजदन्तः कराभिनयः । अस्य स्वरूपम्—
"कूर्परासंचितौ हस्तौ यदास्तां सर्पशीर्षकौ । गजदन्तः स तु करः कर्म चास्य निबोधत ॥१४७॥
एष च वधूवराणामुद्वाहे चातिभारयोगेन । स्तम्भग्रहणे च तथा शैलशिलोत्पाटने चैव ॥१४८॥"—नाट्यशा० अ० ९॥
२ °यन्त्युत्तरीयं—खं. त्रिषष्टि० १० । ४ । २७४॥

कर्म्मणैवंविधेनायं क्व वराको व्रजिष्यति । न शक्यते तारयितुमस्माभिरपि तारकैः ॥१२१॥
एवं भगवतश्चिन्तां तन्वतस्तत्र गच्छति । दशावभूतां कृपयोद्वाष्पे मन्थरतारके ॥१२२॥३॥

एवं देवतां नमस्कृत्य मुक्तिमार्गं योगमभिधित्सुस्तच्छास्त्रं प्रस्तौति—

श्रुताम्भोधेरधिगम्य सम्प्रदायाच्च सद्गुरोः ।
स्वसम्वेदनतश्चापि योगशास्त्रं विरच्यते ॥४॥

इह नानिर्णीतस्य योगस्य पद-वाक्यप्रबन्धेन शास्त्रविरचना कर्त्तुमुचितेति योगस्य त्रिहेतुको निर्णयः ख्याप्यते शास्त्रतो गुरुपारम्पर्य्यात् स्वानुभवाच्च । तं त्रिविधमपि क्रमेणाह श्रुताम्भोधेः सकाशादधिगम्य निर्णीय, योगमिति शेषः । तथा गुरुपारम्पर्य्यात् । तथा स्वसम्वेदनात् । एवं त्रिधा योगं निश्चित्य तच्छास्त्रं विरच्यते । एतदेव निर्व्वहणे वक्ष्यति—

"या शास्त्रात् सुगुरोर्मुखादनुभवाच्चाज्ञायि किञ्चित् क्वचित् योगस्योपनिषद् विवेकिपरिषच्चेतश्चमत्कारिणी ।
श्रीचौलुक्यकुमारपालनृपतेरत्यर्थमभ्यर्थनादाचार्येण निवेशिता पथि गिरां श्रीहेमचन्द्रेण सा ॥१॥"[1] ४॥

१ योगशास्त्रस्यान्तेऽयं श्लोकः ॥

योगस्यैव माहात्म्यमाह—

योगः सर्व्वविपद्वल्लीविताने परशुः शितः ।
अमूलमन्त्रतन्त्रं च कार्म्मणं निर्वृतिश्रियः ॥५॥

सर्व्वा विपद आध्यात्मिका[1]—ऽऽधिभौतिका—ऽऽधिदैविकलक्षणाः, ताश्चातिविततत्वाद्वल्लीरूपाः, तासां वितानः समूहः, तत्र तीक्ष्णः परशुर्योग इत्यनर्थपरिहारो योगस्य फलम् । उत्तरार्द्धेनार्थप्राप्तिः । मोक्षलक्ष्म्याः परमपुरुपार्थरूपाया मूल—मन्त्र—तन्त्रपरिहारेण कार्म्मणं[2] संवननं योगः । कार्म्मणं हि मूल—मन्त्र—तन्त्रैर्विधीयते । योगस्तु मूलादिरहित एव मोक्षलक्ष्मीवशीकरणहेतुरिति ॥ ५ ॥

१ " यद्यप्येकं दुःखं तथापि निमित्तानामध्यात्मा-ऽधिभूता-ऽधिदैवलक्षणानां भेदादस्य भेदोपचार । आध्यात्मिकं हि द्विविधं शारीरं मानसं च । शारीरं तावद् वात-पित्त-श्लेष्मणां वैषम्यनिमित्तम् । मानसं काम-क्रोध-लोभ-मोह-विषाद-भयेर्ष्या-ऽसूयाऽरत्यविशेषदर्शननिमित्तम् । आधिभौतिकं च मनुष्य-पशु-मृग-पक्षि-सरीसृप-स्थावरनिमित्तम् । आधिदैविकं शीतोष्णवातवर्षाशन्यवश्यायावेशनिमित्तम् ।"—सांख्यकारिकायुक्ति० पृ० ५ ॥

२ "कार्मणं मूलकर्माथ संवननं वशक्रिया । ६ । १३४ । .... मूलैरौषधादिभिर्वशीकरणं मूलकर्म । समन्ताद् वन्यते सेव्यते वाऽनेन संवननम् । वशे करणं वशक्रिया, वशीकरणमित्यर्थः ।" अभि० चिन्ता० स्वो० ॥ "मूलानां वा वनस्पत्यवयवविशेषाणां कर्म मूलकर्म ।"—पञ्चाशकवृ० १३ । १९ ॥



5

10

कारणोच्छेदमन्तरेण न विपक्षलक्षणस्य कार्य्यस्योच्छेदः शक्यक्रिय इति विपत्कारणपापनिर्घातहेतुत्वं योगस्याह—

भूयांसोऽपि हि पाप्मानः प्रलयं यान्ति योगतः ।
चण्डवाताद् घनघना घनाघनघटा इव ॥ ६ ॥

बहून्यपि पापानि योगात् प्रलयमुपयान्ति प्रचण्डवातोद्धूता अतिघना मेघघटा इव ॥६॥

स्यादेतत्- एकजन्मोपार्ज्जितं पापं योगः क्षिणुयादपि, अनेकभवपरम्परोपात्तपापस्य तु निर्मूलनं योगादसम्भावनीयमित्याह—

क्षिणोति योगः पापानि चिरकालार्ज्जितान्यपि ।
प्रचितानि यथैधांसि क्षणादेवाशुशुक्षणिः ॥ ७ ॥

यथा चिरकालमीलितान्यपीन्धनानि क्षणमात्रप्रचितोऽप्यकृशः[१] कृशानुर्भस्मसात् करोति। एवं योगः क्षणमात्रेणैव चिरसञ्चितपापसंक्षयक्षमो भवतीति ॥७॥

योगस्य फलान्तरमाह—

कफविप्रुण्मलामर्शसर्व्वौषधिमहर्द्धयः ।
सम्भिन्नश्रोतोलब्धिश्च यौगं ताण्डवडम्बरम् ॥८॥

5

10

॥ ३३ ॥

१ ०पि कृशः—जैमुपा. ॥

महर्द्धिशब्दः प्रत्येकमभिसम्बध्यते[1]। कफः श्लेष्मा। विप्रुडुच्चारः[2] पुरीषमिति यावत्। मलः कर्ण-दन्त-नासिका-नयन-जिह्वोद्भवः शरीरसम्भवश्च। आमर्शो हस्तादिना स्पर्शः। सर्व्वे विण्-मूत्र-केश-नखादय उक्ता अनुक्ताश्च औषधयो योगप्रभावान्महर्द्धयो[3] भवन्ति। अथवा महर्द्धयो विभिन्ना एवाणुत्वादयः। तथा श्रोतांसीन्द्रि-[4]याणि संभिन्नानि सङ्गतानि एकैकशः सर्व्वविषयैः, तेषां लब्धिः, योगस्येदं यौगं ताण्डवडम्बरं[5] विलसितम्[6]।

तथाहि[7] योगमाहात्म्याद्योगिनां कफबिन्दवः। सनत्कुमारादेरिव जायन्ते सर्व्वरुकूछिदः ॥१॥

सनत्कुमारो हि पुरा चतुर्थश्चक्रवर्त्यभूत्। षट्खण्डपृथिवीभोक्ता नगरे हस्तिनापुरे ॥२॥

कदाचिच्च सुधर्म्मायां सभायां जातविस्मयः। रूपं तस्याप्रतिरूपं वर्णयामास वासवः ॥३॥

राज्ञः सनत्कुमारस्य कुरुवंशशिरोमणेः। यद्रूपं न तदन्यत्र देवेषु मनुजेषु वा ॥४॥

5

---

१ ०मपि सम्ब०—मु. ॥ २ दृश्यतां तत्त्वार्थराज० ३ । ३६ ॥ ३ ॰प्रभवा० खं. ॥ ४ स्रोतांसी० खं. ॥

५ —ख. ग. च. ।०डम्बरं दर्शितम्–मु. ॥ ६ विविधानां योगजन्यलब्धीनां स्वरूपं जिज्ञासुभिर्द्रष्टव्या ग्रन्थाः— त्रिषष्टि० १ । १ । ८४३–८८० । षट्खंडागमधवला० ९ । ४ । तिलोयप० ४ । ९६८–१०९१ । तत्त्वार्थभा० १० । ७ । तत्त्वार्थराज० ३ । ३६ । आव० मल० पृ० ७८–८१ । आव० हारि० पृ० ४७–४८ । आव० चू० पृ० ६८–७१ । विशेषाव० गा. ७८९–७९७ । प्रवचनसा० गा० १४९२–१५०८ ॥

७ अस्य सनत्कुमारचरित्रस्य प्रायः सर्वेऽपि श्लोकाः समानाः त्रिषष्टि० ४ । ७ । ३४३–४०१ ॥

10

इति प्रशंसां रूपस्याश्रद्दधानावुभौ सुरौ। विजयो वैजयन्तश्च पृथिव्यामवतेरतुः ॥५॥
ततस्तौ विप्ररूपेण रूपान्वेषणहेतवे। प्रासादद्वारि नृपतेस्तस्थतुर्द्वाःस्थसन्निधौ ॥६॥
आसीत् सनत्कुमारोऽपि तदा प्रारब्धमज्जनः। मुक्तनिःशेषनेपथ्यः सर्वाङ्गाभ्यङ्गमुद्वहन् ॥७॥
द्वारस्थौ द्वारपालेन द्विजाती तौ निवेदितौ। न्यायवर्त्ती चक्रवर्ती तदानीमप्यवीविशत् ॥८॥
सनत्कुमारमालोक्य विस्मयस्मेरमानसौ। धूनयामासतुर्मौलिं चिन्तयामासतुश्च तौ ॥९॥ 5
ललाटपट्टः पर्यस्ताष्टमीरजनिजानिकः। नेत्रे कर्णान्तविश्रान्ते जितनीलोत्पलत्विषी ॥१०॥
दन्तच्छदौ पराभूतपक्वविम्बीफलच्छवी। निरस्तशुक्तिकौ कर्णौ कण्ठोऽयं पाञ्चजन्यजित् ॥११॥
करिराजकराकारतिरस्कारकरौ भुजौ। स्वर्णशैलशिलालक्ष्मीविलुण्टाकमुरःस्थलम्[१] ॥१२॥
मध्यभागो मृगारातिकिशोरोदरसोदरः। किमन्यदस्य सर्वाङ्गलक्ष्मीर्वाचां न गोचरः ॥१३॥
अहो कोऽप्यस्य लावण्यसरित्पूरो निरर्गलः। येनाभ्यङ्गं न जानीमो ज्योत्स्नयोडुप्रभामिव ॥१४॥ 10
यथेन्द्रो वर्णयामास तथेदं भाति नान्यथा। मिथ्या न खलु भाषन्ते महात्मानः कदाचन ॥१५॥
किंनिमित्तमिहायातौ भवन्तौ द्विजसत्तमौ। इत्थं सनत्कुमारेण पृष्टौ तावेवमूचतुः ॥१६॥
लोकोत्तरचमत्कारकारकं सचराचरे। भुवने भवतो रूपं नरशार्दूल गीयते ॥१७॥

१ 'मुरस्थ'-रोमु. ॥

दूरतोऽपि तदाकर्ण्य तरङ्गितकुतूहलौ। विलोकयितुमायातावावामवनिवासव ॥१८॥
वर्ण्यमानं यथा लोके शुश्रुवेऽस्माभिरद्भुतम्। रूपं नृप ततोऽप्येतत् सविशेषं निरीक्ष्यते ॥१९॥
ऊचे सनत्कुमारोऽपि स्मितविस्फुरिताधरः। इयं हि कियती कान्तिरङ्गेऽभ्यङ्गतरङ्गिते [1] ॥२०॥
इतो भूत्वा प्रतीक्षेथां क्षणमात्रं द्विजोत्तमौ। यावन्निर्वर्त्यतेऽस्माभिरेष मज्जनकक्षणः ॥२१॥
विचित्ररचिताकल्पं [2] भूरिभूषणभूषितम्। रूपं पुनर्निरीक्षेथां सरत्नमिव काञ्चनम् ॥२२॥
ततोऽवनिपतिः स्नात्वा कल्पिताकल्पभूषणः। साडम्बरः सदोऽध्यास्ताऽम्बररत्नमिवाम्बरम् ॥२३॥
अनुज्ञातौ ततो विप्रौ पुरोभूय महीपतेः। निदध्यतुश्च तद्रूपं विषण्णौ दध्यतुश्च तौ ॥२४॥
क्व तद्रूपं क्व सा कान्तिः क्व तल्लावण्यमप्यगात्। क्षणेनाप्यस्य मर्त्यानां क्षणिकं सर्वमेव हि ॥२५॥
नृपः प्रोवाच तौ कस्माद् दृष्ट्वा मां मुदितौ पुरा। कस्मादकस्मादधुना विषादमलिनाननौ ॥२६॥
ततस्तावूचतुरिदं सुधामधुरया गिरा। महाभाग सुरावावां सौधर्म्मस्वर्गवासिनौ ॥२७॥
मध्येसुरसभं शक्रश्चक्रे त्वद्रूपवर्णनम् [3]। अश्रद्दधानौ तद् द्रष्टुं मर्त्यमूर्त्याऽऽगताविह ॥२८॥
शक्रेण वर्णितं यादृक् तादृगेव पुरेक्षितम्। रूपं नृप तवेदानीमन्यादृशमजायत ॥२९॥



१ यावन्निवर्त्यते—मु. ॥ २ ०रचनाकल्यं—त्रिषष्टि० ४। ७। ३६१ ॥
३ —ख. ग. त्रिषष्टि० ४। ७। ३६८। तादृशं वपुरीक्षितम्—मु. ॥

अधुना व्याधिभिरयं कान्तिसर्व्वस्वतस्करैः। देहः समन्तादाक्रान्तो निःश्वासैरिव दर्पणः ॥३०॥
यथार्थमभिधायेति द्राक्तिरोहितयोस्तयोः। विच्छायं स्वं नृपोऽपश्यद्धिमग्रस्तमिव द्रुमम् ॥३१॥
अचिन्तयच्च धिगिदं सदा गदपदं वपुः। मुधैव मुग्धाः कुर्व्वन्ति तन्मूर्च्छां तुच्छबुद्धयः ॥३२॥
शरीरमन्तरुत्पन्नैर्व्याधिभिर्विविधैरिदम्। दीर्य्यते दारुणैर्दारु दारुकीटगणैरिव ॥३३॥
बहिः कथञ्चिद्यद्येतत् प्ररोच्येत तथापि हि। नैयग्रोधं फलमिव मध्ये कृमिकुलाकुलम् ॥३४॥
रुजा लुम्पति कायस्य तत्कालं रूपसम्पदम्। महासरोवरस्येव वारिशेवालवल्लरी[1] ॥३५॥
शरीरं श्रन्थते[2] नाशा, रूपं याति न पापधीः। जरा स्फुरति न ज्ञानं, धिक् स्वरूपं शरीरिणाम् ॥३६॥
रूपं लवणिमा कान्तिः शरीरं द्रविणान्यपि। संसारे तरलं सर्वं कुशाग्रजलबिन्दुवत् ॥३७॥
अद्यश्वीनविनाशस्य शरीरस्य शरीरिणाम्। सकामनिर्ज्जरासारं तप एव महत् फलम् ॥३८॥
इति सञ्जातवैराग्यभावनः पृथिवीपतिः। प्रव्रज्यां स्वयमादित्सुः सुतं राज्ये न्यवीविशत् ॥३९॥
गत्वोद्याने सविनयं विनयन्धरसूरितः। सर्व्वसावद्यविरतिप्रधानं सोऽग्रहीत्तपः ॥४०॥
महाव्रतधरस्यास्य दधानस्योत्तरान् गुणान्। ग्रामाद् ग्रामं विहरतः समतैकाग्रचेतसः ॥४१॥
गाढानुरागबन्धेन सर्व्वं प्रकृतिमण्डलम्। पृष्ठतोऽगात् करिकुलं महायूथपतेरिव ॥४२॥ —युग्मम्।

१ ०सेवाल० शां. मु.॥ २ श्लथते—मु. खंसं.। श्रथते-त्रिषष्टि० ४।७।३७८॥

निष्कषायमुदासीनं निर्ममं निष्परिग्रहम् । तं पर्युपास्य षण्मासान् कथञ्चित् तन्न्यवर्तत ॥४३॥
यथाविध्यात्तभिक्षाभिरकालापथ्यभोजनैः । व्याधयोऽस्य ववृधिरे सम्पूर्णैर्दोहदैरिव ॥४४॥
कच्छ्र-शोष-ज्वर श्वासा-ऽरुचिकुक्ष्यक्षिवेदनाः । सप्ताधिसेहे पुण्यात्मा सप्त वर्षशतानि सः ॥४५॥
दुःसहान् सहमानस्य तस्याशेषपरीषहान् । उपेयनिरपेक्षस्य[1] समपद्यन्त लब्धयः ॥४६॥
अत्रान्तरे सुरपतिः समुद्दिश्य दिवौकसः । हृदि जातचमत्कारश्चकारेत्यस्य वर्णनम् ॥४७॥
चक्रवर्त्तिश्रियं त्यक्त्वा प्रज्वलत्तृणपूलवत् । अहो सनत्कुमारोऽयं तप्यते दुस्तपं तपः ॥४८॥
तपोमाहात्म्यलब्धासु सर्व्वास्वपि हि लब्धिषु । शरीरनिरपेक्षोऽयं स्वरोगान्न चिकित्सति ॥४९॥
अश्रद्दधानौ तद्वाक्यं वैद्यरूपधरौ सुरौ । विजयो विजयन्तश्च तत्समीपमुपेयतुः ॥५०॥
ऊचतुश्च महाभाग किं रोगैः परिताम्यसि । वैद्यावावां चिकित्सावो विश्वं स्वैरेव भेषजैः ॥५१॥
यदि त्वमनुजानासि रोगग्रस्तशरीरकः[2] । तदह्नाय निगृह्णीवो रोगानुपचितांस्तव ॥५२॥
ततः सनत्कुमारोऽपि प्रत्यूचे भोश्चिकित्सकौ[3] । द्विविधा देहिनां रोगा द्रव्यतो भावतोऽपि च ॥५३॥
क्रोधमानमायालोभा भावरोगाः शरीरिणाम् । जन्मान्तरसहस्रानुगामिनोऽनन्तदुःखदाः ॥५४॥

---

१ त्रिषष्टि० ४ । ७ । ३८६ । उपायनि०—मु. । " तथोपाये प्रवृत्तस्त्वं क्रियासमभिहारतः । यथाऽनिच्छन्नुपेयस्य परां श्रियमशिश्रियः ॥" वीतरागस्तो० ३ । १४ ॥ २ शरीरके—शां. । ३ भो चिकि०—खं. । तौ चिकि०-क. च. ॥

5
10

तांश्चिकित्सितुमीशौ चेद्युवां तर्हि चिकित्सतम् । अथो चिकित्सथो द्रव्यरोगांस्तद् व्रत पश्यतम् ॥५५॥
ततोऽङ्गुलीं गलत्पामाशीर्णां[1] स्वकफविप्रुषा । लिप्त्वा शुल्वं रसेनेव द्राक् सुवर्णीचकार सः ॥५६॥
ततस्तामङ्गुलीं स्वर्णशलाकामिव भास्वतीम् । आलोक्य पादयोस्तस्य पेततुः प्रोचतुश्च तौ ॥५७॥
निरुरूपयिषू रूपं यौ त्वामायातपूर्व्विणौ । तावेव त्रिदशावावां सम्प्रत्यपि समागतौ ॥५८॥
सिद्धलब्धिरपि व्याधिबाधां सोढा तपस्यति । सनत्कुमारो भगवानितीन्द्रस्त्वामवर्णयत् ॥५९॥ 5
आवाभ्यां तदिहागत्य प्रत्यक्षेण परीक्षितम् । इत्युदित्वा च नत्वा च त्रिदशौ तौ तिरोहितौ ॥६०॥
एतन्निदर्शनमात्रं कफलब्धेः प्रदर्शितम् । लब्ध्यन्तरकथा नोक्ता ग्रन्थगौरवभीरुभिः ॥६१॥
योगिनां योगमाहात्म्यात् पुरीषमपि कल्पते । रोगिणां रोगनाशाय कुमुदामोदशालि च ॥६२॥
मलः किल समाम्नातो द्विविधः सर्व्वदेहिनाम् । कर्णनेत्रादिजन्मैको द्वितीयस्तु वपुर्भवः ॥६३॥
योगिनां योगसम्पत्तिमाहात्म्याद् द्विविधोऽपि सः । कस्तूरिकापरिमलो रोगहा सर्व्वरोगिणाम् ॥६४॥ 10
योगिनां कायसंस्पर्शः सिञ्चन्निव सुधारसैः । क्षिणोति तत्क्षणं सर्वानामयानामयाविनाम् ॥६५॥
नखाः केशा रदाश्चान्यदपि योगिशरीरगम्[2] । भजते भेषजीभावमिति सर्व्वौषधिः स्मृता ॥६६॥

॥ ३९ ॥

---

१ गलत्पामां — मु. त्रिषष्टि० ४ । ७ । ३९७ ॥ २ °शरीरकम् — खं. ॥

तथाहि तीर्थनाथानां योगभृच्चक्रवर्त्तिनाम्। देहास्थिशकलस्तोमः सर्व्वस्वर्गेषु पूज्यते ॥६७॥

किञ्च, मेघमुक्तमपि वारि यदङ्गसङ्गमात्राद् नदीवाप्यादिगतमपि सर्व्वरोगहरं भवति। तथा विषमूर्च्छिता अपि यदीयाङ्गसङ्गिवातस्पर्शादेव निर्विषीभवन्ति[1], विषसंपृक्तमप्यन्नं यन्मुखप्रविष्टमविषं भवति, महाविषव्याधिबाधिता अपि यद्वचःश्रवणमात्राद् यद्दर्शनाच्च वीतविकारा भवन्ति, एष सर्वोऽपि सर्वौषधिप्रकारः। एते कफादयो महर्द्धिरूपाः।

अथवा महर्द्धयो विभिन्ना एव। विक्रियालब्धयोऽनेकधा[2], अणुत्व–महत्त्व–लघुत्व–गुरुत्व–प्राप्ति–प्राकाम्ये-शित्व–वशित्वा–ऽप्रतिघातित्वा–ऽन्तर्द्धान–कामरूपित्वादिभेदात्। अणुत्वमणुशरीरविकरणम्, येन बिसच्छिद्रमपि प्रविशति तत्र च चक्रवर्त्तिभोगानपि भुङ्क्ते। महत्त्वं मेरोरपि महत्तरशरीरकरणसामर्थ्यम्। लघुत्वं वायोरपि लघु-तरशरीरता[3]। गुरुत्वं वज्रादपि गुरुतरशरीरतया इन्द्रादिभिरपि प्रकृष्टबलैर्दुःसहता। प्राप्तिर्भूमिस्थस्य अङ्गुल्यग्रेण मेरुपर्व्वताग्र–प्रभाकरादिस्पर्शसामर्थ्यम्। प्राकाम्यमप्सु भूमाविवाऽप्रविशतो[4] गमनशक्तिः, तथा अप्स्विव भूमावुन्मज्जन-निमज्जने। ईशित्वं त्रैलोक्यस्य प्रभुता तीर्थंकर–त्रिदशेश्वरऋद्धिविकरणम्। वशित्वं सर्वजीववशीकरणलब्धिः। अप्रतिघातित्वं अद्रिमध्येऽपि निःसङ्गगमनम्। अन्तर्द्धानमदृश्यरूपता। कामरूपित्वं[5] युगपदेव नानाकाररूपविकरण-शक्तिः। इत्येवमादयो महर्द्धयः।

१ निर्विषा भ०—मु.। २ दृश्यतां तत्त्वार्थ-राज० ३। ३६॥ शब्दतोऽर्थतश्चप्रभूतं साम्यमत्र तत्त्वार्थराजवार्तिकेन [३। ३६] सह वर्तते। तत्त्वार्थभा० १०। ७॥ ३ ०शरीरिता—शां.॥ ४ °विश प्रवि०—मु.॥ ५ रूपत्वं—खं.॥

अथवा प्रकृष्टश्रुतावरणवीर्यान्तरायक्षयोपशमाविर्भूतासाधारणमहाप्रज्ञर्द्धिलाभा अनधीतद्वादशाङ्गचतुर्दशपूर्वा[1] अपि सन्तो यमर्थं चतुर्दशपूर्व्वी निरूपयति तस्मिन् विचारकृच्छ्रेऽप्यर्थेऽतिनिपुणप्रज्ञाः प्राज्ञश्रमणाः। अन्येऽधीतदशपूर्व्वा रोहिणी प्रज्ञप्त्यादिमहाविद्यादिभिरङ्गुष्ठप्रसेनिकादिभिरल्पविद्याभिश्चोपनतानां[2] भूयसीनामृद्धीनामवशगा विद्यावेगधारणात्[3] विद्याधरश्रमणाः। केचिद्-बीज-कोष्ठ-पदानुसारिबुद्धिविशेषर्द्धियुक्ताः। सुकृष्टसुमतीकृते[4] क्षेत्रे क्षित्युदकाद्यनेककारणविशेषापेक्षं बीजमनुपहतं यथानेकबीजकोटीप्रदं भवति तथैव ज्ञानावरणादिक्षयोपशमातिशयप्रतिलम्भादेकार्थबीजश्रवणे सति अनेकार्थबीजानां प्रतिपत्तारो बीजबुद्धयः। कोष्ठागारिकस्थापितानामसङ्कीर्णानामविनष्टानां भूयसां धान्यबीजानां यथा कोष्ठेऽवस्थानं तथा परोपदेशादवधारितानां श्रौतानामर्थग्रन्थबीजानां भूयसामनुस्मरणमन्तरेणाविनष्टानामवस्थानात् कोष्ठबुद्धयः। पदानुसारिणोऽनुस्रोतःपदानुसारिणः प्रतिस्रोतःपदानुसारिण उभयपदानुसारिणश्च।

१ अनधीतैकादशांग°—शां.। दृश्यतां तत्त्वार्थराज० ३। ३६॥ २ °काभिरल्पविद्यादिभिश्चो°—मु.। "विद्यानुवादम्। तत्र अङ्गुष्ठप्रसेनादीनामल्पविद्यानां सप्त शतानि रोहिण्यादीनां महाविद्यानां पञ्च शतानि।" तत्त्वार्थराज० १। २०। "पण्हावागरणेसु णं अट्ठुत्तरं पसिणसयं...तं जहा–अंगुट्ठपसिणाइं बाहुपसिणाइं अद्दागपसिणाइं ....।" नन्दीसू० ५५॥ ३ °धारणा वि° –शां.॥ ४ ०ष्टवसुमती०–मु.। दृश्यतां तत्त्वार्थराज० ३। ३६। "दात्रं लवित्रं तन्मुष्टौ वण्टो मत्यं समीकृतौ।[३। ५५६]...'मत' शब्दः साम्यपर्यायः, मतस्य करणं मत्यम्,...असमस्य समीकरणं तत्र।" —अभि० चिन्ता० स्वो०॥



॥ ४१ ॥

तत्रादिपदस्यार्थं ग्रन्थं च परत उपश्रुत्य आ अन्त्यपदादर्थग्रन्थविचारणासमर्थपटुतरमतयोऽनुस्रोतःपदानुसारिबुद्धयः। अन्त्यपदस्यार्थं ग्रन्थं च परत उपश्रुत्य ततः प्रातिकूल्येनादिपदादा अर्थग्रन्थविचारपटवः प्रतिस्रोतःपदानुसारिबुद्धयः[1]। मध्यपदस्यार्थं ग्रन्थं च परकीयोपदेशादधिगम्याद्यन्तावधिपरिच्छिन्नपदसमूहप्रतिनियतार्थग्रन्थोदधिसमुत्तरणसमर्थासाधारणातिशयपटुविज्ञाननियता उभयपदानुसारिबुद्धयः। बीजबुद्धिरेकपदार्थावगमादनेकार्थानामवगन्ता, पदानुसारी त्वेकपदावगमात् पदान्तराणामवगन्तेति विशेषः। 5

तथा मनोवाक्कायबलिनः। तत्र[2] प्रकृष्टज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषेण वस्तूद्धृत्यान्तर्मुहूर्तेन सकलश्रुतोदध्यवगाहनावदातमनसो मनोबलिनः। अन्तर्मुहूर्तेन सकलश्रुतवस्तूच्चारणसमर्था वाग्बलिनः। अथवा पदवाक्यालङ्कारोपेतां वाचमुच्चैरुच्चारयन्तोऽविरहितवाक्क्रमाहीनकण्ठा वाग्बलिनः। वीर्यान्तरायक्षयोपशमाविर्भूतासाधारणकायबलत्वात् प्रतिमयावतिष्ठमानाः श्रमक्लमविरहिता वर्षमात्रप्रतिमाधरा बाहुबलिप्रभृतयः कायबलिनः।

तथा क्षीरमधुसर्पिरमृतास्रविणः[3]। येषां पात्रपतितं कदन्नमपि क्षीरमधुसर्पिरमृतरसवीर्यविपाकं जायते वचनं[4] वा शारीरमानसदुःखप्राप्तानां देहिनां क्षीरादिवत् सन्तर्पकं भवति[5] ते क्षीरास्रविणो मध्वास्रविणः सर्पिरास्रविणोऽमृतास्रविणश्च। 10

१ °श्रोतः°-मु.। पयमग्रेऽपि सर्वत्र ॥ २ दृश्यतां तत्त्वार्थराज० ३।३६ ॥ ३ °श्रविणो-शां. ॥ ४ वचनं च-खं.। ५ ०श्रवि०—खं.। पवमग्रेऽपि ॥

केचिदक्षीणर्द्धियुक्ताः, ते च द्विविधा अक्षीणमहानसा[1] अक्षीणमहालयाश्च । येषामसाधारणान्तरायक्षयोपशमा-दल्पमात्रमपि पात्रपतितमन्नं गौतमादीनामिव बहुभ्यो दीयमानमपि न क्षीयते तेऽक्षीणमहानसाः । अक्षीणमहा-लयर्द्धिप्राप्ताश्च यत्र परिमितभूप्रदेशेऽवतिष्ठन्ते तत्रासंख्याता अपि देवास्तिर्यञ्चो मनुष्याश्च सपरिवाराः परस्परबाधा-रहितास्तीर्थकरपर्षदीव सुखमासते । इति प्रज्ञाश्रमणादिषु[2] महाप्रज्ञादयो महर्द्धयो दर्शिताः । 5

सर्वेन्द्रियाणां विषयान् गृह्णात्येकमपीन्द्रियम् ।
यत्प्रभावेन सम्भिन्नस्रोतो[3]लब्धिस्तु सा मता ॥ १ ॥ ८ ॥

तथा—

चारणाशीविषावधिमनःपर्यायसम्पदः ।
योगकल्पद्रुमस्यैता विकासिकुसुमश्रियः ॥ ९ ॥ 10

अतिशयचरणाच्चारणा अतिशयगमनादित्यर्थः, तत्सम्पत् तल्लब्धिरित्यर्थः । आशीविषलब्धिर्निग्रहानुग्रहसामर्थ्यम् । अवधिज्ञानलब्धिर्मूर्तद्रव्यविषयं ज्ञानम् । मनःपर्यायज्ञानलब्धिर्मनोद्रव्यप्रत्यक्षीकरणशक्तिः । एता लब्धयो योगकल्प-वृक्षस्य कुसुमभूताः । फलं तु केवलज्ञानं मोक्षो वा । भरत-मरुदेव्युदाहरणाभ्यां वक्ष्यते । तथाहि—



१ दृश्यतां तत्त्वार्थराज० ३ । ३६ ॥ २ ०श्रवणा०—शां. खं. ॥ ३ °श्रोतो०-मु. ॥

द्विविधाश्चारणा ज्ञेया जङ्घा-विद्योत्थशक्तितः[1]। तत्राद्या रुचकद्वीपं यान्त्येकोत्पातलीलया ॥१॥
वलन्तो रुचकद्वीपादेकेनोत्पतनेन ते। नन्दीश्वरे समायान्ति द्वितीयेन यतो गताः ॥२॥
ते चोर्ध्वगत्यामेकेन समुत्पतनकर्म्मणा। गच्छन्ति पाण्डकवनं[3] मेरुशैलशिरःस्थितम् ॥३॥
ततोऽपि वलिता एकोत्पातेनायान्ति नन्दनम्। उत्पातेन द्वितीयेन प्रथमोत्पातभूमिकाम् ॥४॥
विद्याचारणास्तु गच्छन्त्येकेनोत्पातकर्म्मणा। मानुषोत्तरमन्येन द्वीपं नन्दीश्वराह्वयम् ॥५॥
तस्मादायान्ति चैकेनोत्पातेनोत्पतिता यतः। यान्त्यायान्त्यूर्द्धमार्गेऽपि तिर्यग्यानक्रमेण ते ॥६॥

5

अन्येऽपि बहुभेदाश्चारणा भवन्ति। तद्यथा[4] आकाशगामिनः पर्यङ्कावस्था निषण्णाः कायोत्सर्गशरीरा वा पादोत्क्षेपनिक्षेपक्रमाद्विना व्योमचारिणः। केचित्तु जल-जङ्घा-फल-पुष्प-पत्र-श्रेण्य-ग्निशिखा-धूम-नीहारा-ऽवश्याय-मेघवारिधारा-मर्कटकतन्तु-ज्योतीरश्मि-पवनाद्यालम्बनगतिपरिणामकुशलाः। जलमुपेत्य वापी-निम्नगा-समुद्रादिष्वप्कायिकजीवानविराधयन्तो जले भूमाविव पादोत्क्षेपनिक्षेपकुशला जलचारणाः। भुव उपरि चतुरङ्गुलप्रमिते आकाशे जङ्घानिक्षेपोत्क्षेपनिपुणा जङ्घाचारणाः। नानाद्रुमफलान्युपादाय फलाश्रयप्राण्यविरोधेन फलतले पादोत्क्षेपनिक्षेपकुशलाः फल-

10

१ आव० मल० पृ० ७८-७९। विशेषाव० गा० ७८२-७८६ ॥ २ तुल्यप्रायाः श्लोकाः त्रिषष्टि० १।१। ८७५-८७९ ॥ ३ पाण्डुक०-मु० ॥ ४ दृश्यतां तिलोयप० ४।१०३३-१०४७। षट्खंडागमधवला० ९।४, १, १७। तत्त्वार्थराज० ३।३६ ॥

चारणाः । नानाद्रुम-लता-गुल्म-पुष्पाण्युपादाय पुष्पसूक्ष्मजीवानविराधयन्तः कुसुमतलदलावलम्बनासङ्गगतयः[1] पुष्प-
चारणाः । नानावृक्षगुल्मवीरुल्लतावितानानाप्रवालतरुणपल्लवालम्बनेन पर्णसूक्ष्मजीवानविराधयन्तश्चरणोत्क्षेपनिक्षेपपटवः पत्र-
चारणाः । चतुर्योजनशतोच्छ्रितस्य निषधस्य नीलस्य चाद्रेष्टङ्कच्छिन्नां श्रेणिमुपादायोपर्यधो वा पादपूर्वकमुत्तरणा-
वतरणनिपुणाः श्रेणिचारणाः । अग्निशिखामुपादाय तेजःकायिकानविराधयन्तः स्वयमदह्यमानाः पादविहारनिपुणा
अग्निशिखाचारणाः । धूमवर्त्ति तिरश्चीनामूर्द्ध्वगां वा आलम्ब्यास्खलितगमनास्कन्दिनो धूमचारणाः । नीहारमवष्टभ्याप्का-
यिकपीडामजनयन्तो गतिमसङ्गामश्नुवाना नीहारचारणाः । अवश्यायमाश्रित्य तदाश्रयजीवानुपरोधेन यान्तोऽवश्याय-
चारणाः । नभोवर्त्मनि प्रविततजलधरपटलपटास्तरणे जीवानुपघातिचङ्क्रमणप्रभवो मेघचारणाः । प्रावृषेण्यादिजल-
धरादेर्विनिर्गतवारिधारावलम्बनेन प्राणिपीडामन्तरेण यान्तो वारिधाराचारणाः । कुब्जवृक्षान्तरालभाविनभःप्रदेशेषु
कुब्जवृक्षादिसम्बद्धमर्कटकतन्त्वालम्बनपादोद्धरणनिक्षेपावदाता मर्कटकतन्तूनच्छिन्दन्तो यान्तो मर्कटकतन्तुचारणाः ।
चन्द्रार्कग्रहनक्षत्राद्यन्यतमज्योतीरश्मिसम्बन्धेन भुवीव पादविहारकुशलाः ज्योतीरश्मिचारणाः । पवनेष्वनेकदिग्मुखोन्मुखेषु
प्रतिलोमानुलोमवृत्तिषु[2] तत्प्रदेशावलीमुपादाय गतिमस्खलितचरणविन्यासामास्कन्दन्तो वायुचारणाः ।

तपश्चरणमाहात्म्याद् गुणादितरतोऽपि वा । आशीविषाः समर्थाः स्युर्निग्रहेऽनुग्रहेऽपि च ॥१॥

द्रव्याणि मूर्त्तिमन्त्येव विषयो यस्य सर्वतः । नैयत्यरहितं ज्ञानं तत् स्यादवधिलक्षणम् ॥२॥

---

१ °नसङ्ग०—मु. ॥ २ ०वर्त्तिषु—मु. ॥



5

10

|| ४९ ||

स्यान्मनःपर्ययो ज्ञानं मनुष्यक्षेत्रवर्त्तिनाम् । प्राणिनां समनस्कानां मनोद्रव्यप्रकाशकम् ॥३॥
ऋजुश्च विपुलश्चेति स्यान्मनःपर्ययो द्विधा । विशुद्ध्यप्रतिपाताभ्यां विपुलस्तु विशिष्यते ॥४॥ ९ ॥

केवलज्ञानलक्षणफलोपदर्शनेन योगमेव स्तौति—

**अहो योगस्य माहात्म्यं प्राज्यं साम्राज्यमुद्वहन् ।**
**अवाप केवलज्ञानं भरतो भरताधिपः ॥ १० ॥**

अहो इत्याश्चर्ये, प्राज्यं पुष्कलं साम्राज्यं चक्रवर्त्तित्वमुद्वहन्नेव, न पुनस्त्यक्तराज्यसम्पत्, भरताधिपः षट्खण्डभरतक्षेत्रस्वामी । तथाहि—

एतस्यामवसर्पिण्यामेकान्तसुषमारके । सागरोपमकोटीनां चतुष्कोटिमिते गते ॥१॥
सागरोपमकोटीनां तिसृभिः कोटिभिर्मिते । अरके सुषमानाम्नि द्वितीयेऽपि[1] गते सति ॥२॥
तद्द्विकोटीकोटिमिते[2] सुषमदुःषमारके । पल्याष्टमांशशेषेऽन्तर्दक्षिणार्धस्य भारते ॥३॥
सप्ताभूवन् कुलकरा इमे विमलवाहनः । चक्षुष्मांश्च यशस्वी चाभिचन्द्रोऽथ प्रसेनजित् ॥४॥
मरुदेवश्च नाभिश्च तत्र नाभेर्गृहिण्यभूत् । मरुदेवेति सच्छीलपवित्रितजगत्त्रया ॥५॥
तृतीयारस्य शेषेषु पूर्वलक्षेषु संख्यया । चतुरशीतौ सार्धाष्टमासे वर्षत्रयेऽपि च ॥६॥

१ द्वितीये विगते खं. ॥ २ °कोटाकोटि—मु. ॥



5

10

तस्याश्च कुक्षौ सर्वार्थविमानादवतीर्णवान् । चतुर्दशमहास्वप्नसूचितः प्रथमो जिनः ॥७॥
नाभेश्च मरुदेव्याश्च तदा सम्यगजानतोः । स्वप्नार्थमिन्द्राः सर्वेऽपि व्याचक्रुः प्रमदोन्मदाः ॥८॥
ततः सुखेन जातस्य शुभेऽह्नि परमेशितुः । षट्पञ्चाशद् दिक्कुमार्यः सूतिकर्म प्रचक्रिरे ॥९॥
मेरुमूर्ध्नि विभुं नीत्वा कृत्वोत्सङ्गे दिवस्पतिः । तीर्थोदकैरभ्यषिञ्चत् स्वं च हर्षाश्रुवारिभिः ॥१०॥
वासवेन ततो मातुरर्पितस्य जगद्गुरोः । धात्रीकर्म्माणि सर्व्वाणि विदधुर्विबुधस्त्रियः ॥११॥ 5
निरीक्ष्य ऋषभाकारं लक्ष्मोरौ दक्षिणे प्रभोः । चक्रतुः पितरौ नाम ऋषभेति प्रमोदतः ॥१२॥
अमन्दं ददद्दानन्दं सुधारश्मिरिव प्रभुः । त्रिदशैस्त्रिदशाहारपोषितो[1] ववृधे क्रमात् ॥१३॥
अन्येद्युर्युसदामीश उपासितुमुपागतः । अचिन्तयद्भगवतो वंशः क[2] इव कल्प्यताम् ॥१४॥
अवगत्य तदाकूतमवधिज्ञानतो विभुः । तत्करेक्षुलतां लातुं करीव करमक्षिपत् ॥१५॥
तां समर्प्य जगद्भर्त्तुः प्रणम्य च बिडौजसा । इक्ष्वाकुरिति वंशस्य तदा नाम प्रतिष्ठितम् ॥१६॥ 10
[3]बाल्यं कल्यमिवोल्लङ्घ्य मध्यन्दिनमिवार्य्यमा । विभुर्विभक्तावयवं द्वितीयं शिश्रिये वयः ॥१७॥
यौवनेऽपि मृदू रक्तौ कमलोदरसोदरौ । उष्णावकम्प्रावस्वेदौ पादौ समतलौ प्रभोः ॥१८॥

१ त्रिदशाहारयोगेन पोषितो—मु. ॥ २ क इह—मु. ॥ ३ इत आरभ्य ६३ पर्यन्ताः प्रायः सर्वेऽपि श्लोकाः समानप्रायाः त्रिषष्टि० १।२।६८५-७३० ॥

नतार्त्तिच्छेदनायेव प्रपदे[1] चक्रमीशितुः। सदास्थितश्रीकरेणोरिव दामाङ्कुशध्वजाः ॥१९॥
स्वामिनः पादयोर्लक्ष्मीलीलासदनयोरिव। शङ्खकुम्भौ तले पार्ष्णौ स्वस्तिकश्च विरेजिरे ॥२०॥
मांसलो वर्तुलस्तुङ्गो भुजङ्गमफणोपमः। अङ्गुष्ठः स्वामिनो वत्स[2] इव श्रीवत्सलाञ्छितः ॥२१॥
प्रभोर्निवात[3]निष्कम्प[4]स्निग्धदीपशिखोपमाः। नीरन्ध्रा ऋजवोऽङ्गुल्यो दलानीव पदाब्जयोः ॥२२॥
नन्द्यावर्ता जगद्भर्त्तुः पादाङ्गुलितलेष्वभान्। यद्बिम्बानि क्षितौ धर्म्मप्रतिष्ठाहेतुतां ययुः ॥२३॥
यवाः पर्वस्वङ्गुलीनामधो वापीभिराबभुः। उप्ता इव जगल्लक्ष्मीविवाहाय जगत्प्रभोः ॥२४॥
कन्दः पादाम्बुजस्येव पार्ष्णिर्वृत्तायतः पृथुः। अङ्गुष्ठाङ्गुलिफणिनां फणामणिनिभा नखाः ॥२५॥
हेमारविन्दमुकुलकर्णिकागोलकश्रियम्। गूढौ गुल्फौ वितेनाते नितान्तं स्वामिपादयोः ॥२६॥
प्रभोः पादावुपर्यानुपूर्व्या कूर्म्मवदुन्नतौ। अप्रकाशसिरौ स्निग्धच्छवी लोमविवर्जितौ ॥२७॥
अन्तर्मग्नास्थिपिशितपुष्कले क्रमवर्त्तुले। एणीजङ्घाविडम्बिन्यौ जङ्घे गौर्यौ जगत्पतेः ॥२८॥
जानुनी स्वामिनोऽधातां वर्तुले मांसपूरिते। तूलपूर्णपिधानान्तःक्षिप्तदर्पणरूपताम् ॥२९॥
ऊरू च मृदुलौ स्निग्धावानुपूर्व्येण पीवरौ। बिभराञ्चक्रतुः प्रौढकदलीस्तम्भविभ्रमम् ॥३०॥

[1] प्रपेदे-खं. मु.। "पादाग्रं प्रपदम्" अभि० चि० ३।२८१ ॥ [2] वक्ष-शां.। "क्रोडोरो हृदयस्थानं वक्षो वत्सो भुजान्तरम।" अभि० चि० ३।२६६ ॥ [3] निर्वात-खं. मु. ॥ [4] °म्पाः स्नि—मु. ॥

स्वामिनः कुञ्जरस्येव मुष्कौ गूढौ समस्थिती । अतिगूढं च पुंश्चिह्नं कुलीनस्येव वाजिनः ॥३१॥
तच्चासिरमनिम्नोच्चमह्रस्वादीर्घमश्लथम् । सरलं मृदु निर्लोम वर्तुलं सुरभीन्द्रियम् ॥३२॥
शीतप्रदक्षिणावर्त्तशब्दयुक्तैकधारकम् । अबीभत्सावर्त्ताकारकोशस्थं पिञ्जरं तथा ॥३३॥
आयता मांसला स्थूला विशाला कठिना कटिः । मध्यभागस्तनुत्वेन कुलिशोदरसोदरः ॥३४॥

नाभिर्बभार गम्भीरा सरिदावर्त्तविभ्रमम् । कुक्षी स्निग्धौ मांसवन्तौ कोमलौ सरलौ समौ ॥३५॥
अधाद् वक्षःस्थलं स्वर्णशिलापृथुलमुन्नतम् । श्रीवत्सरत्नपीठाङ्कं श्रीलीलावेदिकाश्रियम् ॥३६॥
दृढपीनोन्नतौ स्कन्धौ ककुद्मत्ककुदोपमौ । अल्परोमोन्नते कक्षे गन्धस्वेदमलोज्झिते ॥३७॥
पीनौ पाणिफण[1]च्छत्रौ भुजावाजानुलम्बिनौ[2] । चञ्चलाया नियमने नागपाशाविव श्रियः ॥३८॥
नवाम्रपल्लवाताम्रतलौ निष्कर्मकर्कशौ[3] । अस्वेदनावपच्छिद्रावुष्णौ पाणी जगत्पतेः ॥३९॥

दण्ड-चक्र-धनु-मत्स्य-श्रीवत्स-कुलिशाङ्कुशैः । ध्वजा-ऽब्ज-चामर-च्छत्र-शङ्ख-कुम्भा-ऽब्धि-मन्दरैः ॥४०॥
मकर-र्षभ-सिंहा-ऽश्व-रथ-स्वस्तिक-दिग्गजैः । प्रासाद-तोरण-द्वीपैः पाणी पादाविवाङ्कितौ ॥४१॥
अङ्गुष्ठाङ्गुलयः शोणाः सरलाः शोणपाणिजाः । प्ररोहा इव कल्पद्रोः प्रान्तमाणिक्यपुष्पिताः ॥४२॥

---

१ ०फणि° मु. । °फणा° —त्रिषष्टि० १ । २ । । ७०६ ॥ २ ०लम्बिनौ—खं. मु. ॥ ३ निष्कम्प्रकर्कशौ—खं. ॥



॥ ४९ ॥

यवाः स्पष्टमशोभन्त स्वामिनोऽङ्गुष्ठपर्वसु । यशोवरतुरङ्गस्य पुष्टिवैशिष्ट्यहेतवः ॥४३॥
अङ्गुलीमूर्धसु विभोः सर्वसम्पत्तिशंसिनः । दधुः प्रदक्षिणावर्त्ता दक्षिणावर्त्तशङ्खताम् ॥४४॥
कृच्छ्रादुद्धरणीयानि जगन्ति त्रीण्यपीत्यभान् । संख्यालेखा इव तिस्रो मूले कराब्जयोः ॥४५॥
वर्त्तुलोऽनतिदीर्घश्च लेखात्रयपवित्रितः । गम्भीरध्वनिराधत्ते कण्ठः कम्बुविडम्बनाम् ॥४६॥
विमलं वर्त्तुलं कान्तितरङ्गि वदनं विभोः । पीयूषदीधितिरिवापरो लाञ्छनवर्जितः ॥४७॥
मसृणौ मांसलौ स्निग्धौ कपोलफलकौ प्रभोः । दर्पणाविव सौवर्णौ वाग्लक्ष्म्योः सहवासयोः ॥४८॥
अन्तरावर्त्तसुभगौ कर्णौ स्कन्धान्तलम्बिनौ[1] । प्रभोर्मुखप्रभासिन्धुतीरस्थे शुक्तिके इव ॥४९॥
ओष्ठौ बिम्बोपमौ[2] दन्ता द्वात्रिंशत् कुन्दसोदराः । क्रमस्फारा क्रमोत्तुङ्गवंशा नाशा महेशितुः ॥५०॥
अह्रस्वदीर्घं चिबुकं मांसलं वर्त्तुलं मृदु । मेचकं बहुलं स्निग्धं कोमलं श्मश्रु तायिनः ॥५१॥
प्रत्यग्रकल्पविटपिप्रवालारुणकोमला । प्रभोर्जिह्वाऽनतिस्थूला द्वादशाङ्गागमार्थसूः ॥५२॥
अन्तरा कृष्णधवले प्रान्तरक्ते विलोचने । नीलस्फटिकशोणाश्ममणिन्यासमये इव ॥५३॥
ते च कर्णान्तविश्रान्ते कज्जलश्यामपक्ष्मणी । विकस्वरे तामरसे निलीनालिकुले इव ॥५४॥
विभराञ्चक्रतुर्भर्त्तुः श्यामले कुटिले भ्रुवौ । दृष्टिपुष्करिणीतीरसमुद्भिन्नलताश्रियम् ॥५५॥

5

10

१ ०लम्बितौ—खं. मु. ॥ स्कन्धावलम्बिनौ—त्रिषष्टि० १ । २ । ७१७ ॥ २ विपुलं—खं. ॥

विशालं मांसलं वृत्तं मसृणं कठिनं समम्। भालस्थलं जगद्भर्तुरष्टमीसोमसोदरम् ॥५६॥
भुवनस्वामिनो मौलिरानुपूर्व्या समुन्नतः। दधावधोमुखीभूतच्छत्रसब्रह्मचारिताम् ॥५७॥
मौलिच्छत्रे महेशस्य जगदीशत्वशंसिनि। वृत्तमुत्तुङ्गमुष्णीषं शिश्रिये कलशश्रियम् ॥५८॥
केशाश्चकाशिरे मूर्ध्नि प्रभोर्भ्रमरमेचकाः। कुञ्चिताः कोमलाः स्निग्धाः कालिन्द्या इव वीचयः ॥५९॥
गोरोचनागर्भगौरी स्निग्धस्वच्छा त्वगाबभौ। स्वर्णद्रवविलिप्तेव तनौ त्रिजगदीशितुः ॥६०॥
मृदूनि भ्रमरश्यामान्यद्वितीयोद्गमानि च। बिसतन्तुतनीयांसि लोमानि स्वामिनस्तनौ ॥६१॥
[1]उत्फुल्लकुमुदामोदः श्वासो विस्रेतरत् पलम्। गोक्षीरधाराधवलं रुधिरं च जगत्पतेः ॥६२॥
इत्यसाधारणैर्नानालक्षणैर्लक्षितः प्रभुः। रत्नै रत्नाकर इव सेव्यः [2]कस्येव नाभवत् ॥६३॥
[3]अन्येद्युः क्रीडया क्रीडद् बालभावानुरूपया। मिथो मिथुनकं किञ्चित् तले तालतरोरगात् ॥६४॥
तदैव दैवदुर्योगात् तन्मध्यान्नरमूर्द्धनि। तडिद्दण्ड इवैरण्डेऽपतत् तालफलं महत् ॥६५॥
प्रहतः काकतालीयन्यायेनाऽऽश्वेव मर्म्मणि। विपन्नो दारकस्तत्र प्रथमेनापमृत्युना ॥६६॥
कालधर्म्मं गते तस्मिंस्तद्द्वितीया नितम्बिनी। [4]यूथभ्रष्टा कुरङ्गीव किंकर्त्तव्यजडाऽभवत् ॥६७॥

१ त्रिषष्टि० १। २। ६६१-६६२॥ २ कस्येह—मु.॥ ३ इतः प्रभृति ६६ पर्यन्तं समानाः श्लोकाः त्रिषष्टि० १। २। ७३५—७३७॥ ४ त्रिषष्टि० १। २। ७४४॥

॥ ५१ ॥

अकाण्डमुद्गराघातेनेव तेनापमृत्युना । बभूवुर्मूर्च्छितानीव मिथुनान्यपराण्यपि ॥६८॥
तानि तामग्रतः कृत्वा नारीं पुरुषवर्ज्जिताम् । किंकर्त्तव्यविमूढानि श्रीनाभेरुपनिन्यिरे ॥६९॥
एषा वृषभनाथस्य धर्म्मपत्नी भवत्विति । प्रतिजग्राह तां नाभिर्नेत्रकैरवकौमुदीम् ॥७०॥
अन्यदा तु विभोरुद्यत्प्राग्भोगफलकर्म्मणः । आगादिन्द्रो विवाहार्थं वृन्दारकगणान्वितः ॥७१॥
ततः स्वर्णमयस्तम्भभ्राजिष्णुमणिपुत्रिकम् । अनेकनिर्गमद्वारमकार्षुर्मण्डपं सुराः ॥७२॥
श्वेतदिव्यांशुकोल्लोचच्छलेन गगनस्थया । गङ्गयेवाश्रितः सोऽभूद् भूरिशोभादिदृक्षया ॥७३॥
तोरणानि चतुर्दिक्षु सन्तानतरुपल्लवैः । तत्राभूवन् धनूंषीव सज्जितानि मनोभुवा ॥७४॥
चतस्रो रत्नकलशश्रेणयोऽभ्रंलिहाग्रकाः । पर्यष्ठाप्यन्त देवीभिर्निधानानि रतेरिव ॥७५॥
वप्रुर्मण्डपद्वारे चेलक्नोपं पयोमुचः । चक्रे मध्ये सुरीभिर्भूः पङ्किला यक्षकर्दमैः ॥७६॥

5

---

१ समानः सार्धश्लोकः त्रिषष्टि० १ । २ । ७५५–७५६ ॥ २ °रभ्युद्यद्भोग°—क. छ. ॥ ३ देवदेवीगणा—खं. ॥ ४ °भूत् तस्य शोभा—खं. । “°भूत् तत्कौतुकदिदृक्षया”—त्रिषष्टि० १ । २ । ७८१ ॥ ५ “°तोरणानि प्रतिदिशं...”—त्रिषष्टि० । १ । २ । ७७५ ॥ ६ ख. ग. त्रिषष्टि० १ । २ । ७८३ । ०हाग्रगाः मु. ॥ ७ पर्यस्था° मु० । पर्यष्ठा° — त्रिषष्टि० १ । २ । ७८३ । “स्था-सेनि-सेध-सिच-सञ्जां द्वित्वेऽपि” — सि० २ । ३ । ४० ॥ ८ चेलोत्क्षेपं मु. । अत्र ‘चेलक्नोपं’ शां. खं. पाठः, अयमेव च साधुः “क्नूयैङ् शब्दोन्दनयोः” [ हैमधा० ८०२ ] इति

10

वाद्यमानेषु तूर्येषु गीयमाने च मङ्गले। अवादयन्नगायंश्च प्रतिशब्दैर्दिगङ्गनाः ॥७७॥
सुमङ्गला-सुनन्दाभ्यां कुमारीभ्यामकारयत्। वासवः परमेशस्य पाणिग्रहमहोत्सवम् ॥७८॥
ततः सुमङ्गलादेवी देवैः प्रकृतमङ्गला। अपत्ये भरतब्राह्म्यौ युग्मरूपे अजीजनत् ॥७९॥
त्रैलोक्यजनितानन्दा सुनन्दा सुषुवे युगम्। सुबाहुं बाहुबलिनं सुन्दरीं चातिसुन्दरीम् ॥८०॥
पुनरेकोनपञ्चाशत् पुंयुगानि सुमङ्गला। असूत बलिनो मूर्त्तान् द्वैरूप्येणेव मारुतान् ॥८१॥
अन्येद्युरन्याय इति पूत्कारोद्धूतबाहुभिः। नाभिर्व्यंज्ञपि सम्भूय सर्वैर्मिथुनकैरिदम् ॥८२॥
तिस्रो हकारमकारधिकाराख्याः सुनीतयः। न गण्यन्तेऽधुना पुंभिः कुर्वद्भिरसमञ्जसम् ॥८३॥
ततः कुलकरोऽप्यूचे त्रातास्मादसमञ्जसात्। एष वो वृषभः स्वामी तद्वर्त्तध्वं तदाज्ञया ॥८४॥
तदा कुलकराज्ञातः कर्त्तु[1] राज्यस्थितिं स्फुटाम्। प्रभुर्ज्ञानत्रयमयो मिथुनान्येवमन्वशात् ॥८५॥
राजा भवति मर्य्यादाव्यतिक्रमनिरोधकः। तस्योच्चासनदानेनाऽभिषेकः क्रियते जलैः ॥८६॥

---

धातोर्ण्यन्तस्यात्र प्रयोगः। " अर्त्ति-री-व्ली-ह्री-यिक्नू-क्ष्माय्यातां पुः [ सि० ४ । २ । २१ ]। य्वोः प्वय्व्यञ्जने लुक् [ सि० ४ । ४ । १२१ ]। चेलार्थात् क्नोपेः [सि० ५ । ४ । ५८। ] चेलार्थाद् व्याप्यात् परात् क्नोपयतेस्तुल्यकर्तृकार्थाद् वृष्टिमाने गम्ये धातोः सम्बन्धे णम् वा स्यात्। चेलक्नोपं वृष्टो मेघः।"—सि० ल० ॥

१ स्फुटं—खं. ॥



॥ ५३ ॥

आकर्ण्य वचनं भर्तुस्ते सर्व्वे युग्मधर्म्मिणः। तच्छिक्षया ययुः पत्रपुटैर्जलजिघृक्षया ॥८७॥
तदा चासनकम्पेनावधिज्ञानप्रयोगतः। विज्ञातभगवद्राज्यसमयः शक्र आययौ ॥८८॥
रत्नसिंहासनेऽध्यास्य वासवः परमेश्वरम्। साम्राज्येऽभिषिषेचालश्चक्रे च मुकुटादिभिः ॥८९॥
इतश्चाम्भोजिनीपत्रपुटैरञ्जलिधारितैः। निजं मन इव स्वच्छमानिन्ये मिथुनैर्जलम् ॥९०॥
उदयाद्रिमिवार्केण मुकुटेनोपशोभितम्। अत्यन्तविमलैर्वस्त्रैर्व्योमेव शरदम्बुदैः ॥९१॥
हंसैरिव शरत्कालं सञ्चरच्चारुचामरैः। कृताभिषेकं नाभेयं ददृशुस्तानि विस्मयात् ॥९२॥ [युग्मम्]
नैतद्युक्तं प्रभोर्मूर्ध्नि क्षेप्तुमेवं विमर्शिभिः। विनीतैर्मिथुनैर्वारि निदधे पादपद्मयोः ॥९३॥
योजनान्यथ विस्तीर्णां नव द्वादश चायताम्। विनीताख्यां पुरीं कर्तुं श्रीदमुक्त्वा[1] हरिर्ययौ ॥९४॥
सोऽपि रत्नमयीं भूमेर्माणिक्यमुकुटोपमाम्। व्यधात् द्विषामयोध्येति तामयोध्यापराभिधाम् ॥९५॥
[2]तां च निर्माय निर्मायः पूरयामास यक्षराट्। अक्षय्यरत्न-वसन-धन-धान्यैर्निरन्तरम् ॥९६॥
वज्रेन्द्रनीलवैडूर्यहर्म्यकिर्म्मीररश्मिभिः। भित्तिं विनापि खे तत्र चित्रकर्म्म विरच्यते ॥९७॥[3]

१ श्रीद मुक्त्वा—शां. ॥ २ इतः प्रभृति १०५ पर्यन्तं समानाः श्लोकाः त्रिषष्टि० १।२।९१३-९२३ ॥
३ इतः ९७ श्लोकात् परं यद्यपि—
"तत्रोच्चैः काञ्चनैश्चैत्यैर्मेरुशृङ्गशिरांस्यभि। पताकाम्बनलीलेव ध्वजव्याजाद् वितन्यते ॥"

तद्वप्रे दीप्रमाणिक्यकपिशीर्षपरम्परा[1]: । अयत्नादर्शतां यान्ति चिरं खेचरयोषिताम् ॥९८॥

तस्यां गृहाङ्गणभुवि स्वस्तिकन्यस्तमौक्तिकैः । स्वैरं कर्करकक्रीडां कुरुते बालिकाजनः ॥९९॥[2]

तत्रोद्यानोच्चवृक्षाग्रप्रस्खल्यमानान्यहर्निशम् । खेचरीणां विमानानि क्षणं यान्ति कुलायताम् ॥१००॥

तत्र दृष्ट्वाऽट्टहर्म्येषु रत्नराशीन् समुच्छ्रितान् । तदवकरकूटोऽयं तर्क्यते रोहणाचलः ॥१०१॥

जलकेलिरतस्त्रीणां त्रुटितैर्हारमौक्तिकैः । ताम्रपर्णीश्रियं तत्र दधते गृहदीर्घिकाः ॥१०२॥

तत्रेभ्याः सन्ति ते येषां कस्याप्येकतमस्य सः । व्यवहर्तुं गतो मन्ये वणिक्पुत्रो धनाधिपः ॥१०३॥

---

इत्येकोऽधिकः श्लोकः खं. मध्ये, "काञ्चनैर्हर्म्यैर्मेरु" इति स्वल्पपाठभेदेन त्रिषष्ठिशलाकापुरुषचरित्रे च वर्तते । तथापि अस्य श्लोकस्य समाप्तौ ९८ इत्यङ्को खं. मध्ये नास्ति, "तद्वप्रे........" इति श्लोकात् परतस्तु ९८ इत्यङ्को दृश्यते ॥

१ परम्परा । अयत्नादर्शतां याति—खं. ॥ २ इतः ९९ श्लोकादनन्तरं खं. मध्ये—

"तत्र चैत्येषु निर्दग्धधूपधूमलतास्तथा । अधिस्वर्मुक्तिनिश्रेणिश्रेणिश्रियमशिश्रियन् ॥

श्रावकैस्तत्र चैत्येषु क्रियमाणो यथाक्षणम् । धत्ते घण्टाटणत्कारः पापोच्चाटनमन्त्रताम् ॥"

इति श्लोकद्वयमधिकं दृश्यते, किन्तु ततः परं श्लोकाङ्कौ न स्तः, "तस्यां गृहाङ्गण..." इति श्लोकात् परतस्तु ९९ इत्यङ्को दृश्यते ॥

5 10

|| ५५ ||

नक्तमिन्दुदृपद्भित्तिमन्दिरस्यन्दिवारिभिः । प्रशान्तपांसवो[1] रथ्याः क्रियन्ते तत्र सर्व्वतः ॥१०४॥[2]
वापीकूपसरोलक्षैः सुधासोदरवारिभिः । नागलोकं नवसुधाकुण्डं परिबभूव सा ॥१०५॥
नगरीं तामलङ्कुर्व्वन्नरेन्द्रो वृषभध्वजः । अपत्यानि निजानीव प्रजाश्चिरमपालयत् ॥१०६॥
तत उत्पादयामास लोकानुग्रहकाम्यया । एकैकशो विंशतिधा पञ्च शिल्पानि नाभिभूः ॥१०७॥[3]
राज्यस्थितिनिमित्तं चाऽग्रहीद् गास्तुरगान् गजान् । सामाद्युपायसारां च नीतिरीतिमदर्शयत् ॥१०८॥
द्वासप्ततिकलाकाण्डं भरतं चाध्यजीगपत् । भरतोऽपि निजान् भ्रातॄंस्तनयानितरानपि ॥१०९॥
नाभेयो बाहुबलिनं भिद्यमानान्यनेकशः । लक्षणानि च हस्त्यश्वस्त्रीपुंसानामजिज्ञपत् ॥११०॥
अष्टादश लिपीर्ब्राह्म्या अपसव्येन[4] पाणिना । दर्शयामास सव्येन[5] सुन्दर्या गणितं पुनः ॥१११॥
वर्णव्यवस्थां रचयन् न्यायमार्गं प्रवर्त्तयन् । त्र्यशीतिं पूर्वलक्षाणि[6] नाभिभूरत्यवाहयत् ॥११२॥
प्रभुः स्मरकृतावासे मधुमासे समेयुषि । अगादन्येद्युरुद्याने परिवारानुरोधतः ॥११३॥
गुञ्जद्भिः फुल्लमाकन्दमकरन्दोन्मदालिभिः । मधुलक्ष्मीर्बभूव स्वागतिकीव जगत्प्रभोः ॥११४॥

१ पांशवो—खं. मु.॥ २ पतत्स्थाने ॥ १०६ ॥—शां. । इतः परम् १०७ इत्यादिक्रमेण श्लोकाङ्काः शां. प्रतौ सन्ति ॥ ३ पतत्स्थाने ॥ ११० ॥ —खं. । इतः परम् १११ इत्यादिक्रमेण श्लोकाङ्काः खं. प्रतौ सन्ति ॥ ४ "दक्षिणेन" —खंटि. ॥ ५ "वामेन" —खंटि. ॥ ६ '॥ ११५ ॥' पर्यन्तं समानप्रायं त्रिषष्टि० १ । २ । ९८४-९८८ ॥

पूर्वरङ्ग इवारब्धे पञ्चमोच्चारिभिः पिकैः । अदर्शयल्लतालास्यं मलयानिललासकः ॥११५॥
[1]प्रतिशाखं विलग्नाभिः पुष्पोच्चयकुतूहलात् । स्त्रीभिस्तत्राभवन् वृक्षाः सञ्जातस्त्रीफला इव ॥११६॥
[2]पुष्पवासगृहासीनः पुष्पाभरणभूषितः । पुष्पगेन्दुकहस्तोऽभाद् मधुर्मूर्त्त इव प्रभुः ॥११७॥
[3]तत्र खेलायमानेषु निर्भरं भरतादिषु । द[4]ध्यौ स्वामी किमीदृक्षा क्रीडा दोगुन्दुगे[5]ष्वपि ॥११८॥
[6]जज्ञेऽथावधिना स्वामी स्वःसुखान्युत्तरोत्तरम् । अनुत्तरस्वर्गसुखं भुक्तपूर्वं स्वयं च तत् ॥११९॥
भूयोऽप्यचिन्तयदिदं विगलन्मोहबन्धनः । धिगेष विषयाक्रान्तो वेत्ति नात्महितं जनः ॥१२०॥
अहो संसारकूपेऽस्मिन् जीवाः कुर्वन्ति कर्मभिः । अरघट्टघटीन्यायेनै[7]हिरेयाहिरां क्रियाम् ॥१२१॥
इत्यासीन्मनसा यावद्विभुर्भवपराङ्मुखः । ता[8]वल्लौकान्तिका देवा [9]एयुः सारस्वतादयः ॥१२२॥
बद्धैरञ्जलिभिर्मूर्ध्नि कृतान्यमुकुटा इव । प्रणम्य ते व्यज्ञपयन् स्वामिंस्तीर्थं प्रवर्त्तय ॥१२३॥
गतेषु तेषु भगवानुद्यानान्नन्दनाभिधात् । व्यावृत्य गत्वा नगरीमाजुहावावनीपतीन् ॥१२४॥

१ त्रिषष्टि० १ । २ । १००८ ॥ २ त्रिषष्टि० १ । २ । ९८६ ॥ ३ त्रिषष्टि० १ । २ । १०१७ । तत्र दोलाय°—क. ॥ ४ "चिन्तयामास" —खंटि. ॥ ५ दोगुन्दगे०—मु. ॥ ६ इतः प्रभृति श्लोकत्रयं समानप्राय त्रिषष्टि० १ । २ । १०१८–१०२० ॥ ७ "मयूरव्यंसकेत्यादयः" [सिद्धहेम० ३ । १ । ११६] अनेन सूत्रेण निपातः।" खंटि. ॥ ८ तावल्लोका—मु. ॥ ९ "आजग्मुः" खंटि. ॥

राज्येऽभ्यषिञ्चद् भरतं ज्येष्ठपुत्रं ततो विभुः। बाहुबल्यादिपुत्राणां[1] विभज्य विषयान् ददौ ॥१२५॥
सांवत्सरिकदानेन ततोऽतर्पीत्तथा भुवम्। देहीति दीनवाक् पश्चात् कश्चिदासीद्यथा नहि ॥१२६॥
अथासनप्रकम्पेन सर्वेऽप्यभ्येत्य वासवाः। अभिषेकं प्रभोश्चक्रुर्गिरेरिव पयोमुचः ॥१२७॥
माल्याङ्गरागैर्देवेशन्यस्तैर्वासितविष्टपैः। स्वयशोभिरिवाऽशोभि परितः परमेश्वरः ॥१२८॥
विचित्रैरर्चितो वस्त्रै रत्नकल्पैश्च भूषणैः। विभुर्बभासे सन्ध्याभ्रधिष्ण्यैरिव मरुत्पथः ॥१२९॥
दिवि दुन्दुभिनादं[2] च कारयामास वासवः। जगतो ददतानन्दमसम्मान्तमिवात्मनि ॥१३०॥
सुरासुरनरोद्वाह्यामारोहच्छिबिकां विभुः। ऊर्ध्वलोकगतेर्मार्गं जगतो दर्शयन्निव ॥१३१॥
एवं सदेवैर्देवेशैश्चक्रे निष्क्रमणोत्सवः। यं पश्यद्भिर्निजदृशां नैर्निमेष्यं कृतार्थितम् ॥१३२॥
गत्वा सिद्धार्थकोद्याने मुमोच परमेश्वरः। कुसुमाभरणादीनि कषायानिव सर्वतः ॥१३३॥
चतुर्भिर्मुष्टिभिः केशानुद्धार जगद्गुरुः। जिघृक्षुः पञ्चमीं मुष्टिं वासवेनेति याचितः ॥१३४॥
देवांसयोः स्वर्णरुचोर्वातानीताऽतिशोभते[3]। केशवल्लर्य्यसावास्तामिति तां स्वाम्यधारयत् ॥१३५॥
प्रतीच्छतश्च सौधर्माधिपतेः सिचयाञ्चले। स्वामिकेशा दधुर्दत्तवर्णान्तरगुणश्रियम् ॥१३६॥

१ दीनवाक्यश्च कश्चि°—मु.॥ २ देवदुन्दुभि°—खं०॥ ३ °र्वाचातीता—मु.। "वातानीता विभात्येषा तदास्तां केशवल्लरी।" त्रिषष्टि° १।३।७०॥

[1]क्षीरोदधौ सुधर्मेशः केशान् क्षिप्त्वाऽभ्युपेत्य च। रङ्गाचार्य इवारक्षत् तुमुलं मुष्टिसंज्ञया ॥१३७॥
[2]सर्वं सावद्यं प्रत्याख्यामीति चारित्रमुच्चकैः। मोक्षाध्वनो रथमिवाध्यारुरोह जगत्पतिः ॥१३८॥
सर्वतः सर्वजन्तूनां मनोद्रव्याणि दर्शयत्। जज्ञे ज्ञानं प्रभोस्तुर्यं मनःपर्ययसंज्ञकम् ॥१३९॥
राज्ञां सहस्राश्चत्वारोऽनुयान्तस्तं निजप्रभुम्। व्रतमाददिरे भक्त्या कुलीनानां क्रमो ह्यसौ ॥१४०॥
ततः सर्वेष्वपीन्द्रेषु गतेषु स्वं स्वमालयम्। व्यवहरत् तैर्वृतः स्वामी यूथनाथ इव द्विपैः ॥१४१॥
लोकैर्भिक्षास्वरूपाज्ञैर्भिक्षार्थं भ्रमतः प्रभोः। अढौकि कन्येभाश्वादि धिगार्ज्जवमपि क्वचित् ॥१४२॥
न्याय्यामप्राप्नुवन् भिक्षां सहमानः परीषहान्। अदीनमानसः स्वामी मौनव्रतमुपाश्रितः ॥१४३॥
श्रमणानां सहस्रैस्तैश्चतुर्भिरपि नाभिभूः। क्षुधार्तैर्मुमुचे को वा सत्त्ववान्[3] भगवानिव ॥१४४॥
वने मूलफलाहारा जज्ञिरे ते तु तापसाः। भवाटवीपथजुषो धिक् तान् मोक्षपथच्युतान् ॥१४५॥
अथ कच्छ-महाकच्छपुत्रावाज्ञागतौ क्वचित्। ईयतुर्नमि-विनमी स्वामिनं प्रतिमास्थितम् ॥१४६॥
प्रणम्य तौ विज्ञपयाम्बभूवतुरिति प्रभुम्। [4]आवयोर्नापरः स्वामी स्वामिन् राज्यप्रदो भव ॥१४७॥
न किञ्चिदूचे भगवांस्तदा तौ सेवकावपि। [5]निर्ममा हि न लिप्यन्ते कस्याप्यैहिकचिन्तया ॥१४८॥

१ त्रिषष्टि० १। ३। ७२ ॥ २ त्रिषष्टि० १। ३। ७४ ॥ ३—ख. ग. च.। ससत्त्वो भग°—मु. ॥ ४ त्रिषष्टि० १। ३। १४४ ॥ ५ त्रिषष्टि० १। ३। १३९ ॥

[1]तौ कृष्टासी सिषेवाते स्वामिनं पारिपार्श्विकौ। अहर्निशं मेरुगिरिं सूर्याचन्द्रमसाविव ॥१४९॥
अथ तौ धरणेन्द्रेण प्रभुं वन्दितुमेयुषा। कौ युवामिह को हेतुरित्युक्तावेवमूचतुः ॥१५०॥
[2]भृत्यावावामसौ भर्त्ता क्वचिदप्यादिदेश च। राज्यं विभज्य सर्वेषां स्वपुत्राणामदत्त च ॥१५१॥
अपि प्रदत्तसर्वस्वो दातासौ राज्यमावयोः। अस्ति नास्तीति का चिन्ता ? कार्या सेवैव सेवकैः ॥१५२॥
याचेथां भरतं स्वामी निर्ममो निष्परिग्रहः। किमद्य दद्यादिति तौ तेनोक्तावित्यवोचताम् ॥१५३॥
[3]विश्वस्वामिनमाप्यामुं कुर्वः स्वाम्यन्तरं नहि। कल्पपादपमासाद्य कः करीरं निषेवते ॥१५४॥
आवां याचावहे नान्यं विहाय परमेश्वरम्। पयोमुचं विमुच्यान्यं याचते चातकोऽपि किम् ॥१५५॥
स्वस्त्यस्तु भरतादिभ्यः किं तवास्मद्विचिन्तया। स्वामिनोऽस्माद् यद् भवति तद् भवत्वपरेण किम् ॥१५६॥
तदुक्तिमुदितोऽवादीदथेदं पन्नगेश्वरः। पातालपतिरेषोऽस्मि स्वामिनोऽस्यैव किङ्करः ॥१५७॥
सेव्यः स्वाम्ययमेवेति प्रतिज्ञा साधु साधु[4] वः। स्वामिसेवाफलं विद्याधरैश्वर्यं ददामि तत् ॥१५८॥
स्वामिसेवाप्तमेवैतद् बुध्येथां हन्त माऽन्यथा। सम्बोध्येति ददौ विद्याः प्रज्ञप्तीप्रमुखास्तयोः ॥१५९॥
ईयतुस्तदनुज्ञातौ पञ्चाशद्योजनीपृथुम्। तौ वैताढ्याद्रिमुत्सेधे पञ्चविंशतियोजनम् ॥१६०॥

१ त्रिषष्टि० १। ३। १४३॥ २ इदं श्लोकद्वयं त्रिषष्टि० १। ३। १५१-१५२॥ ३ इतः श्लोकचतुष्टयं त्रिषष्टि० १। ३। १५१-१५४॥ ४ त्रिषष्टि० १। ३। १६९। नान्यथा—मु.॥

दशयोजनविस्तारदक्षिणश्रेणिमध्यगाः । तत्र विद्याबलाच्चक्रे नमिः पञ्चाशतं पुरीः ॥१६१॥

दशयोजनविस्तारोत्तरश्रेण्यां न्यवीविशत् । विद्याधरपतिः षष्टिं पुराणि विनमिः पुनः ॥१६२॥

चक्राते चक्रवर्त्तित्वं चिरं[1] विद्याधरेषु तौ । तादृशः स्वामिसेवायाः किं नाम स्याद्दुरासदम् ॥१६३॥

वर्षं मौनी निराहारो विहरन् भगवानपि । पुरं गजपुरं नाम प्रययौ पारणेच्छया ॥१६४॥

तदा च सोमयशसः श्रेयांसः स्वप्नमैक्षत । 'मेरुं श्यामं सुधाकुम्भैः क्षालयित्वोज्ज्वलं व्यधाम्[2]' ॥१६५॥

[3]सुबुद्धिश्रेष्ठिनाऽप्यैक्षि गोसहस्रं रवेश्च्युतम् । श्रेयांसेनाऽऽहितं तत्र [4]ततोऽसौ भासुरोऽभवत् ॥१६६॥

अदर्शि सोमयशसा राजैको[5] बहुभिः परैः । रुद्धः समन्ताच्छ्रेयांससाहाय्याज्जयमीयिवान् ॥१६७॥

त्रयस्ते सदसि स्वप्नानन्योन्यस्य न्यवीविदन् । ते निर्णयमजानन्तः स्वं स्वं स्थानं पुनर्ययुः ॥१६८॥

प्रादुर्भावयितुमिव तदा स्वस्वप्ननिर्णयम् । श्रेयांसस्य ययौ वेश्म भिक्षार्थी भगवानपि ॥१६९॥

भगवन्तं समायान्तं शशाङ्कमिव सागरः । आलोक्य श्रेयसां पात्रं श्रेयांसः शिश्रिये मुदम् ॥१७०॥

ऊहापोहं वितन्वानः श्रेयांसः स्वामिदर्शनात् । अवाप जातिस्मरणं पूर्वनष्टनिधानवत् ॥१७१॥

चक्रभृद् वज्रनाभोऽसौ प्राग्भवेऽस्याऽस्मि सारथिः । अनुप्रव्रजितश्चामुं तदेत्यादि विवेद सः ॥१७२॥

१ —ख. ग. च. । चिराद्—मु. ॥ २ व्यधात्—मु. ॥ ३ इतः सार्धं श्लोकत्रयं समानप्रायं त्रिषष्टि० १ । ३ । २४६–२४९ ॥ ४ ततोऽर्कोऽप्यतिभासुरः॥ —खं. त्रिषष्टि० १ । ३ । २४६ ॥ ५ राज्ञैको—त्रिषष्टि० ॥



|| ६१ ||

ततो विज्ञातनिर्दोषभिक्षादानविधिः सुधीः। स्वामिने प्रासुकायातेक्षुरसं मुदितो ददौ ॥१७३॥[1]
भूयानपि रसः पाणिपात्रे भगवतो ममौ। श्रेयांसस्य तु हृदये ममुर्नहि मुदस्तदा ॥१७४॥
स्त्यानो नु स्तम्भितो न्वासीद् व्योम्नि लग्नशिखो रसः। अञ्जलौ स्वामिनोऽचिन्त्यप्रभावाः प्रभवः खलु ॥१७५॥
ततो भगवता तेन रसेनाकारि पारणम्। सुरासुरनृणां नेत्रैः पुनस्तद्दर्शनामृतैः ॥१७६॥
कुर्वद्भिर्दुन्दुभिध्वानं देवैर्दिवि घनैरिव। वृष्टयो रत्नपुष्पाणां चक्रिरे वारिवृष्टिवत् ॥१७७॥
अथ तक्षशिलां स्वामी ययौ बाहुबलेः पुरीम्। बाह्योद्याने प्रपेदे च प्रतिमामैकरात्रिकीम्[2] ॥१७८॥
प्रभाते पावयिष्यामि स्वं लोकं स्वामिदर्शनात्। इतीच्छतो बाहुबलेः साभून्मासोपमा निशा ॥१७९॥
स प्रातः प्रययौ यावत् तावत् स्वाम्यन्यतोऽगमत्। तत्रास्वामिकमुद्यानं व्योमेवाचन्द्रमैक्षत ॥१८०॥
मनोरथो विलीनो मे हृदि बीजमिवोषरे। हा धिक् प्रमद्वरोऽस्मीति बह्वात्मानं निनिन्द सः ॥१८१॥
यत्रास्थातां प्रभोः पादौ रत्नैस्तत्रार्पभिर्व्यधात्। धर्म्मचक्रं सहस्रारं सहस्रांशुमिवापरम् ॥१८२॥
विविधाभिग्रहः स्वामी म्लेच्छदेशेष्वधर्मसु। विजहार यथार्येषु समभावा हि योगिनः ॥१८३॥
तदा प्रभृत्यनार्याणामपि पापैककर्म्मणाम्। धर्मास्तिक्यधिया जज्ञे दृढानुष्ठानचेष्टितम् ॥१८४॥
एवं विहरमाणस्तु सहस्रे शरदां गते। पुरं पुरिमतालाख्यमाजगाम जगद्गुरुः ॥१८५॥

5 10

---

१ इत आरभ्य श्लोकत्रयं समानं त्रिषष्टि० १। ३। २९३–२९५॥ २ °मेक°—मु.॥

तत्पूर्वोत्तरदिग्भागे कानने शकटानने। वटस्याधोऽष्टमभक्तेनाऽस्थात् प्रतिमया प्रभुः ॥१८६॥
आरुह्य क्षपकश्रेणिमपूर्वकरणक्रमात्। शुक्लध्यानान्तरं शुद्धमध्यासीद्[1]ज्जगत्पतिः ॥१८७॥
ततश्च घातिकर्म्माणि व्यलीयन्त घना इव। स्वामिनः केवलज्ञानरविराविर्बभूव च ॥१८८॥
विमानान्यतिसम्मर्दाद् घट्टयन्तः परस्परम्। एयुरिन्द्राश्[2]चतुःषष्टिः समं देवगणैस्तदा ॥१८९॥[3]
त्रैलोक्यभर्त्तुः समवसरणस्थानभूतलम्। अमृजन् वायुकुमाराः स्वयं मार्जितमानिनः ॥१९०॥
गन्धाम्बुवृष्टिभिर्मेघकुमाराः सिषिचुः क्षितिम्। सुगन्धिघ्राण्यैः सोत्क्षिप्तधूपार्वेष्यतः प्रभोः ॥१९१॥
पुष्पोपहाग्मृतवो जानुदघ्नं व्यधुर्भुवि। अप्येष्यत्पूज्यसंसर्गः पूजायै खलु जायते ॥१९२॥
स्निग्धधूमशिखास्तोमवासितव्योममण्डलाः। चक्रुर्धूपघटीस्तत्र तत्र वह्निकुमारकाः ॥१९३॥
इन्द्रचापशतालीढमिव नानामणित्विषा। ततः समवसरणं चक्रे शक्रादिभिः सुरैः ॥१९४॥
रजतस्वर्णमाणिक्यवप्रास्तत्र त्रयो बभुः। भुवनाधिपतिज्योतिर्वैमानिकसुरैः कृताः ॥१९५॥
असौ स्वर्गमसौ मोक्षं गच्छत्यध्वेति देहिनाम्। शंसन्त्य इव वल्गन्त्यः पताकास्तेषु रेजिरे ॥१९६॥
विद्याधर्य्यो रत्नमय्यो वप्रोपरि चकाशिरे। कृतप्रवेशनिष्कासा[4] विमानाशङ्कया सुरैः ॥१९७॥

---

१ °ध्यासीदत् जग°—शां.। °ध्यासीच्च जग°—मु.। °ध्यासीत्रिजग°—खं.॥ २ ईयु°—खं.॥ ३ सार्धश्लोकः त्रिषष्टि० १। ३। ४२२-४२३॥ ४ निष्काशा—मु.॥

॥ ६३ ॥

माणिक्यकपिशीर्षाणि मुग्धामरवधूजनैः । आलोक्यन्त चिरं हर्षाद्रत्नताडङ्कशङ्कया ॥१९८॥
[१]प्रतिवप्रं च चत्वारि गोपुराणि बभासिरे । चतुर्विधस्य धर्मस्य क्रीडावातायना इव ॥१९९॥
चक्रे समवसरणान्तरेऽशोकतरुः सुरैः । [२]कोशत्रयोदयो रत्नत्रयोदयमिवोद्दिशन् ॥२००॥
तस्याधः पूर्वदिग्भागे रत्नसिंहासनं सुराः । सपादपीठं विदधुः सारं स्वर्गश्रियामिव ॥२०१॥
प्रविश्य पूर्वद्वारेण नत्वा तीर्थं तमश्छिदे । [३]स्वामी सिंहासनं भेजे पूर्वाचलमिवार्यमा ॥२०२॥ 5
रत्नसिंहासनस्थानि दिक्ष्वन्यास्वपि तत्क्षणम् । भगवत्प्रतिबिम्बानि त्रीणि देवा विचक्रिरे ॥२०३॥
वराकीकृतराकेन्दुमण्डलं परमेशितुः । त्रैलोक्यस्वामिताचिह्नमिव च्छत्रत्रयं बभौ ॥२०४॥
[४]भगवानेक एवायं स्वामीत्यूर्ध्वीकृतो भुजः । [५]इन्द्रेणेव प्रभोरग्रे रेजे रत्नमयो ध्वजः ॥२०५॥
चकाशे केवलज्ञानिचक्रवर्त्तित्वसूचकम् । अत्यद्भुतप्रभाचक्रं धर्मचक्रं प्रभोः पुरः ॥२०६॥
रेजुर्जाह्नवीवीचीसोदरे चारुचामरे । हंसाविवानु[६]धावन्तौ स्वामिनो मुखपङ्कजम् ॥२०७॥ 10
[७]आविर्बभूवानुवपुस्तदा भामण्डलं विभोः । खद्योतपोतवद् यस्य पुरो मार्त्तण्डमण्डलम् ॥२०८॥

---

१ त्रिषष्टि० १ । ३ । ४४० ॥ २ त्रिषष्टि० १ । ३ । ४५१ ॥ ३ सार्धः श्लोकः त्रिषष्टि० १ । ३ । ४६१–४६२ ॥
४ त्रिषष्टि० १ । ३ । ४६७ ॥ ५ त्रिषष्टि० १ । ३ । ४५६ ॥ ६ वाभिधावन्तौ—खं. ॥

प्रतिध्वानैश्चतस्रोऽपि दिशो मुखरयन् भृशम्। अम्भोद इव गम्भीरो दिवि दध्वान दुन्दुभिः ॥२०९॥
अधोवृन्ताः सुमनसो विष्वग्ववृषिरे सुरैः। शान्तीभूते जने त्यक्तान्यस्त्राणीव मनोभुवा ॥२१०॥
पञ्चत्रिंशदतिशयान्वितया भगवान् गिरा। त्रैलोक्यानुग्रहायाथ प्रारेभे धर्मदेशनाम् ॥२११॥
भगवत्केवलज्ञानोत्सवं चारा अचीकथन्। भरतस्य तदा चक्ररत्नमप्युदपद्यत ॥२१२॥
[1]उत्पन्नकेवलस्तात इतश्चक्रमितोऽभ्यगात्। आदौ करोमि कस्यार्चामिति दध्यौ क्षणं नृपः ॥२१३॥
क्व विश्वाभयदस्तातः क्व चक्रं प्राणिघातकम्। विमृश्येति स्वामिपूजाहेतोः स्वानादिदेश सः ॥२१४॥
सूनोः परीषहोदन्तदुःखाश्रूत्पन्नदृग्रुजम्। मरुदेवामथोपेत्य नत्वा चासौ व्यजिज्ञपत् ॥२१५॥
आदिशः सर्व्वदापीदं [2]यन्मे सूनुस्तपात्यये। पद्मखण्ड इव मृदुः सहते वारिविद्रवम् ॥२१६॥
हिमर्त्तौ हिमसम्पातपरिक्लेशवशां दशाम्। अरण्ये मालतीस्तम्ब इव याति निरन्तरम् ॥२१७॥
उष्णर्त्तावुष्णकिरणकिरणैरतिदारुणैः। सन्तापं चानुभवति स्तम्बेरम इवाधिकम् ॥२१८॥
तदेवं सर्व्वकालेषु वनवासी निराश्रयः। पृथग्जन इवैकाकी वत्सो मे दुःखभाजनम् ॥२१९॥
[3]त्रैलोक्यस्वामिताभाजः स्वसूनोस्तस्य सम्प्रति। पश्य सम्पदमित्युक्त्वारोहयामास तां गजे ॥२२०॥

१ श्लोकद्वयं त्रिषष्टि० १। ३। ५१४–५१५॥ २ श्लोकचतुष्टयं त्रिषष्टि० १। ३। ४९९–५०२॥ ३ श्लोकपञ्चकं त्रिषष्टि० १। ३। ५१८–५२२॥

सुवर्णवज्रमाणिक्यभूषणैस्तुरगैर्गजैः । पत्तिभिः स्यन्दनैर्मूर्त्तश्रीमयैः सोऽचलत्ततः ॥२२१॥
सैन्यैर्भूषणभाःपुञ्जकृतजङ्गमतोरणैः । गच्छन् दूरादपि नृपोऽपश्यद्रत्नध्वजं पुरः ॥२२२॥
मरुदेवामथावादीद् भरतः परतो[1] ह्यदः । प्रभोः समवसरणं देवि देवैर्विनिर्मितम् ॥२२३॥
अयं जयजयारावतुमुलस्त्रिदिवौकसाम् । श्रूयते तातपादान्तसेवोत्सवमुपेयुषाम्[2] ॥२२४॥
मालवकैशिकीमुख्यग्रामरागपवित्रिता । कर्णामृतमियं वाणी स्वामिनो देशनाकृतिः ॥२२५॥ 5
मयूर-सारस-क्रौञ्च-हंसाद्यैः स्वस्वराधिका । आकर्ण्यते दत्तकर्णैः स्वामिनो गीः सविस्मयम् ॥२२६॥
तातस्य तोयदस्येव ध्वनावा योजनादिह । श्रुते मनो बलाकेव बलवद्देवि धावति ॥२२७॥
त्रैलोक्यभर्तुर्गम्भीरां वाणीं संसारतारणीम्[3] । निवातदीपनिस्पन्दा मरुदेवा मुदाऽश्रृणोत् ॥२२८॥
शृण्वन्त्यास्तां गिरं देव्या मरुदेव्या व्यलीयत । आनन्दाश्रुपयःपूरैः पङ्कवत् पटलं दृशोः ॥२२९॥
साऽपश्यत्तीर्थकृल्लक्ष्मीं तस्याऽतिशयशालिनीम् । तस्यास्तद्दर्शनानन्दस्थैर्यात् कर्म व्यशीर्यत ॥२३०॥ 10
भगवद्दर्शनानन्दयोगस्थैर्यमुपेयुषी । केवलज्ञानमम्लानमाससाद तदैव सा ॥२३१॥
करिस्कन्धाधिरूढैव प्राप्तायुःकर्मसङ्क्षया । अन्तकृत्केवलित्वेन निर्वाणं मरुदेव्यगात् ॥२३२॥

---

१ पुरतो—मु. ॥ २ °पादान्ते सेवो—मु. । °पादाब्जसेवो—त्रिषष्टि० १ । ३ । ५२२ ॥ ३ °तारिणीम् । निर्वात—मु. ॥

एतस्यामवसर्प्पिण्यां सिद्धोऽसौ प्रथमस्ततः। क्षीराब्धौ तद्वपुः क्षिप्त्वा चक्रे मोक्षोत्सवः सुरैः ॥२३३॥

ततो[1] विज्ञाततन्मोक्षो हर्ष-शुग्भ्यां समं नृपः। अभ्रच्छाया-ऽर्कतापाभ्यां शरत्काल इवानशे ॥२३४॥

सन्त्यज्य राज्यचिह्नानि पदातिः सपरिच्छदः। ततः समवसरणं प्रविवेश विशाम्पतिः ॥२३५॥

चतुर्भिर्देवनिकायैः स्वामी परिवृतस्तदा। ददृशे भरतेशेन दृक्चकोरनिशाकरः ॥२३६॥

त्रिश्च प्रदक्षिणीकृत्य भगवन्तं प्रणम्य च। मूर्ध्नि बद्धाञ्जलिः स्तोतुमिति चक्री प्रचक्रमे ॥२३७॥ 5

जयाखिलजगन्नाथ जय विश्वाभयप्रद। जय प्रथमतीर्थेश जय संसारतारण ॥२३८॥

अद्यावसर्पिणीलोकपद्माकरदिवाकर। त्वयि दृष्टे प्रभातं मे प्रनष्टतमसोऽभवत् ॥२३९॥

भव्यजीवमनोवारिनिर्मलीकारकर्मणि। वाणी जयति ते नाथ कतकक्षोदसोदरा ॥२४०॥

तेषां[2] दूरे न लोकाग्रं कारुण्यक्षीरसागर। समारोहन्ति ये नाथ त्वच्छासनमहारथम् ॥२४१॥

लोकाग्रतोऽपि संसारमग्रिमं देव मन्महे। निष्कारणजगद्बन्धुर्यत्र साक्षात्त्वमीक्ष्यसे ॥२४२॥ 10

त्वद्दर्शनमहानन्दस्यन्दनिष्पन्दलोचनैः। स्वामिन् मोक्षसुखास्वादः संसारेऽप्यनुभूयते ॥२४३॥

रागद्वेषकषायाद्यै रुद्धं जगदरातिभिः। इदमुद्वेष्ट्यते नाथ त्वयैवाभयसत्रिणा ॥२४४॥

स्वयं ज्ञापयसे तत्त्वं मार्गं दर्शयसि स्वयम्। स्वयं च त्रायसे विश्वं त्वत्तो नाथामि नाथ किम् ॥२४५॥

१ श्लोकाष्टकं तुल्यप्रायं त्रिषष्टि० १।३।५३०-५३८॥ श्लोकचतुष्टयं त्रिषष्टि० १।३।५३९-५४२॥

इति स्तुत्वा जगन्नाथं महीनाथशिरोमणिः। देशनावाक्सुधां[1] पूर्णकर्णाञ्जलिपुटं पपौ ॥२४६॥
तदा ऋषभसेनादीन् भगवानृषभध्वजः। दीक्षयामास चतुरोऽशीतिं च गणभृद्वरान्[2] ॥२४७॥
अदीक्षयत्ततो ब्राह्मीं भरतस्य च नन्दनान्। शतानि पञ्च नप्तॄंश्च शतानि सप्त नाभिभूः ॥२४८॥
साधवः[3] पुण्डरीकाद्याः साध्व्यो ब्राह्म्यादयोऽभवन्। श्रेयांसाद्याः श्रावकाश्च श्राविकाः सुन्दरीमुखाः ॥२४९॥
एवं चतुर्विधः सङ्घः स्थापितः स्वामिना तदा। ततः प्रभृति सङ्घस्य तथैवेयं व्यवस्थितिः ॥२५०॥ 5
स्वाम्यथो भव्यबोधायान्यतोऽगात् सपरिच्छदः। तं नत्वा भरताधीशोऽप्ययोध्यां नगरीं ययौ ॥२५१॥
तत्र नाभ्यङ्गभूवंशरत्नाकरनिशाकरः। यथाविधि जुगोपोर्वीं न्यायो विग्रहवानिव ॥२५२॥
चतुःषष्टिः[4] सहस्राणि बभूवुस्तस्य वल्लभाः। अनुचर्यः श्रियो यासां जज्ञिरे रूपसम्पदा ॥२५३॥
तस्मिन्नर्द्धासनासीने वासवस्य दिवौकसः। द्वयोर्भेदमजानन्तः पेतुः प्रणतिसंशये ॥२५४॥
प्रारब्धदिग्जयः पूर्वं पूर्वस्यां भानुमानिव। सोऽगाज्जितान्यतेजोभिस्तेजोभिर्द्योतयन् जगत् ॥२५५॥ 10
उत्क्षिप्तार्घमिवोद्वीचिहस्तविन्यस्तविद्रुमैः। गङ्गासम्भेदसुभगं स प्रापत् पूर्वसागरम् ॥२५६॥

---

१ °न्वृषभ—मु. ॥ २ चतुरशीतिं गणधरान् स्वयम् ॥—मु. खं. ॥ ३ त्रिषष्टि० १। ३। ६५५ ॥
४ एतस्थाने खं. प्रतावीदृशः श्लोकः—
" चतुःषष्टिं सहस्रान् स पुत्री राज्ञामुपायत। अनुचर्यः श्रियो यासां नवोढानां समागमन् ॥ २५६ ॥ "

|| ६९ ||

माँगधतीर्थकुमारं देवं मनसिकृत्य च। प्रपेदेऽष्टमभक्तं सोऽर्थसिद्धेर्द्वारमादिमम् ॥२५७॥
यादांसि त्रासयन्नाशु रथेनाऽसद्यरंहसा। जलधिं मन्दरेणेव जगाहे स महाभुजः ॥२५८॥
रथनाभ्युदये तोये स्थित्वा द्वादशयोजनीम्। बाणं दूतमिव प्रैषीन्नामाङ्कं मागधाय सः ॥२५९॥
अथ मागधतीर्थस्य पतिर्निपतिते शरे। चुकोप विकटाटोपभ्रूकुटीभङ्गभीषणम् ॥२६०॥
शरे मन्त्राक्षराणीव तस्य नामाक्षराण्यसौ। दृष्ट्वा नागकुमारोऽभूच्छितान्तं शान्तमानसः ॥२६१॥
प्रथमश्चक्रवर्त्त्येष उत्पन्न इति चिन्तयन्। उपतस्थे स भरतं विजयो मूर्त्तिमानिव ॥२६२॥
नरचूडामणेरग्रे निजं चूडामणिं फणी। चिरार्जितं तेज इवोपानयत्तच्छरं च सः ॥२६३॥
तवाहं पूर्वदिक्पालः किङ्करः करवाणि किम्। इति विज्ञपयन् राज्ञा सोऽनुजज्ञे महौजसा ॥२६४॥
जयस्तम्भमिवारोप्य तत्र तं मागधाधिपम्। पूर्वनीरनिधेस्तीरान्नरदेवो न्यवर्त्तत ॥२६५॥
उर्वीमनुर्वीं कुर्वाणश्चलयन्नचलानपि। चतुरङ्गबलेनाथ प्रपेदे दक्षिणोदधिम् ॥२६६॥

5

10

|| ६९ ||

---

१ त्रिषष्टि० १।४।८४। शां. खं. प्रत्योरयं संपूर्णः श्लोको नास्ति। इदमत्र ध्येयम्—अग्रे वरदामतीर्थपति-प्रभासतीर्थपत्योर्विजयप्रसङ्गेऽष्टमतपोविधानोल्लेखो नास्ति, अतोऽत्र मागधतीर्थपतिविजयप्रसङ्गे केवले तद्वर्णनमति-रिक्तमिव मत्वा संक्षेपधिया वा ग्रन्थकृतैव श्लोकोऽयमादौ विरचय्य पश्चादनादृतः स्यादित्यपि सम्भाव्यते ॥
२ भ्रकुटी°—खं. ॥

एला-लवङ्ग-लवली-कक्कोलबहले तटे । सैन्यान्यावासयामास स दोर्वीर्यपुरन्दरः ॥२६७॥
तेजसा स दुरालोको द्वितीय इव भास्करः । महावाहं महाबाहुरारुरोह महारथम् ॥२६८॥
तरङ्गैरिव रङ्गद्भिस्ततस्तुङ्गैस्तुरङ्गमैः[1] । रथनाभ्युदयं तोयं ललङ्घे स महोदधेः ॥२६९॥
वरदामाभिमुखं च सज्जीकृतशरासनः । धनुर्वेदोङ्कारमिव ज्यानिर्घोषं ततान सः ॥२७०॥
सौवर्णकर्णताडङ्कपद्मनालतुलास्पृशम् । काञ्चनं सन्दधे बाणमाकर्णाकृष्टकार्मुके ॥२७१॥
वरदामाख्यतीर्थेशमभि श्रीभरतस्ततः । मुमोच नमुचिद्वेषिस्थामा नामाङ्कितं शरम् ॥२७२॥
वरदामपतिर्बाणं प्रेक्ष्य च प्रतिगृह्य च । भरतं प्रत्युपायञ्च उपायनमुपानयत् ॥२७३॥
ऊचे च भरताधीश[2] धन्योऽस्मि यदिहागमः । नाथेन भवता नाथ सनाथोऽहमतः परम् ॥२७४॥
ततस्तमात्मसात् कृत्वा कृत्यविद् भरतेश्वरः । प्रति प्रतीचीमचलचलयन्नचलां[3] बलैः ॥२७५॥
अपरार्णवमासाद्य प्रभासाभिमुखं शरम् । जाज्वल्यमानं भरतस्तडिद्दण्डमिवाक्षिपत् ॥२७६॥
दण्डं प्रयच्छ कुर्वाज्ञां जिजीविषसि चेत् सुखम् । इत्यक्षराणि तद्बाणे प्रभासपतिरैक्षत ॥२७७॥
प्राज्यानि प्रगुणीकृत्य प्राभृतान्यद्भुतानि सः । चचाल शरमादाय प्रसादयितुमार्षभिम्[4] ॥२७८॥

---

१ त्रिषष्टि० १ । ४ । १५७ ॥ २ भरताधीशं—मु. ॥ ३ °न्नचलान्—खं. ॥ ४ " भरतेश्वरम्"—खंटि. ॥

हारान् नीहारहरिणानाजहारातिहारिणः । चिरकालार्जितानात्मयशोराशीनिवाखिलान् ॥२७९॥[१]
येषामग्रे दृषत्कल्पो रमारमणहृन्मणिः । तांस्तान् विश्राणयामास मणीन्नरशिरोमणेः ॥२८०॥
[२]कटकानि कटीसूत्रं चूडामणिमुरोमणिम् । निष्कादि चापर्यद्राज्ञे मूर्त्तं तेज इव स्वकम् ॥२८१॥
इति प्रसादितस्तेनाच्छद्मना भक्तिसद्मना । भरतोऽगान्नदीं सिन्धुमुत्तरद्वारदेहलीम् ॥२८२॥

निकषा सिन्धुभवनं [३]निदधे शिबिरं नृपः । सिन्धुदेवीं समुद्दिश्य विदधे चाष्टमं तपः ॥२८३॥
सिन्धुश्चासनकम्पेन ज्ञात्वा चक्रिणमागतम् । उपेत्योपायनैर्दिव्यैरानर्च पृथिवीपतिम् ॥२८४॥
तामुरीकृतसेवां च विसृज्य कृतपारणः । [४]अष्टाहिकोत्सवं तस्या विदधे वसुधा[५]धवः ॥२८५॥
सोऽथ चक्रानुगो गच्छन् ककुभोत्तरपूर्वया । भरतार्धद्वयाघाटं वैताढ्याद्रिमवाप च ॥२८६॥
नितम्बे दक्षिणे तस्य विन्यस्तशिबिरस्ततः । अधिवैताढ्यकुमारं नृपतिर्विदधेऽष्टमम् ॥२८७॥

१ इतः परं खं प्रतौ इमे त्रयः श्लोका अधिकाः सन्ति—
" अकाले तारकाचक्रं कुर्वन्तः करसीकरैः । भद्रेभान् भद्रकामः सोऽढौकयद् भरतेशितुः ॥२८२॥
उच्चैःश्रवःकुलानुच्चैर्वाजिनोऽत्यर्कवाजिनः । पङ्कजामोदनिःश्वासान् जितश्वासानुपाहित ॥२८३॥
प्रक्वणत्किङ्किणीजालवाचालितनभस्तलान् । रथान् विश्राणयामास वेश्मभूतान् जयश्रियः ॥२८४॥ "
२ त्रिषष्टि० १ । ४ । २१० ॥ ३ विदधे—खं. ॥ ४ अष्टाह्निको°—मु. ॥ ५ °धिपः—खं. क. छ. ॥

5

10

विज्ञायावधिना सोऽपि दिव्यैस्तैस्तैरुपायनैः । उपतस्थे महीपालं सेवां च प्रत्यपद्यत ॥२८८॥
तं विसृज्य नृपश्चक्रेऽष्टमभक्तान्तपारणम् । अष्टाह्निकोत्सवं[1] तस्य विदधे च यथाविधि ॥२८९॥
गुहां तमिस्रामभितस्तमिस्रारिरिव त्विषा । जगाम तददूरे च स्कन्धावारं न्यधान्नृपः ॥२९०॥
कृतमालामरं तत्र स उद्दिश्या[2]ष्टमं व्यधात् । सोऽपि ज्ञात्वासनकम्पादानर्चोपेत्य भूपतिम् ॥२९१॥
विसृज्य तमपि क्ष्मापः कृत्वा चाष्टमपारणम् । विदधेऽष्टाह्निकां[3] तस्य महोत्सवपुरःसरम् ॥२९२॥ 5
सुषेणो भरतादेशात् सिन्धुमुत्तीर्य चर्मणा । तरसा साधयामास दक्षिणं सिन्धुनिष्कुटम् ॥२९३॥
करं तत्रत्य[4]म्लेच्छानामादाय स्वेच्छयाथ सः । उत्तीर्य चर्मणा सिन्धुमाययौ भरतेश्वरम् ॥२९४॥
वैताढ्ये तमिस्रां वज्रकपाटपिहितां गुहाम् । उद्घाटयितुमादिक्षत्[5] सुषेणमृषभात्मजः ॥२९५॥
सुषेणोऽपि प्रभोराज्ञां शेषावन् मूर्ध्नि धारयन् । प्रदेशेऽगात् तमिस्राया गुहाया अदवीयसि ॥२९६॥
तदधिष्ठातृदेवं च कृतमालमनुस्मरन् । तस्थौ पौषधशालायामष्टमेन विशुद्धधीः ॥२९७॥ 10
स्नात्वा चाष्टमभक्तान्ते बाह्याभ्यन्तरशौचभृत् । पर्यधाच्छुचिवस्त्राणि विविधाभरणानि च ॥२९८॥

---

१ अष्टाह्निको°—मु. ॥ २ समुद्दिश्या—खं. ॥ ३ ०ष्टाह्निकां—मु. ॥ ४ तत्रत्यं—खं. । ततस्त्य°—शां. मु. ॥
५ °क्षत् ततस्तामृषभात्मजः-शां० । क्षत् ततस्तमृषभात्मजः—ख. च. ॥

होमकुण्डोपमे धूपदहने ज्वलदग्निके। धूपमुष्टीः क्षिपन् स्वार्थसाधनीराहुतीरिव ॥२९९॥
ततः स्थानादसौ तस्या गुहाया द्वारमभ्यगात्। कोशद्वारं तदायुक्त इवोद्घाटयितुं त्वरी ॥३००॥
दृष्टमात्रं तत्कपाटयुगलं प्रणनाम च। नेतारमिव तदन्तः प्रवेशः स्यात् कुतोऽन्यथा ॥३०१॥
गुहाद्वारे ततोऽष्टाष्टमङ्गलालेखपूर्वकम्[1]। सोऽष्टाह्निकामहिमानं[2] चक्रे स्वमहिमोचितम् ॥३०२॥
दण्डरत्नं वज्रसारं सर्वशत्रुविनाशनम्। अथ सेनापतिर्वज्रं वज्रपाणिरिवाददे ॥३०३॥
पदानि कतिचित् सोऽपसृत्य वक्र इव ग्रहः। दण्डरत्नेन झटिति कपाटौ त्रिरताडयत् ॥३०४॥
पक्षाविवाद्रेर्वज्रेण दण्डरत्नेन ताडितौ। तडत्तडिति कुर्वाणौ विश्लिष्टौ तौ वभूवतुः ॥३०५॥
तद्गुहाद्वारवत् सद्यः सविकासमुखो भृशम्। सुषेणो भरतायेदं गत्वा नत्वा व्यजिज्ञपत् ॥३०६॥
अद्याभूत् त्वत्प्रभावेण गुहाद्वारमपार्गलम्। यतेर्निःश्रेयसद्वारं तपसेवाऽतिभूयसा ॥३०७॥
मघवैरावणमिवाधिरूढो गन्धवारणम्। तत्कालं भरताधीशो गुहाद्वारमुपाययौ ॥३०८॥
अन्धकारापहाराय मणिरत्नं न्यधान्नृपः। दक्षिणे कुम्भिनः कुम्भे पूर्वाद्राविव भास्करम् ॥३०९॥
ततोऽनुगचमूचक्रश्चक्रमार्गानुगो गुहाम्। प्रविवेश विशामीशो मेघमध्यमिवार्यमा ॥३१०॥
गोमूत्रिकाक्रमेणानुयोजनान्तं तमश्छिदे। पार्श्वयोः काकिणीरत्नेनालिखन्मण्डलानि सः ॥३११॥

१ °लेख्यपू° शां. खं. ॥ २ °ष्टाह्निका० मु. ॥



5

10

॥ ७३ ॥

दीप्रैरेकोनपञ्चाशन्मण्डलैः काकिणीकृतैः । मार्त्तण्डमण्डलोद्योतैस्तद्वाहिन्योऽवहन् सुखम् ॥३१२ ॥
भूपोऽथापश्यदुन्मग्ननिमग्ने निम्नगे ययोः । एकत्रोन्मज्जति ग्रावाऽन्यस्यां मज्जत्यलाब्वपि ॥३१३॥
अतिदुस्तरताभाजोरपि सारणिलीलया । तयोर्नद्योरनवद्यां पद्यां व्यधित वर्द्धकिः ॥३१४॥
पद्यया ते समुत्तीर्य तद्गुहाकुहरान्नृपः । निरगच्छन्महामेघमण्डलादिव भास्करः ॥३१५॥
भरतो भरतक्षेत्रोत्तरखण्डं प्रविष्टवान् । अयुध्यत ततो म्लेच्छैर्दानवैरिव वासवः ॥३१६॥
जिता राज्ञा महेच्छेन[1] म्लेच्छाः प्रतिजयेच्छवः । उपासाञ्चक्रिरे मेघमुखान् स्वकुलदेवताः ॥३१७॥
मुसलाकारधाराभिराराादासारदारुणम् । ते प्रावर्त्तन्त संवर्त्त इव विष्वक् प्रवर्षितुम् ॥३१८॥
चर्मरत्नमधस्तेने राज्ञा द्वादशयोजनीम् । तदूर्ध्वं छत्ररत्नं मध्ये च निदधे चमूः ॥३१९॥
मणिरत्नमुरुध्वान्तध्वंसाय वसुधाधिपः । पूर्वाचल इवादित्यं छत्रदण्डे न्ययोजयत् ॥३२०॥
तरदण्ड[2] इवाराजत् तद्रत्नद्वयसम्पुटम् । ततस्तदादि लोकेऽभूद् ब्रह्माण्डमिति कल्पना ॥३२१॥
पूर्वाह्णे वापितान् शालीनपराह्णे च पक्त्रिमान् । प्रत्यावासं गृहपतिर्भोजनार्थमपूरयत् ॥३२२॥
वर्षं वर्षं च निर्विण्णैरूचे मेघकुमारकैः । किराताश्चक्रवर्त्येष न साध्योऽस्माद्दशामिति[3] ॥३२३॥



5

10

---

१ —ख. ग. च. महेशेन—मु. ॥ २ "तरदण्डमिवाराजत्" त्रिषष्टि० १ । ४ । ४३२ । अण्डशब्दः "पुं-क्लीबलिङ्गः" इति अभिधानचिन्तामणिस्वोपज्ञवृत्तौ ॥ ३८५ ॥ ३ °शामपि—मु. ॥

भग्नेच्छास्तद्गिरा म्लेच्छाः शरणं भरतं ययुः। अग्निना किल दग्धानामग्निरेव महौषधम् ॥३२४॥
ततश्चाजय्यमजयत् सिन्धोरुत्तरनिष्कुटम्। स्वाम्यादेशेन सेनानीः संसारमिव योगवित् ॥३२५॥
[1]कैश्चित् प्रयाणकैर्गच्छन् गजेन्द्र इव लीलया। नितम्बं दक्षिणं क्षुद्रहिमाद्रेः प्राप भूपतिः ॥३२६॥
[2]उद्दिश्य क्षुद्रहिमवत्कुमारं तत्र चार्षभिः। चक्रेऽष्टमं कार्यसिद्धेस्तपो मङ्गलमादिमम् ॥३२७॥
गत्वाष्टमान्ते [3]हिमवत्पर्वतं त्रिरताडयत्। साटोपो रथशीर्षेण शीर्षण्यः पृथिवीभुजाम् ॥३२८॥
भरतेशस्ततः क्षुद्रहिमवद्गिरिमूर्द्धनि। द्वासप्तति योजनानि नामाङ्कं बाणमक्षिपत् ॥३२९॥
बाणमालोक्य हिमवत्कुमारो[4]ऽप्येत्य सत्वरम्। भरताज्ञां स्वशिरसा शिरस्त्राणमिवाग्रहीत् ॥३३०॥
[5]गत्वा ऋषभकूटाद्रिमृषभस्वामिभूस्ततः। जघान रथशीर्षेण त्रिर्दन्तेनेव दन्तिराट् ॥३३१॥
[6]अवसर्पिण्यां तृतीयारप्रान्ते भरतोऽस्म्यहम्। चक्रीति वर्णान् का[7]किण्या तत्पूर्वकटकेऽलिखत् ॥३३२॥
ततो व्यावृत्य सद्वृत्तः स्कन्धावारं निजं ययौ। चकाराष्टमभक्तान्[8]तपारणं च महीपतिः ॥३३३॥
ततश्च क्षुद्रहिमवत्कुमारस्य नरेश्वरः। अष्टाहिकोत्सवं चक्रेऽनुरूपं चक्रिसम्पदः ॥३३४॥
ततो निववृते चक्रवर्त्ती चक्रपथानुगः। सिन्धुगङ्गान्तरं कुर्वन् सङ्कटं विपुलैर्बलैः ॥३३५॥

१ त्रिषष्टि० १। ४। ४६२॥ २ त्रिषष्टि० १। ४। ४६४॥ ३ त्रिषष्टि० १। ४। ४६६॥ ४ ०भ्येत्य ख. छ.॥ ५ त्रिषष्टि० १। ४। ४७७॥ ६ श्लोकत्रयं त्रिषष्टि० १। ४। ४७९-४८१॥ ७ काकण्या—शां. खं.॥ ८ °न्ते पारणं —खं.॥

॥ ७८ ॥

नितम्बमुत्तरमथ वैताढ्याद्रेरवाप सः। तत्र स्वस्थपरीवारः[1] स्कन्धावारं[2] न्यधत्त च[3] ॥३३६॥
ततो नमिविनम्याख्यौ विद्याधरपती प्रति। आदिदेश विशामीशो मार्गणं दण्डमार्गणम् ॥३३७॥
वैताढ्यशृङ्गादुत्तीर्य कुपितौ दण्डयाचनात्। आजग्मतुर्युयुत्सू तौ विद्याधरबलावृतौ ॥३३८॥
[4]कुर्वन् मणिविमानैर्द्यां बहुसूर्यमयीमिव। प्रज्वलद्भिः प्रहरणैस्तडिन्मालामयीमिव ॥३३९॥
उद्दामदुन्दुभिध्वानैर्मेघघोषमयीमिव। विद्याधरबलं व्योमन्यपश्यद् भरतस्ततः ॥३४०॥ 5
दण्डार्थिन् दण्डमस्मत्तस्त्वं गृह्णासीति भाषिणौ। आह्वायाह्वयेतां तौ विद्यादृप्तौ महीपतिम् ॥३४१॥
अथ ताभ्यां ससैन्याभ्यां प्रत्येकं युगपच्च सः। युयुधे विविधैर्युद्धैर्युद्धाज्यां यज्जयश्रियः ॥३४२॥
युधा द्वादशवार्षिक्या विद्याधरपती जितौ। प्राञ्जली प्रणिपत्यैवं भरताधीशमूचतुः ॥३४३॥
रवेरुपरि किं तेजो वायोरुपरि को जवी। मोक्षस्योपरि किं सौख्यं कश्च शूरस्तवोपरि ॥३४४॥
ऋषभो भगवान् साक्षादद्य दृष्टस्त्वमार्षभे। अज्ञानाद् योधितोऽस्माभिः कुलस्वामिन् सहस्व तत् ॥३४५॥ 10
किरीट इव नो मूर्ध्नि मण्डनं तव शासनम्। कोशो वपुरपत्यानि सर्वमन्यच्च तावकम् ॥३४६॥
भक्तिगर्भमिति प्रोच्य भरतेशाय दत्तवान्। विनम्रो विनमिर्नारीरत्नं रत्नोच्चयं नमिः ॥३४७॥

१ सुस्थप० खं. ॥ २ °वारं—मु. ॥ ३ °त्त सः—खं. ॥ ४ श्लोकसप्तकं त्रिषष्टि० १ । ४ । ५०६-५१२ ॥

ततो राज्ञा विसृष्टौ तौ राज्यान्यारोप्य सूनुषु । विरक्तावृषभेशांह्रिमूले[१] जगृहतुर्व्रतम् ॥३४८॥
ततोऽपि चलितव्रतश्चक्ररत्नस्य पृष्ठतः । गच्छन्नासादयामास राजा मन्दाकिनीतटम् ॥३४९॥
उत्तरं निष्कुटं गाङ्गं सुषेणोऽप्यभिषेणयन् । तरसा साधयामास किमसाध्यं महात्मनाम्[२] ॥३५०॥
[३]राजाप्यष्टमभक्तेन गङ्गादेवीमसाधयत् । आनर्च भरतं सापि देवतार्हैरुपायनैः ॥३५१॥
ततो गङ्गानदीकूले कमलामोदमालिनि । वासागार इवोवास वसुमत्येकवासवः ॥३५२॥
भरतं रूपलावण्यकिङ्करीकृतमन्मथम् । तत्रावलोक्य गङ्गापि प्राप क्षोभमयीं दशाम् ॥३५३॥
विराजमाना सर्वाङ्गं मुक्तामयविभूषणैः । वदनेन्दोरनुगतैस्तारैस्तारागणैरिव ॥३५४॥
वस्त्राणि कदलीगर्भत्वक्सगर्भाणि बिभ्रती । स्वप्रवाहपयांसीव तद्रूपपरिणामतः ॥३५५॥
रोमाञ्चकञ्चुकोदञ्चत्कुचस्फुटितकञ्चुका । सद्यस्तरङ्गितापाङ्गा गङ्गा भरतमभ्यगात् ॥३५६॥ [ त्रिभिर्विशेषकम् ]
प्रेमगद्गदवादिन्या गाढमभ्यर्थ्य पार्थिवः । रिरंसमानया निन्ये तया निजनिकेतनम् ॥३५७॥
भुञ्जानो विविधान् भोगांस्तया सह महीपतिः । एकाहमिव वर्षाणां सहस्रं सोऽत्यवाहयत् ॥३५८॥
[४]गुहां खण्डप्रपाताख्यामखण्डितपराक्रमः । ततः स्थानान्नृपः प्राप करटीव वनाद्वनम् ॥३५९॥

१ सार्धश्लोकः त्रिषष्टि० १ । ४ । ५३६–५३७ ॥ २ महौजसां—खं० ॥ ३ श्लोकषट्कं त्रिषष्टि० १ । ४ । ५४२–५४७ ॥
४ त्रिषष्टि० १ । ४ । ५४९ ॥

कृतमालकवत्तत्र नाट्यमालमसाधयत् । अष्टमेन नृपस्तद्वत्तस्य चाष्टाहिकां[1] व्यधात् ॥३६०॥
सुषेणोद्घाटितद्वारकपाटां तां गुहां नृपः । प्राविशद्दक्षिणं तस्या द्वारमुज्जघटे स्वयम् ॥३६१॥
निर्ययौ[2] तद्गुहामध्यात् केसरीव[3] नरेश्वरः । स्कन्धावारं च निदधे[4] गाङ्गे रोधसि पश्चिमे ॥३६२॥
नवापि निधयो नागकुमाराधिष्ठितास्तदा । गङ्गाकूलमनुप्राप्तं राजानमुपतस्थिरे ॥३६३॥
इत्यूचुस्ते वयं[5] गङ्गामुखमागधवासिनः । आगतास्त्वां महाभाग भवद्भाग्यैर्वशीकृताः ॥३६४॥
यथाकाममविश्रान्तमुपभुङ्क्ष्व प्रयच्छ च । अपि क्षीयेत पाथोऽब्धौ न तु क्षीयामहे वयम् ॥३६५॥
सहस्रैर्नवभिर्यक्षैः किङ्करैरिव तावकैः । आपूर्यमाणाः सततं चक्राष्टकप्रतिष्ठिताः ॥३६६॥
द्वादशयोजनायामा नवयोजनविस्तृताः । भूमध्ये सञ्चरिष्यामो देव त्वत्पारिपार्श्विकाः ॥३६७॥ [युग्मम् । ]
सेनापतिः सुषेणोऽपि गङ्गादक्षिणनिष्कुटम् । महावनं महावायुरिवोन्मूल्य समाययौ ॥३६८॥
समासहस्रैः षष्ट्यैवं जित्वा षट्खण्डमेदिनीम् । चक्रमार्गानुगोऽयोध्यां जगाम जगतीपतिः ॥३६९॥
ततो द्वादशभिर्वर्षैरागत्यागत्य पार्थिवैः । प्रचक्रे चक्रवर्तित्वाभिषेको भरतेशितुः ॥३७०॥

---

१ ०ष्टाहनिकां—मु. ॥ २ त्रिषष्टि० १ । ४ । ५६७ ॥ ३ केशरीव—मु. ॥ ४ विदधे—खं. ॥ ५ श्लोकद्वयं त्रिषष्टि० १ । ४ । ५८३-५८४ ॥

[1]भ्रातॄननागतान् ज्ञात्वा तस्मिन्नपि महोत्सवे। तेषामेकैकशो दूतान् प्राहिणोद् भरतेश्वरः ॥३७१॥
राज्यानि चेत् समीहध्वे सेवध्वे भरतं ततः। दूतैरित्युदिताः सर्वेऽप्यालोच्यैवाऽवदन्निदम् ॥३७२॥
विभज्य राज्यं दत्तं नस्तातेन भरतस्य च। संसेव्यमानो भरतोऽधिकं किं नः करिष्यति ॥३७३॥
समापतन्तं किं काले कालं प्रस्खलयिष्यति। किं जराराक्षसीं देहग्राहिणीं निग्रहीष्यति ॥३७४॥
बाधाविधायिनः किं वा व्याधिव्याधान् हनिष्यति। [2]यथोत्तरं वर्द्धमानां तृष्णां वा दलयिष्यति ॥३७५॥

---

१ इतः परं पञ्च श्लोका मु. मध्ये एवं सन्ति—
कुर्वता स्वकुटुम्बस्य सारां च ददृशे कृशाम्। सुन्दरीं चास्थिभूतां च चुकोप भरतेश्वरः॥ ३७१॥
ऊचे प्राहरिकान् किं रे मद्गेहे नास्ति भोजनम्। यदेषमीदृशी जाता अस्थिचर्ममयी कथम्॥ ३७२॥
स्वामिन् विजययात्राभूत्तव तावत्प्रभृत्यपि। आचामाम्लान्यविश्रान्तमकार्षीत् सुन्दरी यतः॥ ३७३॥
अत्रान्तरे च भगवान् विहृत्य वसुधातले। भगवान् समवासार्षीदष्टापदगिरौ ततः॥ ३७४॥
श्रुत्वा च भरताधीशः स्वामिवन्दनहेतवे। आगात् तद्देशनां श्रुत्वा व्रतं जग्राह सुन्दरी ॥३७५॥"

इदं तु ध्येयम्—भरतस्य चक्रवर्तित्वाभिषेकानन्तरं त्रिषष्टिशलाकापुरुषचरिते [१।४। ७३०-७९७] महता विस्तरेणेदं सुन्दरीदीक्षावर्णनमस्ति, तथापि अत्र भरतचक्रिचरितस्य संक्षिप्तत्वादेतेषां पञ्चानां श्लोकानां क्वचित् किञ्चिदशुद्धत्वाच्च इमे श्लोका अतिरिक्ता इव भान्ति। आदौ कथञ्चिद् रचयित्वा पश्चाद् ग्रन्थकृतैवाऽनादृता इत्यपि सम्भाव्यते॥ २ श्लोकाष्टकं त्रिषष्टि० १। ४। ८००-८०७॥

ईदृक् सेवाफलं दातुं न चेद् भरत ईश्वरः। मनुष्यभावे सामान्ये तर्हि कः केन सेव्यताम् ॥३७६॥
प्राज्यराज्योऽप्यसन्तोषादस्मद्राज्यं जिघृक्षति। स्थाम्ना चेत् तद्वयमपि तस्य तातस्य सूनवः ॥३७७॥
अविज्ञपय्य तातं तु सोदर्येणाग्रजन्मना। दूत त्वत्स्वामिना योद्धुं न वयं प्रोत्सहामहे ॥३७८॥
ते दूतानभिधायैवमृषभस्वामिनं ययुः। नत्वा भरतसन्दिष्टं तच्च[1] सर्वं व्यजिज्ञपन् ॥३७९॥
[2] अम्लानकेवलादर्शसंक्रान्ताशेषविष्टपः। कृपावान् भगवानादिनाथोऽपीत्यादिदेश तान् ॥३८०॥
[3] अनेकयोनिसम्पातानन्तबाधानिबन्धनम्। अभिमानफलैवेयं राज्यश्रीः सापि[4] नश्वरी ॥३८१॥
किञ्च या स्वःसुखैस्तृष्णा नात्रुट्यत् प्राग्भवेषु वः। साऽङ्गारकारकस्येव मर्त्यभोगैः कथं त्रुटेत् ॥३८२॥
अङ्गारकारकः कश्चिदादाय पयसो दृतिम्। जगाम कर्तुमङ्गारानरण्ये रीणवारिणि ॥३८३॥
सोऽङ्गारानलसन्तापाद् मध्याह्नातपपोषितात्। उद्भूतया तृषाऽऽक्रान्तः सर्वं दृतिपयः पपौ ॥३८४॥
तेनाप्यच्छिन्नतृष्णः सन् सुप्तः स्वप्ने गृहं गतः। आलू[5]-कलस[6]-नन्दानामुदकान्यभितोऽप्यपात् ॥३८५॥
तज्जलैरप्यशान्तायां तृष्णायामग्नितैलवत्। वापीकूपतडागानि पायं पायमशोषयत् ॥३८६॥
तथैव तृषितोऽथाऽपात् सरितः सरितां पतीन्। न तु तस्य तृषाऽत्रुट्यन्नारकस्येव वेदना ॥३८७॥

---

१ तत्स्वरूपं—च.॥ २ त्रिषष्टि० १।४।८२७॥ ३ इतः प्रभृति त्रयोदश श्लोकाः त्रिषष्टि० १।४।८३४-८४६॥ ४ सा विन० खं.॥ ५ जलपात्रभेदानामिमानि नामानि॥ ६ कलश—मु.॥



5

10

मरुकूपे ततो यातः कुशपूलं स रज्जुभिः। बद्ध्वा चिक्षेप पयसे किमार्त्तः कुरुते न हि ॥३८८॥
दूराम्बुत्वेन कूपस्य मध्येऽपि गलिताम्बुकम्। निश्चोत्य पूलं द्रमकः स्नेहपोत[1]मिवापिबत् ॥३८९॥
न च्छिन्ना याऽर्णवाद्यैस्तृट् छेद्या पूलाम्भसा न सा। तद्वद्वः स्वःसुखाच्छिन्ना छेद्या राज्यश्रिया किमु ॥३९०॥
अमन्दानन्दनिःस्यन्दिनिर्वाणप्राप्तिकारणम्। वत्साः संयमराज्यं तद्युज्यते वो विवेकिनाम् ॥३९१॥
तत्कालोत्पन्नवैराग्यवेगा भगवदन्तिके। तेऽष्टानवतिरप्याशु प्रव्रज्यां जगृहुस्ततः ॥३९२॥
अहो धैर्यमहो सत्त्वमहो वैराग्यधीरिति। चिन्तयन्तस्तत्स्वरूपं दूता[2] राज्ञे व्यजिज्ञपन् ॥३९३॥

१ स्नेहप्रोत—खं. मु.॥ २ इतः परं शां. खं. प्रत्योरविद्यमाना नव श्लोका मु. मध्ये इत्थमुपलभ्यन्ते—
" तत् श्रुत्वा भरतस्तेषां राज्यानि जगृहे स्वयम्। लाभाद्विवर्धितो लोभो राजधर्मो ह्यसौ सदा ॥३९९॥
अथ विज्ञपयामास सेनानीर्भरतेश्वरम्। न चक्रं चक्रशालायां विशत्यद्यापि नः प्रभो ॥४००॥
स्वामिन् दिग्विजये कश्चिदाज्ञाबाह्यो नृपः क्वचित्। विवर्तते डोल इव घरट्टे भ्रमति प्रभो ॥४०१॥
आ ज्ञातं भरतोऽवादील्लोकोत्तरपराक्रमः। अस्मद्बन्धुर्महाबाहुरेको बाहुबलिर्बली ॥४०२॥
एकतो गरुडश्चैकोऽन्यतोऽप्यहिकुलानि च। मृगारि[रे]को यत् कुर्यान्मृगकुला=[ नि तन्नहि ? ].. ॥४०३॥
एकतः संहताः सर्वे देवदानवमानवाः। तथान्यतो बाहुबलिः प्रतिमल्लो न विद्यते ॥४०४॥
एकतश्चक्रशालायां चक्रं न प्रविशत्यदः। नेच्छत्याज्ञामन्यतो [मितो] बाहुः संकटे पतितोऽस्म्यहम् ॥४०५॥
किंवा बाहुबलिः सोऽयमाज्ञां कस्यापि मन्यते। सहते नाम पर्याणं केसरी किं कदाचन ॥४०६॥

5

10



॥ ८१ ॥

वैमात्रेयं कनीयांसमथ बाहुबलिं प्रति । दूतं तक्षशिलापुर्यां प्रेषयामास पार्थिवः ॥३९४॥
शैलशृङ्गे सिंहमिवोत्तुङ्गसिंहासने स्थितम् । नत्वा बाहुबलिं दूतो युक्तिस्यूतमवोचत ॥३९५॥
त्वमेकः श्लाघ्यसे यस्य ज्येष्ठो भ्राता जगज्जयी । षट्खण्डभरताधीशो लोकोत्तरपराक्रमः ॥३९६॥
त्वद्भ्रातुश्चक्रवर्तित्वाभिषेके के महीभुजः । मङ्गल्योपायनकराः करदीभूय नाययुः ॥३९७॥
सूर्योदय इवाम्भोजखण्डस्य भरतोदयः । श्रिये तवैव किन्त्वस्याभिषेके न त्वमागमः ॥३९८॥ 5
ततः कुमार भवतोऽसमागमनकारणम् । ज्ञातुं राज्ञा नयज्ञेनाऽऽज्ञापितोऽहमिहागमम् ॥३९९॥
नाऽऽगा यद्यार्जवेनापि तत्र कोऽपि जनः पुनः । तवाविनीततां ब्रूते यच्छिद्रान्वेषिणः खलाः ॥४००॥
पिशुनानां प्रवेशं तद्यत्नाद् गोपायितुं[1] तव । आगन्तुं युज्यते तत्र का त्रपा स्वाम्युपासने ॥४०१॥
[2]भ्रातेति यदि निर्भीको नागास्तदपि नोचितम् । आज्ञासारा न गृह्यन्ते ज्ञातेयेन महीभुजः ॥४०२॥
अयस्कान्तैरिवायांसि देवदानवमानवाः । कृष्टास्तेजोभिरधुना ह्येकं भरतमन्वगुः ॥४०३॥ 10
यमर्द्धासनदानेन वासवोऽपि सखीयति । सेवामात्रेण तं हन्तानुकूलयसि किं नहि ॥४०४॥

---

एवं विमृशतस्तस्य सेनानीर्जगदे ह्यदः । स्वामिंस्तद्व(स्तव ब)लस्याग्रे त्रैलोक्यं च तृणायते ॥४०७॥" क्वचिदशुद्धा इमे श्लोका आदौ कथञ्चिद् रचयित्वा पश्चाद् ग्रन्थकारेणैव निराकृता इति सम्भाव्यते ॥

१ गोपयितुं—मु. ॥ २ एकादश श्लोकाः त्रिषष्टि० १ । ५ । १११–१२१ ॥

वीरमानितया यद्वा राजानमवमन्यसे। त्वं हि तस्मिन् ससैन्योऽपि समुद्रे सक्तुमुष्टिवत् ॥४०५॥
लक्षाश्चतुरशीतिस्तद्गजाः शक्रेभसन्निभाः। सह्याः केनाभिसर्प्पन्तः पर्व्वता इव जङ्गमाः ॥४०६॥
तावतोऽश्वान् रथांश्चास्य विष्वक् प्लावयतो महीम्। कल्लोलानिव कल्पान्तोदधेः कः स्खलयिष्यति ॥४०७॥
तस्य षण्णवतिग्रामकोटिभर्त्तुः पदातयः। कोट्यः षण्णवतिः सिंहा इव त्रासाय कस्य न ॥४०८॥
एकः सुषेणसेनानीर्दण्डपाणिः समापतन्। कृतान्त इव किं शक्यः सोढुं देवासुरैरपि ॥४०९॥
अमोघं बिभ्रतश्चक्रं चक्रिणो भरतस्य तु। सूर्यस्येव तमस्तोमः स्तोकिकैव त्रिलोक्यपि ॥४१०॥
तेजसा वयसा ज्येष्ठो नृपश्रेष्ठः स सर्वथा। राज्यजीवितकामेन सेव्यो बाहुबले त्वया ॥४११॥
अथ बाहुबलिर्बाहुबलापास्तजगद्बलः। ऊचे भ्रूभङ्गभृद्धीरध्वानोऽर्णव इवापरः ॥४१२॥
युक्तं यदुक्तं भवता लोभनं क्षोभणं वचः। दूता खलु यथावस्थस्वामिवाचिकवाचिनः ॥४१३॥
सुरासुरनरेन्द्रार्च्यो न[1] तातो न च विक्रमः। श्लाघाहेतुर्मे भरतः कीर्त्तितो दूत नूतनः ॥४१४॥
करदीभूय भूपाला नागच्छन्तु कथं नु तम्। दृश्यते नन्वसौ यस्य भ्राता बाहुबलिर्बली ॥४१५॥
आवयोर्ननु मार्त्तण्ड-पङ्करुट्खण्डयोरिव। किं न स्याद् व्यवहितयोरपि प्रीतिः परस्परम् ॥४१६॥
सदा मनसि तिष्ठामस्तस्य भ्रातुरहो वयम्। गत्वा किमतिरिच्येत प्रीतिर्नैसर्गिकी हि नः ॥४१७॥

१—जैमुपा. । न तातोत्तमविक्रमः—मु. ॥

आर्ज्जवान्नागता[1]: सत्यं कौटिल्यं भरतेन किम्। विमृश्यकारिणः सन्तो दूयन्ते किं खलोक्तिभिः ॥४१८॥
एक एवावयोः स्वामी भगवानादितीर्थकृत्। तस्मिन् विजयिनि स्वामी कथङ्कारं ममापरः ॥४१९॥
[2]भ्रातास्यभीः स चाङ्गेश आज्ञापयतु यद्यलम्। ज्ञातिस्नेहेन, किं वज्रं वज्रेण न विदार्यते ॥४२०॥
सुरासुरनरोपास्त्या प्रीतोऽस्त्वेष मयास्य किम्। मार्ग एव क्षमः स्तम्भे रथः सज्जोऽपि भज्यते ॥४२१॥
तातभक्तो महेन्द्रश्चेज्ज्येष्ठं तं तातनन्दनम्। आसयत्यासनस्यार्द्धे स किं तेनापि दृप्यति ॥४२२॥
तेऽन्ये तस्मिन् समुद्रे ये ससैन्याः सक्तुमुष्टिवत्। तेजोभिर्दुःसहोऽहं तु हन्त स्यां वडवानलः ॥४२३॥
पत्तयोऽश्वा रथा नागाः सेनानीर्भरतोऽपि च। मयि सर्व्वे प्रलीयन्तां तेजांसीवार्कतेजसि ॥४२४॥
याहि दूत स एवैतु राज्यजीवितकाम्यया। तातदत्तांशतुष्टेन मयैवोपेक्षि तस्य भूः ॥४२५॥
दूतेनागत्य विज्ञप्ते यथार्थे तेन तत्क्षणम्। युयुत्सुर्बाहुबलिना भरतोऽथाभ्यषेणयत् ॥४२६॥
छादयन् मेदिनीं सैन्यैर्घनर्त्तुर्द्यां घनैरिव। महाबाहुस्ततो बाहुबलिर्भरतमभ्यगात् ॥४२७॥
उभयोरपि वाहिन्योर्महासुभटयादसोः। अन्योऽन्यास्फालितास्त्रोर्म्मिः सम्फेटोऽभूद् भयानकः ॥४२८॥
तत्सैनिकानामन्योऽन्यं कुन्ताकुन्ति शराशरि। आमन्त्रितश्राद्धदेवः प्रावर्त्तत रणक्षणः ॥४२९॥
पर्यस्याशेषसैन्यानि तूलानीव महाबलः। अभ्येत्य भरतं बाहुबलिरेवमवोचत ॥४३०॥

१ °न्नागत:—खं. ॥ २ श्लोकषट्कं त्रिषष्टि० १। ५। १४५–१४९, १५४ ॥



5

10

हस्त्यश्वपत्तिघातेन किं मुधा पापदायिना। यद्यलं तत्त्वमेकाकी युद्ध्यस्वैकाकिना मया ॥४३१॥
एकाङ्गाजिं प्रतिज्ञाय द्वाभ्यामपि निवारिताः। सैनिका उभयेऽप्यस्थुः पश्यन्तः साक्षिणो यथा ॥४३२॥
ततो दृग्युद्ध आरब्धे निर्निमेषविलोचनौ। देवैरपि नृदेवौ तौ देवाविति वितर्कितौ ॥४३३॥
भरते निर्जिते तत्र सभ्यीभूतामरं[1] तयोः। वाग्युद्धमभवत् पक्षप्रतिपक्षपरिग्रहात् ॥४३४॥
तत्रापि हीनवादित्वं भरते समुपेयुषि। भूभुजौ भुजयुद्धेन युयुधाते महाभुजौ ॥४३५॥
भरतो लम्बमानोऽथ बाहौ बाहुबलेः स्थिरे। शाखामृगो महाशाखिशाखायामिव वीक्षितः ॥४३६॥
भरतस्य महाबाहोरपि बाहुबलिर्बली। एकेन बाहुना बाहुं लतानाममनामयत् ॥४३७॥
प्रारब्धे मुष्टियुद्धेऽथ पेतुर्भरतमुष्टयः। बाहुबलौ समुद्रोर्म्मिघाता इव तटाचले ॥४३८॥
आहतो बाहुबलिना वज्रकल्पेन मुष्टिना। पपात भरतः पृथ्व्यां स्वसैन्याश्रुजलैः सह ॥४३९॥
मूर्च्छान्ते भरतो बाहुबलिं दण्डेन दर्पतः। ताडयामास दन्तीव तिर्यग्दन्तेन पर्वतम् ॥४४०॥
दण्डेन बाहुबलिना निहतो भरतस्ततः। भूम्यामाजानुमग्नोऽस्थान्निखात इव कीलकः ॥४४१॥
किमेष चक्रवर्त्तीति भरतः कृतसंशयः। यावत् संस्मृतवांश्चक्रं तावदागात् करेऽस्य तत् ॥४४२॥
भूमेर्निःसृत्य कोपेन महता भरतेश्वरः। चिक्षेप प्रज्वलच्चक्रं कृतहाहारवं बलैः ॥४४३॥

[1] साक्षीभूता—मु. ॥

तच्चक्रं पार्श्वतो बाहुबलेर्भ्रान्त्वा न्यवर्त्तत। दैवतानि हि शस्त्राणि स्वगोत्रे प्रभवन्ति न ॥४४४॥
अक्षत्रं प्रेक्ष्य तद् बाहुबलिः कोपारुणेक्षणः। सचक्रं चूर्णयाम्येनमिति मुष्टिमुदक्षिपत्[1] ॥४४५॥
असाविव कषायैर्धिगहं भ्रातृवधोद्यतः। विजित्य करणग्रामं कषायानेव हन्मि तत् ॥४४६॥
इति सञ्जातसंवेगस्तदा तेनैव मुष्टिना। केशानुत्पाटयामास सामायिकमथाददे ॥४४७॥
[2] साधु साध्विति सानन्दं व्याहरन्तः सुरासुराः। उपरिष्टाद् बाहुबलेः पुष्पवृष्टिं वितेनिरे ॥४४८॥ 5
'गत्वा भगवतः पार्श्वे ज्ञानातिशयशालिनाम्। कनीयसां सोदराणां विधास्ये वन्दनां कथम् ॥४४९॥
उत्पन्नकेवलज्ञानस्तत्तां यास्यामि पर्षदम्'। इति तत्रैव मौनेन सोऽस्थात् प्रतिमया कृती ॥४५०॥ [युग्मम्]
[3] भरतस्तं तथा दृष्ट्वा विचार्य स्वं कुकर्म च। बभूव न्यञ्चितग्रीवो विविक्षुरिव मेदिनीम् ॥४५१॥
[4] शान्तं रसं मूर्त्तमिव भ्रातरं प्रणनाम च। नेत्रयोरश्रुभिः कोष्णैः कोपशेषमिवोत्सृजन् ॥४५२॥
प्रणमन् भरतस्तस्याऽधिकोपास्तिविधित्सया। नखादर्शेषु[5] संक्रान्त्या नानारूप इवाभवत् ॥४५३॥ 10
सुनन्दानन्दनमुनेर्गुणस्तवनपूर्विकाम्। स्वनिन्दामित्यथाकार्षीत् स्वापवादगदौषधीम् ॥४५४॥
धन्यस्त्वं तत्यजे येन राज्यं मदनुकम्पया। पापोऽहं यदसन्तुष्टो दुर्मदस्त्वामुपाद्रवम् ॥४५५॥

---

१ तान्—मु. ॥ २ त्रिषष्टि० १।५।७४१ ॥ ३ एकादश श्लोकाः त्रिषष्टि० १।५।७४३–७५६ ॥
४ शान्तरसं—मु. ॥ ५ °दर्शानुसं०—ख ॥

स्वशक्तिं ये न जानन्ति ये चान्यायं प्रकुर्वते । जीयन्ते ये च लोभेन तेषामस्मि धुरन्धरः ॥४५६॥
राज्यं भवतरोर्बीजं ये न जानन्ति तेऽधमाः । तेभ्योऽप्यहं विशिष्येय[1] तदमुञ्चन् विदन्नपि ॥४५७॥
त्वमेव पुत्रस्तातस्य यस्तातपथमन्वगाः । पुत्रोऽहमपि तस्य स्यां चेद् भवामि भवादृशः ॥४५८॥
विषादपङ्कमुत्सार्य पश्चात्तापजलैरिति । तत्पुत्रं सोमयशसं तद्राज्ये स न्यवीविशत् ॥४५९॥
तदादि सोमवंशोऽभूच्छाखाशतसमाकुलः । तत्तत्पुरुषरत्नानामेकमुत्पत्तिकारणम् ॥४६०॥
ततो बाहुबलिं नत्वा भरतः सपरिच्छदः । पुरीमयोध्यामगमत् स्वाराज्य[2]श्रीसहोदराम् ॥४६१॥
दुस्तपं तप्यमानोऽथ तपो बाहुबलिर्मुनिः । वर्षमेकं व्यतीयाय सह प्राग्जन्मकर्मभिः ॥४६२॥
ततश्चामूढलक्ष्येण स्वामिना नाभिसूनुना । ब्राह्मी च सुन्दरी चानुज्ञाते तत्पार्श्वमीयतुः ॥४६३॥
ऊचतुश्च 'महासत्त्व समस्वर्णाश्मनस्तव । न युक्तं त्यक्तसङ्गस्य करिस्कन्धाधिरोहणम् ॥४६४॥
एवम्भूतस्य ते हन्त कथं ज्ञानं प्ररोहति । अधःस्थितकरीषाग्नेः पादपस्येव पल्लवः ॥४६५॥
आत्मनैव विचार्य त्वमुत्तितीर्षुर्भवोदधिम् । हस्तिनोऽस्मादवतर तरण्डादायसादिव' ॥४६६॥

१ विशिष्ये यत्तद—मु. खं. ॥ २ स्वरा०—शां. मु. । श्वरा°—खं । परन्तु 'स्वाराज्य' इति पाठः समीचीनो भाति, स्वर्गराज्यम्' इति च तस्यार्थः । त्रिषष्टिशलाकापुरुषचरिते प्रथमे पर्वणि पञ्चमे सर्गेऽपि अयमेव श्लोकः [ ७५६ ] वर्तते, तत्रापि 'स्वाराज्य' इत्येव पाठः ॥

ततोऽसौ चिन्तयामास कुतस्त्यो हस्तिसङ्गमः । पादपारोहमारूढवल्लीकवपुषो मम ॥४६७॥
त्यजेन्मुद्रां समुद्रोऽपि चलेयुरचला अपि । इमे तु भगवच्छिष्ये भाषेते न मृषा क्वचित् ॥४६८॥
आ ज्ञातमथवाऽस्त्येष मान एव मतङ्गजः । स एव मे ज्ञानफलं बभञ्ज विनयद्रुमम् ॥४६९॥
'कथं कनीयसो भ्रातॄन् वन्दे' धिगिति चिन्तितम् । तपसा ज्यायसां तेषां मिथ्यादुष्कृतमस्तु मे ॥४७०॥
सुरासुरनमस्यस्य गत्वा भगवतोऽन्तिके । वन्दे कनिष्ठानपि तांस्तच्छिष्यपरमाणुवत् ॥४७१॥
अचलत् पादमुत्पाट्य यावत्तावदसौ मुनिः । अवाप केवलज्ञानं द्वारं निर्वाणवेश्मनः ॥४७२॥
करामलकवद्विश्वं कलयन् केवलश्रिया । समीपे स्वामिनोऽध्यास्त सदः केवलभास्वताम् ।४७३॥
भरतोऽपि महारत्नैश्चतुर्दशभिराश्रितः । चतुःषष्टिसहस्रान्तःपुरो नवनिधीश्वरः ॥४७४॥
धर्म्मार्थकामान् साम्राज्यसम्पद्वल्लेः फलोपमान् । परस्पराविरोधेन यथाकालमसेवत ॥४७५॥
अन्यदा विहरन् स्वामी जगामाष्टापदाचलम् । भरतोऽपि ययौ तत्र स्वामिपादान् विवन्दिषुः ।४७६॥
सुरासुरार्च्यं समवसरणस्थं जगत्पतिम् । स त्रिः प्रदक्षिणीकृत्य नमस्कृत्येति तुष्टुवे ॥४७७॥
विश्वासमिव मूर्त्तिस्थं सद्वृत्तमिव पिण्डितम् । प्रसादमिव निःशेषजगतामेकतः स्थितम् ॥४७८॥
ज्ञानराशिमिवाध्यक्षं पुण्यस्येव समुच्चयम् । सर्वलोकस्य सर्वस्वमिवैकत्र समाहृतम् ॥४७९॥
वपुःस्थं संयममिवोपकारमिव रूपिणम् । शीलमिव पादचारि क्षमामिव वपुष्मतीम् ॥४८०॥


5
10

रहस्यमिव मोक्षस्य विश्ववीर्यमिवैकगम्[१] । सिद्ध्युपायमिवावन्ध्यं कौशल्यमिव केवलम् ॥४८१॥
मैत्रीमिव मूर्त्तिमतीं सदेहां करुणामिव । मुदितामिव पिण्डस्थामुपेक्षामिव रूपिणीम् ॥४८२॥
तपः-प्रशम-सज्ज्ञानयोगमेकमिवाहृतम् । साक्षाद्वैनयिकमिव सिद्धिं साधारणीमिव ॥४८३॥
व्यापकं हृदयमिव सर्वासां श्रुतसम्पदाम् । नमः-स्वस्ति-स्वधा-स्वाहा-वषडर्थमिवापृथक् ॥४८४॥
विशुद्धधर्म्मनिर्म्माणप्रकर्षमिव केवलम् । समस्ततपसां पिण्डीभूतं फलमिवाखिलम् ॥४८५॥
परभागमिवाशेषगुणराशेरनश्वरम् । उपन्नमिव निर्विघ्नं श्रेयो निःश्रेयसश्रियः ॥४८६॥
प्रभावस्यैकधामेव मोक्षस्य प्रतिमामिव । कुलवेश्मेव विद्यानां फलं सर्वाशिषामिव ॥४८७॥
आर्यवर्यचरित्राणामात्मदर्शमिवामलम् । कूटस्थं प्रशममिव जगतो दत्तदर्शनम् ॥४८८॥
दुःखशान्तेरिव द्वारं ब्रह्मचर्यमिवोज्ज्वलम् । पुण्यैरुपनतं जीवलोकस्येवैकजीवितम् ॥४८९॥
मृत्युव्याघ्रमुखादेतदाक्रष्टुमखिलं जगत् । बाहुं प्रसारितमिव निर्वाणेन कृपालुना ॥४९०॥
ज्ञानमन्दरसंक्षुब्धज्ञेयाम्भोधेः समुत्थितम् । अपरं पीयूषमिव देहभाजाममृत्यवे ॥४९१॥
विश्वाभयप्रदानेन समाश्वासितविष्टपम् । शरणं त्वां प्रपन्नोऽस्मि प्रसीद परमेश्वर ॥४९२॥
तत्र च त्रिजगन्नाथमृषभस्वामिनं ततः । एकाग्रमनसोपासाञ्चक्रे चक्रधरश्चिरम् ॥४९३॥
अथाद्रौ तत्र साधूनां सहस्रैर्दशभिर्वृतः । दीक्षाकालाद् गते पूर्वलक्षे मोक्षं ययौ प्रभुः ॥४९४॥

१ विश्वधैर्य० —खं. ॥

तदा निर्वाणमहिमा [1]चक्रे शक्रादिभिः सुरैः । अस्तोकशोकः शक्रेण भरतेशोऽप्यबोध्यत ॥४९५॥
[2]चक्रेऽथ भरतो रत्नमयमष्टापदोपरि । सिंहनिषद्याप्रासादमष्टापदमिवापरम् ॥४९६॥
तत्र च स्वामिनो मान-वर्ण-संस्थानशोभितम् । रत्नोपलमयं बिम्बं स्थापयामास चक्रभृत् ॥४९७॥
स्वामिशिष्टत्रयो[3]विंशिभावितीर्थकृतामपि । यथावन्मान-संस्थान-वर्णैर्बिम्बान्यस्त्रयत् ॥४९८॥
[6]भ्रातृणां नवनवतेरपि तत्र महात्मनाम् । रचयामास रत्नाश्मस्तूपाननुपमान् नृपः ॥४९९॥
पुनरेत्य निजां राजधानीं राजशिरोमणिः । यथावद्राज्यमशिषत् प्रजारक्षणदीक्षितः ॥५००॥
[4]स कर्मभिर्भोगफलैः प्रेर्यमाणो निरन्तरम् । बुभुजे विविधान् भोगान् साक्षादिव दिवस्पतिः ॥५०१॥
नेपथ्यकर्म्म निर्मातुमपरेद्युरगादसौ । मध्ये शुद्धान्तनारीणां ताराणामिव चन्द्रमाः ॥५०२॥
तत्र सर्वाङ्गविन्यस्तरत्नाभरणबिम्बितैः । स्त्रीजनैर्युगपत् प्रेम्णा परिरब्ध इवाभवत् ॥५०३॥
पश्यन्नसौ स्वमादर्शेऽपश्यत् स्रस्ताङ्गुलीयकाम् । [5]अङ्गुलिं गलितज्योत्स्नां दिवा शशिकलामिव ॥५०४॥
ततः प्रोद्भिन्ननिर्वेदात् प्रत्यङ्गोज्झितभूषणम् । स्वमपश्यद् गतश्रीकं शीर्णपर्णमिव द्रुमम् ॥५०५॥

१ प्रभोश्चक्रे सुरासुरैः—ग. च. । चक्रे शक्रैः सुरासुरैः—शां. खं. ॥ २ ततोऽसौ विदधे रत्न० —खं. ख. च. ॥ ३ त्रयोविंश—खं. मु. । “ डिन् । ७ । १ । १४७ । शन्-शद्-विंशतिभ्यः स्यन्तेभ्यो मानार्थेभ्यः षष्ठ्यर्थे डिन् स्यात् । ...विंशिनो भवनेन्द्राः ।” —सि० ल० ॥ ४ स्वकर्म—खं. ॥ ५ श्लोकपञ्चकतुलना—त्रिषष्टि० १ । ६ । ७३२–७३७ ॥

अचिन्तयच्च धिगहो वपुषो भूषणादिभिः । श्रीराहार्यैव कुड्यस्य पुस्ताद्यैरिव कर्म्मभिः ॥५०६॥
अन्तः क्लिन्नस्य विष्टाद्यैर्मलैः स्रोतोभवैर्बहिः । चिन्त्यमानं किमप्यस्य शरीरस्य न शोभनम् ॥५०७॥
इदं शरीरं कर्पूरकस्तूरीप्रभृतीन्यपि । दूषयत्येव पाथोदपयांस्यूषरभूरिव ॥५०८॥
विरज्य विषयेभ्यो यैस्तेपे मोक्षफलं तपः । तैरेव फलमेतस्य जगृहे तत्त्ववेदिभिः ॥५०९॥
इति चिन्तयतस्तस्य शुक्लध्यानमुपेयुषः । उत्पेदे केवलज्ञानमहो योगस्य जृम्भितम् ॥५१०॥ 5
रजोहरणमुख्यानि मुनिचिह्नानि तत्क्षणात् । विनीत उपनीयास्मै नमश्चक्रे दिवस्पतिः ॥५११॥
तद्राज्येऽकृत तत्पुत्रमादित्ययशसं तदा । यदाद्यादित्यवंशोऽयमद्याप्यस्ति महीभुजाम् ॥५१२॥१०॥

स्यान्मतम्–युक्तं भरतस्य पूर्वजन्मार्जितयोगसमृद्धिबलक्षपिताशुभकर्मणः कर्मलेशक्षपणाय योगप्रभाववर्णनम् । यस्तु जन्मान्तरेषु अलब्धरत्नत्रयोऽत एवाक्षपितकर्मा मानुषत्वमात्रमप्यप्राप्तवान् स कथमनन्तकालप्रचितशुभाशुभकर्मनिर्मूलनमनुभवेत् । तत्राह— 10

पूर्वमप्राप्तधर्मापि परमानन्दनन्दिता ।
योगप्रभावतः प्राप मरुदेवा परं पदम् ॥११॥

मरुदेवा हि स्वामिनी आसंसारं त्रसत्वमात्रमपि नानुभूतवती, किं पुनर्मानुषत्वम्, तथापि योगबलसमिद्धेन शुक्लध्यानाग्निना चिरसञ्चितानि कर्मेन्धनानि भस्मसात् कृतवती । यदाह—

"[1]जह एगा मरुदेवा अच्चंतं थावरा सिद्धा ।" [आव० नि० १०३६]

मरुदेवाचरितं चोक्तप्रायम् ॥११॥

ननु जन्मान्तरेऽपि अकृतक्रूरकर्मणां मरुदेवादीनां योगबलेन युक्तः कर्म्मक्षयः, ये त्वत्यन्तक्रूरकर्माणस्तेषु योगः कुण्ठतामप्यासादयेत् । इत्याह—

**ब्रह्म-स्त्री-भ्रूण-गोघातपातकान्नरकातिथेः ।**
**दृढप्रहारिप्रभृतेर्योगो हस्तावलम्बनम् ॥१२॥**

ब्रह्मणो ब्राह्मणस्य, स्त्रिया वनितायाः, भ्रूणस्य गर्भस्य गर्भिण्याश्च, गोर्धेनोः, तेषां घातः, स एव पातकम्, तस्मात् । यद्यपि समदर्शिनां ब्राह्मणाब्राह्मणयोः स्त्रीपुरुषयोर्भ्रूणाभ्रूणयोर्गवागवोर्घातेऽविशेषेण पापबन्धः । यदाह—

"[2]सव्वो न हिंसियव्वो जह महिपालो तहा उदयपालो । न य अभयदाणवइणा जणोवमाणेण होयव्वं ॥"

[उपदेश० ४६३] । तथापि लोकप्रसिद्धयनुरोधेन ब्रह्मेत्याद्युक्तम् । ये हि लौकिकाः सर्वस्या हिंसायाः पापफलं न मन्यन्ते तेऽपि ब्रह्मादिघातकस्य महापापीयस्तां मन्यन्त एवेति । नरकातिथेर्दृढप्रहारिप्रभृतेर्योगो हस्तावलम्बनम्,

१ "एवं बद्धमबद्धं आपसाणं भवंति पंच सया ।" इति पूर्वार्धम् । "यथैका मरुदेवा अत्यन्तं स्थावरा सिद्धा ।" छाया ॥
२ "सर्वो न हिंसितव्यो यथा महीपालस्तथा उदकपालः । न च अभयदानव्रतिना जनोपमानेन भवितव्यम् ।"—छाया ॥



5

10

तेनैव भवेन मोक्षगमनात्। प्रभृतिग्रहणादन्येऽपि पापकारिणो विदितजिनवचनास्तत एव प्राप्तयोगसम्पदो नरकप्राप्तियोग्यानि कर्माणि निर्मूल्य परमसम्पदमासादितवन्तो द्रष्टव्याः। यदाह–

"[1]कूरा वि सहावेणं विसयविसवसाणुगा वि होऊण[2]।
भावियजिणवयणमणा [3]तेलोक्कसुहावहा होंति ॥१॥" [ ] इति। तथाहि—

कस्मिंश्चिन्नगरे कश्चिदासीद् द्विजातिरुद्भटः। प्रजासु कर्त्तुमन्यायान् प्रावर्त्तत स पापधीः ॥१॥
आरक्षपुरुषैरेष ततो निर्वासितः पुरात्। व्याधहस्तमिव श्येनश्चौरपल्लीं जगाम च ॥२॥
नृशंसचरितैस्तैस्तैरात्मनस्तुल्य इत्यसौ। चौरसेनाधिपतिना पुत्रत्वेनान्वमन्यत ॥३॥
चौरसेनापतौ तस्मिन्नवसानमुपेयुषि। तत्पुत्र इति तत्स्थाने स बभूव महाभुजः ॥४॥
निष्कृपं प्रहरत्येष सर्वेषां प्राणिनां यतः। ततो दृढप्रहारीति नाम्ना निजगदे जनैः ॥५॥
अन्येद्युर्विश्वकुट्टाकलुण्टाकभटपेटकैः। स कुशस्थलनामानं ग्रामं लुण्टयितुं ययौ ॥६॥
ब्राह्मणो देवशर्मेति तत्र दारिद्र्यविद्रुतः। अवकेशी फलमिव क्षीरान्नं याचितोऽर्भकैः ॥७॥
पर्यट्य सकले ग्रामे क्वापि क्वापि स तन्दुलान्। क्वापि क्वापि पयोऽभ्यर्थ्य परमान्नमपीपचत् ॥८॥

१ "क्रूरा अपि स्वभावेन विषयविषवशानुगा अपि भूत्वा। भावितजिनवचनमनसः त्रैलोक्यसुखावहा भवन्ति ॥" छाया ॥ २ होऊणं—मु. ॥ ३ तेलुक्कसुहावहा होंति—मु. ॥

नद्यां स्नातुं ययावेष यावत्तावत् तदोकसि । ते क्रूरतस्कराः पेतुर्दैवं दुर्बलघातकम् ॥९॥
तेषामेकतमो दस्युरपश्यत्तस्य पायसम् । क्षुधातुरः प्रेत इव तदादाय पलायितः ॥१०॥
आच्छिद्यमाने[1] तस्मिंस्तु पायसे जीवितव्यवत् । क्रन्दन्ति डिम्भरूपाणि गत्वा पितरमूचिरे ॥११॥
व्यात्ताननानामस्माकं दस्युवृन्देन पायसम् । जह्रे प्रसारितदशामनिलेनेव कज्जलम् ॥१२॥
तदाकर्ण्य वचो विप्रः क्षिप्रं दीप्रः क्रुदग्निना । यमदूत इवादाय परिघं पर्यधावत ॥१३॥
स रोषराक्षसावेशात् समुत्पादितदोर्बलः । हन्तुं प्रववृते दस्यून् परिघेण पशूनिव ॥१४॥
तेनावकरवत् साक्षात् क्षिप्यमाणानवेक्ष्य तान् । वित्रस्यतस्तिरस्कुर्व्वन् दधावे तस्करेश्वरः ॥१५॥
तस्याभिधावतो[2] दैवाद् गतिविघ्नविधायिनी । निरोद्धुं दुर्गतिमिव मार्गे गौरन्तरेऽभवत् ॥१६॥
करालकरवालैकप्रहारेण वराकिकाम् । जघान नृजघन्यस्तां चण्डाल इव निर्घृणः ॥१७॥
तस्याभ्यापततो रोरद्विजातेः स शिरो भुवि । पनसद्रोः फलमिवापातयत् खड्गयष्टिना ॥१८॥
आः पाप निष्कृप कृतं किमेतदिति वादिनी । वेलामासन्नवती[3] तं चाभ्यगाद् द्विजकुटुम्बिनी ॥१९॥
तस्या वृक इव च्छाग्या गुर्विण्याः सोऽतिदारुणः । कुष्माण्डदारमुदरं दारयित्वा द्विधाऽकरोत् ॥२०॥

---

१ जीवितव्य इवाच्छिद्यमाने तस्मिंस्तु पायसे—खं. ॥ २ तस्यापि—मु. ॥ ३ बाला—मु. ॥


5
10

ततो जरायुमध्यस्थं तस्या गर्भं द्विधाकृतम्। स स्फुरन्तं निरैक्षिष्ट लताया इव पल्लवम् ॥२१॥
तथा सम्पश्यमानस्य तस्य विह्वलचेतसः। कृपा गतकृपस्यापि जज्ञे वल्कमिवाश्मनः ॥२२॥
ततो हा तात तातेति हा मातर्मातरित्यपि। विलपन्तः समाजग्मुस्तत्कालं द्विजबालकाः ॥२३॥
नग्नान् भुग्नानतिक्षामान् [1]श्यामानतिमलेन च। दृष्ट्वा दृढप्रहारी तान् सानुतापमचिन्तयत् ॥२४॥
हहा घ्नता निर्घृणेन दरिद्रौ दम्पती मया। अमी बाला हतास्तोयशोषे जीवन्ति किं झषाः ॥२५॥
क्रूरेण कर्म्मणानेन नेष्यमाणस्य दुर्गतिम्। अघभीतस्य मे कः स्यादुपायः शरणं च कः ॥२६॥
इति सञ्चिन्तयन्नेव वैराग्यावेगभागसौ। एनोगदागदङ्कारान् साधूनुद्यान ऐक्षत ॥२७॥
नत्वोवाचेत्यहं [2]पापो भाष्यमाणोऽपि पाप्मने। पङ्किलः स्पृश्यमानोऽपि पङ्किलीकुरुते परम् ॥२८॥
येषामेक[3]तमदपि नरकायैव तान्यहम्। ब्रह्म-स्त्री-भ्रूण-गोघातपातकान्यकृपो व्यधाम् ॥२९॥
मामीदृशमपि त्रातुं साधवो यूयमर्हथ। मेघानां वर्षतां स्थानमस्थानं वा न किञ्चन ॥३०॥
अथ ते साधवस्तस्मै यतिधर्ममुपादिशन्। सोऽथ च्छत्रमिव[4]ोष्णार्त्तः पापभीरुस्तमाददे ॥३१॥
न भोक्ष्ये तत्र यत्राह्नि स्मरिष्याम्यस्य पाप्मनः। करिष्ये सर्वथा क्षान्तिं सोऽग्रहीदित्यभिग्रहौ ॥३२॥

5

10

१ दिग्धानति—शां. घ. ङ. छ. ॥  २ पाप्मा—शां. मु. ॥  ३ °तरमपि—मु. ॥  ४ °घोष्णालुः—खं. मु. ॥

॥ ९८ ॥

पूर्वावस्कन्दिते तस्मिन्नेव ग्रामे कुशस्थले । कर्मक्षयं चिकीर्षुः स विजहार महामनाः ॥३३॥
स एवायं कृतच्छद्मा[1] पापः पापीयसामहो । इत्यतर्ज्यत लोकेन स महात्मा दिवानिशम् ॥३४॥
गो-भ्रूण-द्विजघात्येष इति लोकेन जल्पता । विशन् गृहेषु भिक्षार्थं श्वेव लोष्टैरकुट्यत ॥३५॥
स्मार्यमाणस्तु[2] तत्पापं प्रतिवासरमप्यसौ । शान्तस्वान्तो न भुङ्क्ते स्म, किंवा सत्त्वस्य दुष्करम् ॥३६॥
क्वचित् प्रातः क्वचिन्मध्यंदिने सायमपि क्वचित् । स्मार्यमाणः स तत्पापं कुत्राप्यह्नि न भुक्तवान् ॥३७॥
लोष्टुभिर्यष्टिभिः[3] पांसुवृष्टिभिर्मुष्टिभिर्जनाः । यज्जघ्नुः सोऽधिसेहे तत् सम्यक् चैवमभावयत् ॥३८॥
आत्मन् यादृक् कृतं कर्म्म तादृशं फलमाप्नुहि । यादृक्षमुप्यते बीजं फलं तादृक्षमाप्यते ॥३९॥
यदमी निरनुक्रोशमाक्रोशान् मयि तन्वते । अयत्नेनैव सिद्धा तन्ममेयं कर्म्मनिर्ज्जरा ॥४०॥
मय्याक्रोशाः प्रमोदाय यथैषां मे तथैव हि । यत् प्रीत्या सहमानस्य कर्म्मक्षयविधायिनः ॥४१॥
यन्मां भर्त्सयतामेषां सुखमुत्पद्यतेऽद्य तत् । उत्पद्यतां भवे हन्त दुर्लभः सुखसङ्गमः ॥४२॥
अमी मदीयं दुष्कर्मग्रन्थिं परुषभाषितैः । क्षारैरिव चिकित्सन्तो नितान्तसुहृदो[4] मम ॥४३॥
कुर्व्वन्तु ताडनं हन्त ममैते यदिदं किल । स्वर्णस्येवाग्निसंतापो मलिनत्वमपोहति ॥४४॥

१ °च्छद्म—शां. ॥ २ °माणः स तत्पापं—मु. ॥ ३ लेष्टु० – खं. ॥ ४ नितान्तं—मु. ॥

कर्षन् दुर्गतिगुप्तेर्मां स्वं प्रक्षिपति तत्र यः। कथं कुप्याम्यहं तस्मै प्रहारानपि कुर्वते ।४५॥
मत्पापानि व्यपोहन्ति निजपुण्यव्ययेन ये। कथङ्कारमिवैतेभ्योऽपरः परमबान्धवः ॥४६॥
वध-बन्धादि हर्षाय, यन्मे संसारमोचनम्। तदेवानन्तसंसारहेतुरेषां दुनोति माम् ॥४७॥
केचित् परेषां तोषाय त्यजन्त्यर्थान् वपूंष्यपि। एषां प्रीतिदमाक्रोश-हननादि कियन् मम ॥४८॥
तर्जितोऽहं हतो नाऽस्मि, हतो वा नास्मि मारितः। मारितो वा न मे धर्मोऽपहृतो बान्धवैरिव ॥४९॥
आक्रोशवागधिक्षेपो बन्धनं हननं मृतिः। सह्यं श्रेयोऽर्थिना सर्वं श्रेयो हि बहुविघ्नकम् ॥५०॥
एवं भावयता तेन गर्हता स्वं च दुष्कृतम्। निर्दग्धः सर्वतः कर्म्मराशिः कक्ष इवाग्निना ॥५१॥
अम्लानं केवलज्ञानमथ लेभे स[1] दुर्लभम्। अयोगिकेवलिगुणस्थानस्थो मोक्षमाप च ॥५२॥

योगप्रभावेण दृढप्रहारी यथैष मुक्त्वा नरकातिथित्वम्।
पदं प्रपेदे परमं तथान्योऽप्यसंशयानः प्रयतेत योगे ॥५३॥ ॥ १२ ॥

पुनरुदाहरणान्तरेण योगश्रद्धामेव वर्द्धयति—

**तत्कालकृतदुष्कर्मकर्मठस्य दुरात्मनः।**
**गोप्त्रे चिलातीपुत्रस्य योगाय स्पृहयेन्न कः ॥१३॥**

---

१ —ख. च. । सुदुर्लभम् — मु. ॥

तत्कालं तत्क्षणं कृतं यद् दुष्कर्म्म स्त्रीवधलक्षणं तेन कर्म्मठः कर्म्मशूरस्तस्य, दुरात्मन इति पापकरणकालापेक्षम्, चिलातीपुत्राभिधानस्य गोप्त्रे दुर्गतिपातरक्षकाय योगाय को न स्पृहयेत्? सर्व एव स्पृहयेदित्यर्थः। तथाहि—

क्षितिप्रतिष्ठे नगरे यज्ञदेवोऽभवद् द्विजः। निनिन्द पण्डितम्मन्यः स सदा जिनशासनम् ॥१॥
असहिष्णुश्च तां निन्दां जिगीषुः कोऽपि चेल्लकः। गुरुणा वार्यमाणोऽपि तं वादार्थमवीवदत् ॥२॥ 5
ईदृशी च प्रतिज्ञाऽभूद् वादाधिष्ठितयोस्तयोः। येन यो जेष्यते तस्य शिष्यत्वं स करिष्यति ॥३॥
आनीतो निग्रहस्थानं बुद्धिकौशलशालिना। विवदन् वादिना तेन यज्ञदेवः पराजितः ॥४॥
चेल्लको जितकाशी[1] तु यज्ञदेवद्विजन्मना। तदा पूर्वप्रतिज्ञातां परिव्रज्यामजिग्रहत् ॥५॥
ततः शासनदेव्यैवं यज्ञदेवो व्यबोध्यत। चारित्रं प्रतिपन्नोऽसि ज्ञान-श्रद्धानवान् भव ॥६॥
व्रतं ततः प्रभृत्येष यथावत् पालयन्नपि। निनिन्द वस्त्राङ्गमलं, प्राक्संस्कारो हि दुस्त्यजः ॥७॥ 10
अशाम्यन् ज्ञातयोऽप्यस्य संसर्गेण महात्मनः। प्रावृषेण्याभ्रसम्पर्केणाहिमांशोरिवांशवः ॥८॥
अस्य पाणिगृहीती तु नितान्तमनुरागिणी। उज्झाञ्चकार नो रागं नीलीरक्तेव शाटिका ॥९॥
वश्यो मेऽस्त्विति सा तस्मै पारणे कार्म्मणं ददौ। सत्यं रक्ता विरक्ताश्च मारयन्त्येव योषितः ॥१०॥

१ जितकासी—शां. खं. ॥

क्षीयमाणः कृष्णपक्षेणेव कार्म्मणकर्म्मणा । स मुनीन्दुर्ययौ स्वर्गं मण्डलं तरणेरिव ॥११॥
तस्यावसानात् सञ्जातनिर्वेदा सापि गेहिनी । प्रव्रज्यामग्रहीदेकं मानुष्यकतरोः फलम् ॥१२॥
अनालोच्यैव सा पापं पतिव्यसनसम्भवम् । कालं कृत्वा दिवं प्राप, दुष्प्रापं तपसा हि किम् ॥१३॥
यज्ञदेवस्य जीवोऽथ च्युत्वा राजगृहे पुरे । धनसार्थपतेश्चेट्याश्चिलात्यास्तनयोऽभवत् ॥१४॥
चिलात्याः पुत्र इत्येष चिलातीपुत्रसंज्ञया । आहूयते स्म लोकेन, नाम नान्यत् प्रकल्पितम् ॥१५॥ 5
यज्ञदेवप्रियाजीवश्च्युत्वाऽनुसुतपञ्चकम् । भद्राया धनभार्यायाः सुंसुमेति[1] सुताऽभवत् ॥१६॥
धनो नियोजयामास चिलातीतनयं च तम् । सुंसुमायाः स्वदुहितुः बालग्राहककर्म्मणि ॥१७॥
लोकेष्वागांसि चक्रेऽसौ श्रेष्ठ्यभैषीच्च राजतः । स्वामी भृत्यापराधेन यतः स्याद्दण्डभाजनम् ॥१८॥
मन्त्रवित् तं धनश्रेष्ठी सदोपद्रवकारिणम् । गृहान्निर्वासयामास दासेरं दन्दशूकवत् ॥१९॥
सोऽथ सिंहगुहां चौरपल्लीं वल्लीं महागसाम् । ययौ प्रियागाः प्रीतिर्हि तुल्यव्यसन-शीलयोः ॥२०॥ 10
स नृशंसो नृशंसेन दस्युवृन्देन सङ्गतः । वायुनेवाग्निरभवद्दारुणोऽप्यतिदारुणः ॥२१॥
ततः सिंहगुहाधीशे चौरसेनापतौ मृते । चौरसेनापतिः सोऽभूत्तदर्थमिव निर्मितः ॥२२॥
यौवनं सुंसुमाप्यासा रूपादिगुणशालिनी । कलाकलापपूर्णाऽभूत् खेचरीव महीचरी ॥२३॥

१ मु. मध्ये अत्र अग्रे च सर्वत्र 'सुसुमा' इति पाठः ॥

चैलातेयोऽन्यदोचे स्वानस्ति राजगृहे पुरे। श्रेष्ठी धनोऽनन्तधनो दुहिता चास्य सुंसुमा ॥२४॥
तस्करास्तत्र गच्छामो धनं वः, सुंसुमा तु मे। इति व्यवस्थामास्थाय सोऽगाद् धनगृहं निशि ॥२५॥
प्रयोज्य स्वापनीं विद्यां कीर्त्तयित्वा स्वमागतम्। स धनं ग्राहयामास, सुंसुमां स्वयमग्रहीत् ॥२६॥
सुप्ताशेषपरीवारः सूनुभिः पञ्चभिः समम्। अपसृत्य धनस्तस्थौ नयो नयवतां ह्यसौ ॥२७॥
5
जीवग्राहं गृहीत्वा च हृदयेन स सुंसुमाम्। चैलातेयः पलायिष्ट सलोप्त्रैर्दस्युभिः सह ॥२८॥
आहूयारक्षपुरुषान् धनश्रेष्ठीत्यभाषत[1]। चौरापहृतवित्तं वः, प्रत्यानयत सुंसुमाम् ॥२९॥
ततो धनः सहारक्षैः पुत्रैश्चायुधपाणिभिः। पुरोगस्वमनःस्पर्द्धयेव त्वरितमन्वगात् ॥३०॥
जलं स्थलं लता वृक्षानन्यदप्यखिलं पथि। पीतोन्मत्तो हैममिव सोऽपश्यत् सुंसुमामयम् ॥३१॥
[2]इतः पीतमितो भुक्तमितः स्थितमितो गतम्। एवं वदद्भिः पदिकैः स दस्यून्निकषा ययौ ॥३२॥
10
हत हतेति गृह्णीत गृह्णीतेति च भाषिणः। मलिम्लुचानाममिलन्नारक्षपुरुषास्ततः ॥३३॥
दिशो दिशि प्रणेशुस्ते वित्तं त्यक्त्वाऽन्यतस्कराः। सुंसुमां स तु नामुञ्चच्चौरो व्याघ्रो मृगीमिव ॥३४॥
आरक्षपुरुषास्ते तु तद्वित्तं प्राप्य पुष्कलम्। व्यावर्तन्त कृतार्थौ हि सर्वः स्यादन्यथामतिः ॥३५॥

---

१ धनः—खं. ॥ २ ततः पीत—शां. ॥

उद्वहन् सुंसुमामंसे लतामिव मतङ्गजः । प्रविवेश महारण्यं चिलातीतनयस्ततः ॥३६॥

सूनुभिः पञ्चभिः पञ्चाननैरिव धनोऽन्वगात् । कष्टुं[1] पुत्रीं मुखाद्दस्यो राहोरिन्दुकलामिव ॥३७॥

धने स सविधीभूते मा भवत्वस्य मा मम । सुंसुमेति धिया तस्याः शिरःकमलमच्छिनत् ॥३८॥

आकृष्टकरवालोऽसौ हस्तविन्यस्तमस्तकः । तदा यमपुरीद्वारक्षेत्रपाल इवाबभौ ॥३९॥

सुंसुमायाः कबन्धस्यान्तिके स्थित्वा रुदन् धनः । वारीव बाष्पपूरेण नयनाञ्जलिभिर्ददौ ॥४०॥

तस्याः कबन्धमुत्सृज्य व्यावृत्तः ससुतो धनः । शल्यितः शोकशल्येन महाटव्यामथापतत् ॥४१॥

ललाटन्तपतपनतेजस्तापभयादिव । विष्वक् सङ्कुचितच्छायो मध्याह्नश्च ततोऽभवत्[2] ॥४२॥

शोक-श्रम-क्षुधा-तृष्णा-मध्याह्नातपवह्निभिः । धनः सुताश्च पञ्चाग्निसाधका इव तेपिरे ॥४३॥

न जलं न फलं नान्यद्ददृशुर्जीवनौषधम् । मृत्यवे प्रत्युतापश्यंस्ते हिंस्रश्वापदान् पथि ॥४४॥

आत्मनस्तनयानां च तां पश्यन् विषमां दशाम् । धनश्रेष्ठी पथ्यतुच्छे गच्छन्नेवमचिन्तयत् ॥४५॥

मम सर्वस्वनाशोऽभूत् पुत्री प्राणप्रियाऽमृत[3] । मृत्युकोटिं वयं प्राप्ता धिगहो दैवजृम्भितम् ॥४६॥

न यत् पुरुषकारेण साध्यं धीसम्पदा न च । तदेकं दैवमेवेह बलिभ्यो बलवत्तरम् ॥४७॥

---

१ क्रष्टुं—खं ॥ २ इति—खं. ॥ ३ ॰या मृता—मु. ॥



5

10

॥१०१॥

प्रसाद्यते न दानेन विनयेन न गृह्यते। सेवयाऽऽवर्ज्यते नैव केयं दुःसाधता[1] विधेः ॥४८॥
विबुधैर्बोध्यते नैव बलवद्भिर्न रुध्यते। न साध्यते तपस्यद्भिः प्रतिमल्लोऽस्तु को विधेः ॥४९॥
अहो दैवं मित्रमिव कदाचिदनुकम्पते। कदाचित् परिपन्थीव निःशङ्कं प्रणिहन्ति च ॥५०॥
विधिः पितेव सर्वत्र कदाचित् परिरक्षति। कदाचित् पीडयत्येव दायाद इव दुर्दमः[2] ॥५१॥
विधिर्नयति मार्गेणामार्गस्थमपि कर्हिचित्। कदाचिन्मार्गगमपि विमार्गेण प्रवर्त्तयेत् ॥५२॥
आनयेदपि दूरस्थं करस्थमपि नाशयेत्। मायेन्द्रजालतुल्यस्य विचित्रा गतयो विधेः ॥५३॥
अनुकूले विधौ पुंसां विषमप्यमृतायते। विपरीते पुनस्तत्रामृतमेव विषायते ॥५४॥
स एवं चिन्तयन्नेव प्राप राजगृहं पुरम्। सशोकः सुंसुमापुत्र्या विदधे चौर्ध्वदेहिकम् ॥५५॥
वैराग्याद् व्रतमादाय श्रीवीरस्वामिनोऽन्तिके। दुस्तपं स तपस्तेपे पूर्णायुश्च दिवं ययौ ॥५६
चैलातेयोऽप्यनुरागात् सुंसुमाया मुहुर्मुहुः। मुखं पश्यन्नविज्ञातश्रमो याम्यां दिशं ययौ ॥५७॥
सर्वसन्तापहरणं छायावृक्षमिवाध्वनि। साधुमेकं ददर्शासौ कायोत्सर्गजुषं पुरः ॥५८॥
स स्वेन कर्मणा तेन किञ्चिदुद्विग्नमानसः। तमुवाच समाख्याहि धर्मं संक्षेपतो मम ॥५९॥
अन्यथा कदलीलावं लविष्यामि शिरस्तव। अनेनैव कृपाणेन सुंसुमाया इव क्षणात् ॥६०॥

१ दुःसाध्यता—मु. ॥ २ दुर्मदः—ख. च. ॥

॥१९७॥

तदप्यसाम्प्रतं ते हि हता नरकगामिनः । अनन्तेषु नियोज्यन्ते दुःखेषु स्वल्पदुःखकाः ॥१४॥
किञ्च सौख्यवतां घाते धर्म्मः स्यात् पापवारणात् । इत्थं विचार्य हेयानि वचनानि कुतीर्थिनाम् ॥१५॥
चार्वाकाः प्राहुरात्मैव तावन्नास्ति कथञ्चन । तं विना कस्य सा हिंसा कस्य हिंसाफलं भवेत् ॥१६॥
भूतेभ्य एव चैतन्यं पिष्टादिभ्यो यथा मदः । भूतसंहतिनाशे च पञ्चत्वमिति कथ्यते ॥१७॥
आत्माभावे च तन्मूलः परलोको न युज्यते । अभावे परलोकस्य पुण्यापुण्यकथा वृथा ॥१८॥ 5
" तपांसि यातनाश्चित्राः संयमो भोगवञ्चना । " इति विप्रतिपत्तृभ्यः परेभ्यः परिभाष्यते ॥१९॥
स्वसंवेदनतः सिद्धः स्वदेहे जीव इष्यताम् । अहं दुःखी सुखी वाहमिति प्रत्यययोगतः ॥२०॥
घटं वेद्म्यहमित्यत्र त्रितयं प्रतिभासते । कर्म्म क्रिया च कर्त्ता च तत् कर्त्ता किं निषिध्यते ॥२१॥
शरीरमेव चेत् कर्त्तृ, न कर्त्तृ तदचेतनम् । भूतचैतन्ययोगाच्चेचेतनं तदसङ्गतम् ॥२२॥
मया दृष्टं श्रुतं स्पृष्टं घ्रातमास्वादितं स्मृतम् । इत्येककर्त्तृका[1] भावा भूतचिद्वादिनः कथम् ॥२३॥ 10
स्वसंवेदनतः सिद्धे स्वदेहे चेतनात्मनि । परदेहेऽपि तत्सिद्धिरनुमानेन साध्यते ॥२४॥
[2]बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्गतिः । प्रमाणवलतः सिद्धा केन नाम निवार्यते ॥२५॥

१ °काभावात् भूतचि° मु. ॥ २ " बुद्धिपूर्वां क्रियां दृष्ट्वा स्वदेहेऽन्यत्र तद्गतेः । ज्ञायते बुद्धिसद्भावः सा न येषु न तेषु धीः ॥ " इति तत्त्वार्थराजवार्तिके उद्धृतः श्लोकः ॥

॥१९७॥

तत् परलोकिनः सिद्धौ परलोको न दुर्घटः । तथा च पुण्यपापादि सर्वमेवोपपद्यते ॥२६॥[1]
तपांसि यातनाश्चित्रा इत्याद्युन्मत्तभाषितम् । सचेतनस्य तत् कस्य नोपहासाय जायते ॥२७॥
निर्बाधोऽस्ति ततो जीवः स्थित्युत्पाद-व्ययात्मकः । ज्ञाता द्रष्टा गुणी भोक्ता कर्त्ता कायप्रमाणकः ॥२८॥
तदेवमात्मनः सिद्धौ हिंसा किं नोपपद्यते । तदस्याः परिहारेणाहिंसाव्रतमुदीरितम् ॥२९॥१९॥
हिंसानियमे स्पष्टं दृष्टान्तमाह—

आत्मवत् सर्वभूतेषु सुख-दुःखे प्रिया-ऽप्रिये ।
चिन्तयन्नात्मनोऽनिष्टां हिंसामन्यस्य नाचरेत् ॥२०॥

सुखशब्देन सुखसाधनमन्न-पान-स्रक्-चन्दनादि गृह्यते । दुःखशब्देन दुःखसाधनं वध-बन्ध-मारणादि । ततो यथात्मनि दुःखसाधनमप्रियं तथा सर्वभूतेष्वपि । एवं[2] चिन्तयन् दुःखसाधनत्वादप्रियां परस्य हिंसां न कुर्वीत । सुखग्रहणं दृष्टान्तार्थम् । यथा सुखसाधनं प्रियमेवं दुःखसाधनमप्रियमित्यर्थः । यदाहुर्लौकिका अपि—

"श्रूयतां धर्म्मसर्वस्वं श्रुत्वा चैवावधार्यताम् ।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥" [ ] इति ॥२०॥

5 10

१ स्वयमेवो° क. ख. ॥ २ दुःखसाधनमप्रियम् । तथा सर्वभूतेष्वपि दुःखसाधनमप्रियमित्यर्थः । यदाहु° मु. ॥

ननु प्रतिषिद्धाचरणे दोषः, प्रतिषिद्धा च त्रसजीवविषया हिंसा, स्थावरेषु त्वप्रतिषिद्धहिंसेषु यथेष्टं चेष्टन्तां गृहस्था इत्याह—

निरर्थिकां न कुर्वीत जीवेषु स्थावरेष्वपि।
हिंसामहिंसाधर्मज्ञः काङ्क्षन् मोक्षमुपासकः ॥२१॥

स्थावराः पृथिव्यम्बु-तेजो-वायु-वनस्पतयः[1], तेष्वपि जीवेषु हिंसां न कुर्वीत। किंविशिष्टाम्? निरर्थिकां प्रयोजनरहिताम्, शरीरकुटुम्बनिर्वाहनिमित्तं हि स्थावरेषु हिंसा न प्रतिषिद्धा, या त्वनर्थिका शरीरकुटुम्बादिप्रयोजनरहिता तादृशीं हिंसां न कुर्वीत उपासकः श्रावकः। किंविशिष्टः? अहिंसाधर्मज्ञः, अहिंसालक्षणं धर्मं जानातीति अहिंसाधर्मज्ञः। न हि प्रतिषिद्धवस्तुविषयैवाहिंसा धर्मः, किन्त्वप्रतिषिद्धेष्वपि सा यतनारूपा। ततश्च तथाविधं धर्मं जानन् स्थावरेष्वपि निरर्थिकां हिंसां न विदधीत। ननु प्रतिषिद्धविषयैवाहिंसास्तु, किमनया, सूक्ष्मेक्षिकया? इत्याह—काङ्क्षन् मोक्षम्, स हि मोक्षाकाङ्क्षी यतिवत् कथं निरर्थिकां हिंसामाचरेत्? ॥२१॥

ननु निरन्तरहिंसापरोऽपि सर्वस्वं दक्षिणां दत्त्वा पापविशुद्धिं विदध्यात्, किमनेन हिंसापरिहारक्लेशेन? इत्याह—

१ पृथिव्यप्तेजो' ग. च. छ. ॥

॥१९९॥

प्राणी प्राणितलोभेन यो राज्यमपि मुञ्चति ।
तद्वधोत्थमघं सर्वोर्वीदानेऽपि न शाम्यति ॥२२॥

प्राणी जन्तुः, प्राणितं जीवितव्यम्, तस्य लोभेन राज्यमपि तत्कालोपस्थितं परिहरति । यदाह—
" मार्यमाणस्य हेमाद्रिं राज्यं वाथ प्रयच्छतु । तदनिष्टं परित्यज्य जीवो जीवितुमिच्छति ॥ " [ ]
तत्तथाविधप्राणितप्रियप्राणिवधसम्भवं पापं सकलपृथ्वीदानेनापि न शाम्यति । भूदानं हि सकलदानेभ्योऽभ्यधिक- 5
मिति श्रुतिः ॥२२॥

अथ श्लोकचतुष्टयेन हिंसाकर्तुर्निन्दामाह—

वने निरपराधानां वायु-तोय-तृणाशिनाम् ।
निघ्नन् मृगाणां मांसार्थी विशिष्येत कथं शुनः ? ॥२३॥

मृगाणामिति " निप्रेभ्यो घ्नः " [ सि० २ । २ । १५ ] इति कर्मत्वप्रतिषेधाच्छेषे षष्ठी । वने वनवासिनां, 10
न तु परस्वीकृतभूमिवासिनाम् । तथाविधा अपि सापराधाः स्युरित्याह—निरपराधानां परधनहरण-परगृहभङ्ग-पर
मारणाद्यपराधरहितानाम् । निरपराधत्वे हेतुमाह—वायुतोयतृणाशिनाम् । न हि वायु-तोय-तृणानि परधनानि येन
तद्भक्षणात् सापराधत्वं स्यात् । मांसार्थीति अत्रापि मृगाणामिति सम्बध्यते । मृगाणां यन्मांसं तदर्थयते, मृगग्रहणे-

नाऽऽटविकाः प्राणिनो गृह्यन्ते। एवंविधमृगमांसार्थी मृगवधपरायणो निरपराधमानुषपिचण्डिकामांसलुब्धाच्छुनः कथं विशिष्येत, श्वैवेत्यर्थः ॥२३॥

दीर्यमाणः कुशेनापि यः स्वाङ्गे हन्त दूयते।
निर्मन्तून् स कथं जन्तूनन्तयेन्निशितायुधैः ॥२४॥

दीर्यमाणो विदार्यमाणः कुशेन दर्भेण, अपिशब्दादास्तां शस्त्रेण, यः स्वाङ्गे शरीरे, हन्तेति प्रतिबोध्यामन्त्रणे, दूयते उपतप्यते। निर्मन्तून् निरपराधान् जन्तून् स कथमन्तयेदन्तं प्रापयेत् निशितायुधैः कुन्तादिभिः ? आत्मानुसारेणापि परपीडामजानन्नेवं निन्द्यते। तथा च मृगयाव्यापृतान् क्षत्रियान् प्रति केनचिदुक्तम्—

"रसातलं यातु यदत्र पौरुषं, क्व नीतिरेषाऽशरणो ह्यदोषवान्।
निहन्यते यद् बलिनातिदुर्बलो, हहा महाकष्टमराजकं जगत् ॥" [ ] ॥२४॥

निर्मातुं क्रूरकर्माणः क्षणिकामात्मनो धृतिम्।
समापयन्ति सकलं जन्मान्यस्य शरीरिणः ॥२५॥

क्रूरं रौद्रं कर्म हिंसादि येषां ते क्रूरकर्माणो लुब्धकादयः। आत्मनः स्वस्य धृतिं स्वास्थ्यलक्षणां निर्मातु-

१ कुनीति° च.॥ २ °नापि दुर्बलो ग. च.॥



॥२०१॥

मिति सम्बन्धः। धृतेर्विशेषणं क्षणिकामिति, आजन्मशाश्वतिकधृतिनिमित्तं कदाचित् किञ्चिद् विरुद्धमपि क्रियते, क्षणिकधृतिनिर्माणार्थं तु समापयन्ति समाप्तिं नयन्ति जन्म अन्यस्य वध्यस्य शरीरिणः। अयमर्थः—परप्राणिमांसजन्यक्षणिकतृप्तिहेतोराकालिकं परस्यायुः समाप्यत इति महदिदं वैशसम्। यदाह—

"योऽश्नाति यस्य तन्मांसमुभयोः पश्यतान्तरम्। एकस्य क्षणिका तृप्तिः प्राणैरन्यो वियुज्यते ॥" [ ] २५॥

म्रियस्वेत्युच्यमानोऽपि देही भवति दुःखितः।
मार्यमाणः प्रहरणैर्दारुणैः स कथं भवेत् ॥२६॥

'म्रियस्व त्वम्' इत्युच्यमानोऽपि न तु मार्यमाणो देही जन्तुर्जायमानमृत्युरिव दुःखितो भवतीति सर्वप्राणिप्रतीतम्। प्रहरणैः कुन्त-तोमरादिभिर्मार्यमाणो[१] विनाश्यमानः स वराको देही कथं भवेत्? परमदुःखित एव भवेदित्यर्थः। मरणवचनेनापि दूयमानस्य निशितैः शस्त्रैर्मारणमिति मृतमारणम्, तत् कथं सकर्णः कुर्यादिति निन्दा ॥२६॥

हिंसाफलं दृष्टान्तद्वारेणाह—

श्रूयते प्राणिघातेन रौद्रध्यानपरायणौ।
सुभूमो ब्रह्मदत्तश्च सप्तमं नरकं गतौ ॥२७॥

[१] निशातैः शस्त्रैर्मारणं मृतमारणम् शां. ॥

श्रूयते आकर्ण्यते एतदागमे यदुत प्राणिघातेन हेतुना सुभूम ब्रह्मदत्तौ चक्रवर्तिनौ सप्तमं नरकं गतौ। हिंसाया नरकगमनहेतुत्वं न रौद्रध्यानमन्तरेण भवति, अन्यथा सिंहवधकतपस्विनोऽपि नरकः स्यादित्युक्तम् 'रौद्रध्यानपरायणौ', हिंसानुबन्धिध्यानयुक्तावित्यर्थः। यथा तौ नरकं गतौ तथा कथानकद्वारेण दर्श्यते। तथाहि—

वसन्तपुरनामार्यां पुर्यामुच्छन्नवंशकः। आसीच्च्युत इवाकाशादग्निको नाम दारकः ॥१॥

सोऽन्यदा[२] चलितस्तस्मात् स्थानाद्देशान्तरं प्रति। सार्थाद्धीनः परिभ्राम्यन्नगमत् तापसाश्रमम् ॥२॥

तमग्निं तनयत्वेनाग्रहीत् कुलपतिर्ज्जमः। जमदग्निरिति ख्यातिं स लोकेषु ततोऽगमत् ॥३॥

तप्यमानस्तपस्तीक्ष्णं प्रत्यक्ष इव पावकः। तेजसा दुःसहेनासौ पप्रथे पृथिवीतले ॥४॥

अत्रान्तरे महाश्राद्धो नाम्ना वैश्वानरः सुरः। धन्वन्तरिश्च तापसभक्तो व्यवदतामिति ॥५॥

एक आहार्हतां धर्मः प्रमाणमितरः पुनः। तापसानां विवादेऽस्मिन् व्यधातामिति निर्णयम् ॥६॥

आर्हतेषु जघन्यो यः प्रकृष्टस्तापसेषु यः। परीक्षणीयावावाभ्यां को गुणैरतिरिच्यते? ॥७॥

तदानीं मिथिलापुर्यां नवधर्मपरिष्कृतः। श्रीमान् पद्मरथो नाम प्रस्थितः पृथिवीपतिः ॥८॥

दीक्षां श्रीवासुपूज्यान्ते ग्रहीतुं भावतो यतिः। गच्छंश्चम्पापुरीं ताभ्यां देवाभ्यां ददृशे पथि ॥९॥

---

२ इत आरभ्य प्रायः सर्वमपि सुभूमचक्रवर्तिकथानकमिदं त्रिषष्टिशलाकापुरुषचरिते षष्ठे पर्वणि समानप्रायं वर्तते ६।४।९-१०९॥

परीक्षाकाङ्क्षया ताभ्यां पानान्ने ढौकिते नृपः । तृषितः[1] क्षुधितोऽप्यौज्झद्धीराः सत्त्वाच्चलन्ति न ॥१०॥
क्रकचैरिव चक्राते क्रूरैः कर्कर-कण्टकैः । पीडां देवौ नृदेवस्य मृदुनोः पादपद्मयोः ॥११॥
पादाभ्यां प्रक्षरद्रक्तधाराभ्यां तादृशेऽध्वनि । तूलिकातलसञ्चारं संचेरे च तथापि सः ॥१२॥
निर्ममे गीत-नृत्तादि[2] ताभ्यां क्षोभाय भूपतेः । तन्मोघममवत्तत्र दिव्यास्त्रमिव गोत्रजे ॥१३॥
तौ सिद्धपुत्ररूपेण पुरोभूयेदमूचतुः[3] । तवाद्यापि महाभाग महदायुर्युवाऽसि च ॥१४॥
स्वच्छन्दं भुङ्क्ष्व तद् भोगान् का धीर्यद्यौवने तपः । निशीथकृत्यं कः प्रातः कुर्यादुद्योगवानपि ॥१५॥
यौवने तदतिक्रान्ते देहदौर्बल्यकारणम् । गृह्णीयास्त्वं तपस्तात द्वितीयमिव वार्द्धकम् ॥१६॥
राजोचे यदि बह्वायुर्बहु पुण्यं भविष्यति । जलमानेन नलिनीनालं[4] हि परिवर्द्धते ॥१७॥
लोलेन्द्रिये यौवने हि यत्तपस्तत्तपो ननु । दारुणास्त्रे रणे यो हि शूरः शूरः स उच्यते ॥१८॥
तस्मिन्नचलिते सत्त्वात् साधु साध्विति वादिनौ । तौ गतौ तापसोत्कृष्टं जमदग्निं परीक्षितुम् ॥१९॥
न्यग्रोधमिव विस्तारिजटासंस्पृष्टभूतलम् । वल्मीकाकीर्णपादान्तं दान्तं तौ तमपश्यताम् ॥२०॥
तस्य श्मश्रुलताजाले नीडं निर्माय मायया । तदैव देवौ चटकमिथुनीभूय तस्थतुः ॥२१॥



5

10

१ तृषितक्षुधितो शां. ॥ २ 'नृत्यादि मु. ॥ ३ पुरो भूत्वेद' खं. ॥ ४ नलिन्यः नालं खं. ॥

||२०८||

चटकश्चटकामूचे यास्यामि हिमवद्गिरौ। अन्यासक्तो नैष्यसि[1] त्वमिति तं नान्वमंस्त सा ॥२२॥
गोघातपातकेनाहं गृह्ये नायामि चेत् प्रिये। इत्युक्तशपथं भूयश्चटकं चटकाऽब्रवीत् ॥२३॥
ऋषेरस्यैनसा गृह्ये शपेथा इति चेत् प्रिय। विसृजामि तदैव त्वां पन्थानः सन्तु ते शिवाः ॥२४॥
इत्याकर्ण्य वचः क्रुद्धो जमदग्निमुनिस्ततः। उभाभ्यामपि हस्ताभ्याममुभौ जग्राह पक्षिणौ ॥२५॥
आचचक्षे ततो हन्त कुर्वाणे दुष्करं तपः। उष्णरश्माविव ध्वान्तमाः पापं मयि कीदृशम् ॥२६॥ 5
अथर्षिं चटकोवाच मा कुपस्ते मुधा तपः। अपुत्रस्य गतिर्नास्तीत्यश्रौषीस्त्वं न किं श्रुतिम् ॥२७॥
तत्तथा मन्यमानोऽयं मुनिरेवमचिन्तयत्। ममाकलत्रःपुत्रस्य प्रवाहे मूत्रितं तपः ॥२८॥
क्षुभितं तं परिज्ञाय धिग् भ्रान्तस्तापसैरिति। जज्ञे धन्वन्तरिः श्राद्धः, प्रत्येति प्रत्ययान्न कः ॥२९॥
बभूवतुरदृश्यौ च तावपि त्रिदशौ तदा। जमदग्निश्च[2] सम्प्राप पुरं नेमिककोष्टकम् ॥३०॥
जितशत्रुं महीपालं तत्र भूयिष्ठकन्यकम्। स प्रेप्सुः कन्यकामेकां दक्षं हर इवागमत् ॥३१॥ 10
कृत्वाभ्युत्थानमुर्वीशः प्राञ्जलिस्तमभाषत। किमर्थमागता यूयं ब्रूत किं करवाण्यहम् ॥३२॥
कन्यार्थमागतोऽस्मीति मुनिनोक्ते नृपोऽब्रवीत्। मध्ये शतस्य कन्यानां त्वां येच्छति गृहाण ताम् ॥३३॥
स कन्यान्तःपुरं गत्वा जगाद नृपकन्यकाः। धर्मपत्नी मम काचिद् भवतीभ्यो भवत्विति ॥३४॥

||२०९||

१ नेष्यसि खं. ॥ २ °ग्निस्तु खं. ॥

जटिलः पलितः क्षामो भिक्षाजीवो वदन्निदम् । न लज्जसे त्वमिति ताः कृतथूत्कारमूचिरे ॥३५॥
समीरण इव क्रुद्धो जमदग्निमुनिस्ततः । अधिज्येष्वासयष्ट्याभाः कन्याः कुब्जीचकार ताः ॥३६॥
अथाङ्गणे रेणुपुञ्जे रममाणां नृपात्मजाम् । एकामालोकयामास रेणुकेत्यब्रवीच्च ताम् ॥३७॥
स तस्या इच्छसीत्युक्त्वा मातुलिङ्गमदर्शयत् । तया प्रसारितः पाणिः पाणिग्रहणसूचकः ॥३८॥
तां मुनिः परिजग्राह रोरो धनमिवोरसा । सार्द्धं गवादिभिस्तस्मै ददौ च विधिवन्नृपः ॥३९॥ 5
स श्यालीस्नेहसम्बन्धादेकोनं कन्यकाशतम् । सज्जीचक्रे तपःशक्त्या धिग् मूढानां तपोव्ययः ॥४०॥
नीत्वाश्रमपदं तां च स [1]मुग्धमधुराकृतिम् । हरिणीमिव लोलाक्षीं प्रेम्णा मुनिरवर्द्धयत् ॥४१॥
अङ्गुलीभिर्गणयतो दिनान्यस्य तपस्विनः । यौवनं चारुकन्दर्पलीलावनमवाप सा ॥४२॥
साक्षीकृतज्वलदग्निर्जमदग्निमुनिस्ततः । यथावदुपयेमे तां भूतेश इव पार्वतीम् ॥४३॥
ऋतुकाले स ऊचे तां चरुं ते साधयाम्यहम् । यथा ब्राह्मणमूर्द्धन्यो धन्य उत्पद्यते सुतः ॥४४॥ 10
सोवाच [2]हास्तिनपुरेऽनन्तवीर्यस्य भूपतेः । पत्न्यस्ति मत्स्वसा तस्यै चरुः क्षात्रोऽपि साध्यताम् ॥४५॥
ब्राह्मं सधर्मचारिण्यै क्षात्रं तज्जामयेऽपरम् । स चरुं साधयामास पुत्रीयमुपजीवितुम् ॥४६॥
साचिन्तयदहं तावदभूवमटवीमृगी । मा भून्मादृक् सुतोऽपीति क्षात्रं चरुमभक्षयत् ॥४७॥

१ सुमुग्ध° खं. त्रिषष्टि० ६ । ४ । ४८ ॥ २ हस्तिन° खं. मु. ॥

साऽदाद् ब्राह्मं चरुं स्वस्रे जातौ च तनयौ तयोः । तत्र रामो रेणुकायाः कृतवीर्यश्च तत्स्वसुः ॥४८॥
क्रमेण ववृधे राम ऋषित्वे पैतृकेऽपि[1] सः । क्षात्रं प्रदर्शयंस्तेजो हुताशनमिवाम्भसि ॥४९॥
विद्याधरोऽन्यदा तत्र कोऽप्यागादतिसारकी । विद्या तस्यातिसारार्त्या विस्मृताकाशगामिनी ॥५०॥
रामेण प्रतिचरितो भेषजाद्यैः स बन्धुवत् । रामाय सेवमानाय विद्यां पारशवीं ददौ ॥५१॥
मध्येशरवणं गत्वा तां च विद्यामसाधयत् । रामः परशुरामोऽभूत् ततः प्रभृति विश्रुतः ॥५२॥ 5
अन्येद्युः पतिमापृच्छ्य रेणुकोत्कण्ठिता स्वसुः । जगाम हास्तिनपुरे प्रेम्णो दूरे न किञ्चन ॥५३॥
श्यालीति लालयन् लोललोचनां तत्र रेणुकाम् । अनन्तवीर्योऽरमयत् कामः कामं निरङ्कुशः ॥५४॥
ऋषिपत्न्या तया राजाऽहल्ययेव पुरन्दरः । अन्वभूच्च यथाकामं सम्भोगसुखसम्पदम् ॥५५॥
अनन्तवीर्यात्तनयो रेणुकायामजायत । ममतायामिवोतथ्यसधर्मिण्यां[2] बृहस्पतेः ॥५६॥
तेनापि सह पुत्रेण रेणुकामानयन्मुनिः । स्त्रीणां लुब्धो जनः प्रायो दोषं न खलु वीक्षते ॥५७॥ 10
तां पुत्रसहितां वल्लीमकालफलितामिव । सञ्जातकोपः परशुरामः परशुनाऽच्छिनत् ॥५८॥
तद्भगिन्या स वृत्तान्तोऽनन्तवीर्यस्य शंसितः । कोपमुद्दीपयामास कृशानुमिव मारुतः ॥५९॥
ततश्चावार्यदोर्वीर्योऽनन्तवीर्यो महीपतिः । जमदग्न्याश्रमं गत्वाभाङ्क्षीद् मत्त इव द्विपः ॥६०॥

१ पैत्रिके' शां. खं. ॥ २ 'तथ्यः सध' सं. मु. त्रिषष्टि० ६ । ४ । ६२ ॥

तापसानां कृतत्रासः समादाय गवादि सः। मन्दं मन्दं परिक्रामन् केसरीव न्यवर्त्तत ॥६१॥
त्रस्यत्तपस्वितुमुलं श्रुत्वा ज्ञात्वा च तां कथाम्। क्रुद्धः परशुरामोऽथाधावत् साक्षादिवान्तकः ॥६२॥
सुभटग्रामसंग्रामकौतुकी जमदग्निजः। पर्शुना खण्डशश्चक्रे दारुवद्दारुणेन तम् ॥६३॥
राज्ये निवेशयाञ्चक्रे तस्य प्रकृतिपुरुषैः। कृतवीर्यो महावीर्यः स एव तु वयोलघुः[1] ॥६४॥
स तु मातृमुखाच्छ्रुत्वा मृत्युव्यतिकरं पितुः। आदिष्टाहिरिवागत्य जमदग्निममारयत् ॥६५॥
रामः पितृवधक्रुद्धो द्राग् गत्वा हस्तिनापुरे। अमारयत् कृतवीर्यं किं यमस्य दवीयसि ॥६६॥
जामदग्न्यस्ततस्तस्य राज्ये न्यविशत स्वयम्। राज्यं हि विक्रमाधीनं न प्रमाणं क्रमाक्रमौ ॥६७॥
रामाक्रान्तपुराद् राज्ञी कृतवीर्यस्य गुर्विणी। व्याघ्राघ्रातवनादेणीवाऽगमत् तापसाश्रमम् ॥६८॥
कृपाधनैर्भूगृहान्तः सा निधाय निधानवत्। तपस्विभिर्गोप्यते स्म क्रूरात् परशुरामतः ॥६९॥
चतुर्दशमहास्वप्नसूचितोऽस्याः सुतोऽजनि। गृह्णन् भूमिं मुखेनाभूत्[2] सुभूमो नामतस्ततः ॥७०॥
क्षत्रियो यत्र यत्रासीत्तत्र तत्राप्यदीप्यत। पर्शुः परशुरामस्य कोपाग्निरिव मूर्त्तिमान् ॥७१॥
रामोऽगादन्यदा तत्राश्रमे पर्शुश्च सोऽज्वलत्। क्षत्रं चाश्रुचयद्धूम इव धूमध्वजं तदा ॥७२॥

१ नु वयो° खं.॥ २ सुखेना° मु. त्रिषष्टि० ६।४।७८। "धरणिमंडलं दाढाहिं गहितो समुट्ठिओ, तओ सुभूमो त्ति णामं कयं" चउप्पन्न० पृ० १६९॥

किमत्र क्षत्रियोऽस्तीति पृष्टास्तेन तपस्विनः । इत्यूचुस्तापसीभूताः क्षत्रिया वयमास्महे ॥७३॥
रामोऽप्यमर्षान्निःक्षत्रां सप्तकृत्वो वसुन्धराम् । निर्ममे निस्तृणां शैलतटीमिव दवानलः ॥७४॥
क्षुण्णक्षत्रियदंष्टाभी रामः स्थालमपूरयत् । यमस्य पूर्णकामस्य पूर्णपात्रश्रियं दधत् ॥७५॥
रामः पप्रच्छ नैमित्तानन्येद्युर्मे[1] कुतो वधः । सदा वैरायमाणा हि शङ्कन्ते परतो मृतिम् ॥७६॥
यो दंष्ट्राः पायसीभूताः सिंहासन इह स्थितः । भोक्ष्यतेऽमूस्ततस्त्यस्ते वधो भावीति तेऽब्रुवन् ।७७॥ 5
रामोऽथ कारयामास सत्रागारमवारितम् । धुरि सिंहासनं तत्रास्थापयत् स्थालमग्रतः ॥७८॥
अथाश्रमे प्रतिदिनं लालयद्भिस्तपस्विभिः । निन्येऽङ्गणद्रुम इव सुभूमो वृद्धिमद्भुताम् ॥७९॥
विद्याधरो मेघनादोऽन्येद्युर्नैमित्तिकानिति । परिपप्रच्छ पद्मश्रीः कन्या मे कस्य दीयताम् ॥८०॥
तस्या वरं वरीयांसं सुभूमं तेऽप्युपादिशन् । दत्त्वा कन्यां ततस्तस्मै तस्यैवाभूत् स सेवकः ॥८१॥
कूपभेक इवानन्यगोऽथ पप्रच्छ मातरम् । सुभूमः किमियानेव लोकोऽयमधिकोऽपि किम् ॥८२॥ 10
माताप्यचीकथदथो लोकोऽनन्तो हि वत्सक । मक्षिकापदमात्रं हि लोकमध्येऽयमाश्रमः ॥८३॥
अस्मिन् लोकेऽस्ति विख्यातं नगरं हस्तिनापुरम्[2] । पिता ते कृतवीर्योऽभूत्तत्र राजा महाभुजः ॥८४॥
हत्वा ते पितरं रामो राज्यं स्वयमशिश्रियत् । क्षितिं निःक्षत्रियां चक्रे तिष्ठामस्तद्भयादिह ॥८५॥

१ °नथान्येद्युः कुतो मम । वधो वैरायमाणा —शां. खं. च. ड. ॥ २ हस्तिनं पुरम् शां. ॥



॥२०९॥

तत्कालं हास्तिनपुरे सुभूमो भौमवज्ज्वलन् । जगाम वैरिणे क्रुद्धः क्षात्रं तेजो हि दुर्द्धरम् ॥८६॥
तत्र सत्रे ययौ सिंह इव सिंहासनेऽविशत् । दंष्ट्रास्ताः पायसीभूताः सुभुजो बुभुजे च सः ॥८७॥
उत्तिष्ठमाना युद्धाय ब्राह्मणास्तत्र रक्षकाः । जघ्निरे मेघनादेन व्याघ्रेण हरिणा इव ॥८८॥
प्रस्फुरद्दंष्ट्रिकाकेशो दशनैरधरं दशन् । ततो रामः क्रुधा कालपाशाकृष्ट इवाययौ ॥८९॥
रामेण मुमुचे रोषात् सुभूमाय परश्वधः । विध्यातस्तत्क्षणं तस्मिन् स्फुलिङ्ग इव वारिणि ॥९०॥
अस्त्राभावात् सुभूमोऽपि दंष्ट्रास्थालमुदक्षिपत् । चक्रीबभूव तत् सद्यः किं न स्यात् पुण्यसम्पदा ॥९१॥
चक्रवर्त्यष्टमः सोऽथ तेन चक्रेण भास्वता । शिरः परशुरामस्य पङ्कजच्छेदमच्छिदत् ॥९२॥
क्ष्मां निःक्षत्रियां रामः सप्तकृत्वो यथा व्यधात् । एकविंशतिकृत्वस्तां तथा निर्ब्राह्मणामसौ[1] ॥९३॥
क्षुण्णक्षितिपहस्त्यश्वपदातिव्यूढलोहितैः । वाहयन् वाहिनीर्नव्याः स प्राक् प्राचीमसाधयत् ॥९४॥
स च्छिन्नानेकसुभटमुण्डमण्डितभूतलः । दक्षिणाशां दक्षिणाशापतिरन्य इवाजयत् ॥९५॥
भटास्थिभिर्दन्तुरयन् शुक्ति-शङ्खैरिवाभितः । रोधो नीरनिधेः सोऽथ प्रतीचीमजयद्दिशम् ॥९६॥
हेलोद्घाटितवैताढ्यकन्दरः स्थाममन्दरः । म्लेच्छान् विजेतुं भरतोत्तरखण्डं विवेश सः ॥९७॥
उच्छलच्छोणितरसच्छटाच्छुरितभूतलः । म्लेच्छांस्तत्राथ सोऽभाङ्क्षीदिक्षूनिव महाकरी[2] ॥९८॥

१ निर्ब्राह्म' खं. ॥ २ महाकिरिः शां. खं. ॥



5

10

एवं चतुर्दिशं भ्राम्यन् घरट्टुश्रणकानिव । दलयन् सुभटानुर्वी स षट्खण्डामसाधयत् ॥९९॥
उज्जासयन्नसुमतामिति नित्यरौद्रध्यानानलेन सततं ज्वलदन्तरात्मा ।
आसाद्य कालपरिणामवशेन मृत्युं तां सप्तमीं नरकभूमिमगात् सुभूमः ॥१००॥

[ इति[1] सुभूमचक्रवर्तिकथानकम् ॥ ]

## अथ ब्रह्मदत्तकथा—

साकेतनगरे चन्द्रावतंसस्य सुतः पुरा । नामतो मुनिचन्द्रोऽभूच्चन्द्रवन्मधुराकृतिः ॥१॥ 
निर्विण्णः कामभोगेभ्यो भारेभ्य इव भारिकः । मुनेः सागरचन्द्रस्य पार्श्वे जग्राह स व्रतम् ॥२॥
प्रव्रज्यां जगतः पूज्यां पालयन्नयमन्यदा । देशान्तरे विहाराय चचाल गुरुणा सह ॥३॥
स तु भिक्षानिमित्तेन पथि ग्रामं प्रविष्टवान् । सार्थाद् भ्रष्टोऽटवीमाट यूथच्युत इवैणकः ॥४॥
स तत्र क्षुत्पिपासाभ्यामाक्रान्तो ग्लानिमागतः । चतुर्भिः प्रतिचरितो वल्लवैर्बान्धवैरिव ॥५॥
स तेषामुपकाराय निर्ममे धर्मदेशनाम् । अपकारिष्वपि कृपा सतां किं नोपकारिषु ॥६॥

१ [ ] एतदन्तर्गतः पाठो नास्ति शां. खं. । मुद्रिते दृश्यते ॥
२ प्रायः सर्वमिदं ब्रह्मदत्तचक्रिकथानकं त्रिषष्टिशलाकापुरुषचरिते नवमे पर्वणि प्रथमे सर्गे विद्यते, श्लो० २–४४८, ४६९, ४८९, ५११, ५७२–५९७ ॥

||२११||

प्रवव्रजुस्ते तत्पार्श्वे चत्वारः शमशालिनः। चतुर्विधस्य धर्मस्य चतस्र इव मूर्त्तयः ॥७॥
व्रतं तेऽपालयन् सम्यक् किन्तु द्वौ तत्र चक्रतुः। धर्मे जुगुप्सां चित्रा हि चित्तवृत्तिः शरीरिणाम् ॥८॥
जग्मतुस्तपसा तौ द्यां जुगुप्साकारिणावपि। स्वर्गाय जायतेऽवश्यमप्येकाहकृतं[1] तपः। ९॥
च्युत्वा ततो दशपुरे शाण्डिल्यब्राह्मणादुभौ[2][3]। युग्मरूपौ सुतौ दास्यां जयवत्यां बभूवतुः ॥१०॥
तौ क्रमाद्यौवनं प्राप्तौ पित्रादिष्टौ च जग्मतुः। रक्षितुं क्षेत्रमीदृग् हि दासेराणां नियोजनम् ॥११॥
तयोः शयितयोर्नक्तं निःसृत्य वटकोटरात्। एकः कृष्णाहिना दष्टः कृतान्तस्येव बन्धुना ॥१२॥
ततः सर्पोपलम्भाय द्वितीयोऽपि परिभ्रमन्। वैरादिवाशु तेनैव दष्टो दुष्टेन भोगिना ॥१३॥
तावनाप्तप्रतीकारौ वराकौ मृत्युमापतुः। यथाऽऽयातौ तथा यातौ निष्फलं जन्म धिक् तयोः १४॥
कालिञ्जरगिरिप्रस्थे मृग्या यमलरूपिणौ। मृगावजनिषातां तौ ववृधाते सहैव च ॥१५॥
प्रीत्या सह चरन्तौ तौ मृगौ मृगयुणा हतौ। बाणनैकेनैकेकालं कालधर्ममुपेयतुः ॥१६॥
ततोऽपि मृतगङ्गायां राजहंस्या उभावपि। अजायेतां सुतौ युग्मरूपिणौ पूर्वजन्मवत् ॥१७॥
क्रीडन्तावेकदेशस्थौ धृत्वा जालेन जालिकः। ग्रीवां भंक्त्वाऽवधीद्धर्म्महीनानां[4] हीदृशी गतिः ॥१८॥
वाराणस्यां ततोऽभूतां भूतदत्ताभिधस्य तौ। महाधनसमृद्धस्य मातङ्गाधिपतेः सुतौ ॥१९॥

---

१ °काहः कृतं मु.॥ २ संडिलब्रा° शां. खं.॥ ३ °णावुभौ —प्रतिषु पाठः॥ ४ भक्त्वा शां. खं.॥

चित्र-सम्भूतनामानौ तौ मिथः स्नेहशालिनौ। न कदापि व्ययुज्येतां सम्बद्धौ नख-मांसवत् ॥२०॥
वाराणस्यां तदा चाभूच्छङ्ख इत्यवनीपतिः। आसीच्च सचिवस्तस्य नमुचिर्नाम विश्रुतः ॥२१॥
अपरेद्युः सोऽपराधे महीयसि महीभुजा। अर्पितो भूतदत्तस्य प्रच्छन्नवधहेतवे ॥२२॥
तेनोचे नमुचिश्छन्नं त्वां रक्षामि निजात्मवत्। पाठयस्यात्मजौ मे त्वं यदि भूमिगृहस्थितः ॥२३॥
प्रतिपन्नं नमुचिना तन्मातङ्गपतेर्वचः। जनो हि जीवितव्यार्थी तन्नास्ति न करोति यत् ॥२४॥ 5
विचित्राश्चित्रसम्भूतौ स तथाऽध्यापयत् कलाः। रेमेऽनुरक्तया सार्द्धं मातङ्गपतिभार्यया ॥२५॥
ज्ञात्वा तद् भूतदत्तेनारेभे मारयितुं स तु। सहते कः स्वदारेषु पारदारिकविप्लवम् ॥२६॥
ज्ञात्वा मातङ्गपुत्राभ्यां स दूरेणापसारितः। सैवास्मै दक्षिणा दत्ता प्राणरक्षणलक्षणा ॥२७॥
ततो निःसृत्य नमुचिर्गतवान् हस्तिनापुरे। चक्रे सनत्कुमारेण सचिवश्चक्रिणा निजः ॥२८॥
इतश्च चित्रसम्भूतौ बभतुर्नवयौवनौ। कुतोऽपि हेतोरायातौ पृथिव्यामाश्विनाविव ॥२९॥ 10
तौ स्वादु जगतुर्गीतं हाहा-हूहूपहासिनौ। वादयामासतुर्वीणाम[1]तितुम्बुरु-नारदौ ॥३०॥
गीतप्रबन्धानुगतैः सुव्यक्तैः सप्तभिः स्वरैः। तयोर्वादयतोर्वेणुं किंकरन्ति स्म[2] किन्नराः ॥३१॥
मुरजं धीरघोषं तौ वादयन्तौ च चक्रतुः। गृहीतमुरकंकालातोद्यकृष्णविडम्बनाम् ॥३२॥ 

---
१ °मपि तु° खं.॥ २ °नम् खं.॥

शिवः शिवोर्वशी रम्भा मुञ्जकेशी तिलोत्तमा[1]। यन्नाट्यं न विदाञ्चक्रुस्तौ तदप्यभिनिन्यतुः ॥३३॥
सर्वगान्धर्वसर्वस्वमपूर्वं विश्वकार्म्मणम्। प्रकाशयद्भ्यामेताभ्यां न जह्रे कस्य मानसम् ॥३४॥
तस्यां पुरि प्रवृत्ते कदाचिन्मदनोत्सवः। निरीयुः पौरचर्च्चर्य[2]स्तत्र संगीतपेशलाः[3] ॥३५॥
[4]चर्चरी निर्ययौ तत्र चित्र-सम्भूतयोरपि। जग्मुस्तत्रैव तद्गीताकृष्टाः पौरा मृगा इव ॥३६॥
राज्ञो व्यज्ञपि[5] केनापि मातङ्गाभ्यां पुरीजनः। गीतेनाकृष्य सर्वोऽयमात्मवन्मलिनः कृतः ॥३७॥
क्षमापेनापि पुराध्यक्षः साक्षेपमिदमाज्ञपि। न प्रवेशः प्रदातव्यो नगर्यामनयोः क्वचित् ॥३८॥ 5
ततः प्रभृति तौ वाराणस्या दूरेण तस्थतुः। प्रवृत्तश्चैकदा तत्र कौमुदीपरमोत्सवः ॥३९॥
राजशासनमुल्लङ्घ्य लोलेन्द्रियतया च तौ। प्रविष्टौ नगरीं भृङ्गौ गजगण्डतटीमिव ॥४०॥
उत्सवं प्रेक्षमाणौ तौ सर्वाङ्गीणावगुण्ठनौ। दस्युवन्नगरीमध्ये छन्नं छन्नं[6] विचेरतुः ॥४१॥
क्रोष्टुवत् क्रोष्टुशब्देन पौरगीतेन तौ ततः। अगायतां तारतारमलङ्घ्या भवितव्यता ॥४२॥
आकर्ण्य कर्णमधुरं तद्गीतं युवनागरैः। मधुवन्मक्षिकाभिस्तौ मातङ्गौ परिवारितौ ॥४३॥ 10

---

१ °त्तमाः मु. ॥ २ चर्च्चर्य° खं. ॥ ३ °सलाः शां. खं. ॥ ४ चर्च्चरी खं. ॥ ५ विज्ञपि शां. खं. ॥
६ छन्नच्छन्नं खं. ॥

का[1]वेताविति विज्ञातुं लोकैः कृष्टावगुण्ठनौ । अरे तावेव मातङ्गावित्याक्षेपेण भाषितौ ॥४४॥
नागरैः कुट्यमानौ तौ यष्टिभिर्लोष्टुभिस्ततः । श्वानाविव गृहात् पुर्या[2] नतग्रीवौ निरीयतुः ॥४५॥
तौ सैन्यशशवल्लोकैर्हन्यमानौ पदे पदे । स्खलत्पादौ कथमपि गम्भीरोद्यानमीयतुः ॥४६॥
तावचिन्तयतामेवं धिग् नौ दुर्जाति[3]दूषितम् । कलाकौशल-रूपादि पयो प्रातमिवाहिना ॥४७॥
उपकारो गुणैरास्तामपकारोऽयमावयोः । तदिदं क्रियमाणायाः शान्तेर्वेताल उत्थितः ॥४८॥ 5
कला-लावण्य-रूपाणि स्यूतानि वपुषा सह । तदेवानर्थसदनं तृणवत्त्यज्यतां क्वचित्[4] ॥४९॥
इति निश्चित्य तौ प्राणप[5]रिहाणपरायणौ । मृत्युं साक्षादिव द्रष्टुं चेलतुर्दक्षिणामभि ॥५०॥
ततो दूरं प्रयातौ तौ गिरिमेकमपश्यताम् । यत्रारूढैर्भुवीक्ष्यन्ते करिणः किरिपोतवत् ॥५१॥
भृगुपातेच्छया ताभ्यामारोहद्भ्यां महामुनिः । ददृशे पर्वते तस्मिन् जङ्गमो गुणपर्वतः ॥५२॥
प्रावृषेण्यमिवाम्भोदं मुनिं गिरिशिरःस्थितम् । दृष्ट्वा प्रणष्टसन्तापप्रसरौ तौ बभूवतुः ॥५३॥ 10
तौ प्राग्दुःखमिवोज्झन्तावानन्दाश्रुजलच्छलात् । तत्पादपद्मयोर्भृङ्गाविव सद्यो निपेततुः ॥५४॥
समाप्य मुनिना ध्यानं कौ युवां किमिहागतौ । इति पृष्टौ स्ववृत्तान्तं तावशेषमशंसताम् ॥५५॥

१ तावेताविति शां. खं. ॥ २ पुर्या॑-प्रतिषु ॥ ३ दुर्जाति॑ ख. ग. च. ङ. ॥ ४ क्षणात् मु. ॥ ५ परिहारप॑ मु. ॥

॥२१५॥

स ऊचे भृगुपातेन वपुरेव हि शीर्यते। शीर्यते नाशुभं[1] कर्म जन्मान्तरशतार्जितम् ॥५६॥

त्याज्यं वपुरिदं वां[2] चेद् गृह्णीतं वपुषः फलम्। तच्चापवर्ग-स्वर्गादिकारणं परमं तपः ॥५७॥

इत्यादिदेशनावाक्यसुधानिर्धौतमानसौ। तस्य पार्श्वे जगृहतुर्यतिधर्ममुभावपि ॥५८॥

अधीयानौ क्रमेणाथ तौ गीतार्थौ बभूवतुः। आदरेण गृहीतं हि किं वा न स्यान्मनस्विनाम् ॥५९॥

षष्ठाष्टमप्रभृतिभिस्तौ तपोभिः सुदुस्तपैः। क्रशयामासतुर्देहं प्राक्तनैः कर्मभिः सह ॥६०॥ 5

ततो विहरमाणौ तौ ग्रामाद् ग्रामं पुरात् पुरम्। कदाचित् प्रतिपेदाते नगरं हस्तिनापुरम् ॥६१॥

तौ तत्र बहिरुद्याने[3] चेरतुर्दुश्चरं तपः। सम्भोगभूमयोऽपि स्युस्तपसे शान्तचेतसाम् ॥६२॥

सम्भूतमुनिरन्येद्युर्मासक्षपणपारणे। पुरे प्रविष्टो भिक्षार्थं यतिधर्मोऽङ्गवानिव ॥६३॥

गेहाद् गेहं परिभ्राम्यन्नीर्यासमितिपूर्वकम्। स राजमार्गापतितो दृष्टो नमुचिमन्त्रिणा ॥६४॥

मातङ्गदारकः सोऽयं मद्वृत्तं ख्यापयिष्यति। मन्त्रीति चिन्तयामास पापाः सर्वत्र शङ्किताः ॥६५॥ 10

यावन्मन्मर्म कस्यापि प्रकाशयति न ह्यसौ। तावन्निर्वासयाम्येनमिति पत्तीन् न्ययुङ्क्त सः ॥६६॥

स ताडयितुमारेभे तेन पूर्वोपकार्यपि। क्षीरपाण[4]मिवाहीनामुपकारोऽसतां यतः ॥६७॥

---

१ नाशुभं प्राणिनां कर्म-शां. ॥ २ यच्चेद् गृह्णीत शां. खं. ॥ ३ रुचिरोद्याने मु. ॥ ४ क्षीरपा° शां. ॥

लकुटैः कुट्यमानोऽसौ सस्यबीजमिवोत्कटैः । स्थानात्ततोऽपचक्राम त्वरितं[1] त्वरितं मुनिः ॥६८॥
अमुच्यमानः कुट्टाकैर्निर्यन्नपि मुनिस्तदा । शान्तोऽप्यकुप्यदापोऽपि तप्यन्ते वह्नितापतः ॥६९॥
निर्जगाम मुखात्तस्य बाष्पोत्पीलः[2] समन्ततः । अकालोपस्थिताम्भोदविभ्रमं बिभ्रदम्बरे ॥७०॥
तेजोलेश्योल्लसाथ ज्वालापटलमालिनी । तडिन्मण्डलसङ्कीर्णामिव द्यामभितन्वती ॥७१॥
अतिविष्णुकुमारं तं तेजोलेश्याधरं ततः । प्रसादयितुमाजग्मुः पौराः सदयकौतुकाः ॥७२॥
राजा सनत्कुमारोऽपि ज्ञात्वा तत्र समाययौ । उत्तिष्ठति यतो वह्निस्तद्धि विध्यापयेत् सुधीः ॥७३॥
नत्वोचे तं नृपः किं वो युज्यते भगवन्निदम् । चन्द्राश्माऽर्कांशुतप्तोऽपि नार्चिर्मुञ्चति जातुचित् ॥७४॥
एभिरत्यपराद्धं यत् कोपोऽयं भवतामपि[3] । क्षीराब्धेर्मथ्यमानस्य कालकूटमभून्न किम् ॥७५॥
न स्यात् स्याच्चेच्चिरं[4] न स्याच्चिरं चेत्तत्फलेऽन्यथा । खलस्नेह इव क्रोधः सतां तद् ब्रूमहेऽत्र किम् ॥७६॥
तथापि नाथ नाथामि कोपं मुञ्चेतरोचितम् । भवादृशाः समदृशो ह्यपकार्य्युपकारिषु ॥७७॥
चित्रोऽप्यत्रान्तरे ज्ञात्वा सम्भूतमुनिमभ्यगात्[5] । सान्त्वयितुं भद्रमिव द्विपं मधुरभाषितैः ॥७८॥

१ त्वरितत्वरितं ख. त्रिषष्टि० ९ । १ । ६९ ॥ २ बाष्पो नीलः मु. । बाष्पोत्पीडं त्रिषष्टि० ९ । १ । ७१ ॥
३ भवतामतः मु. त्रिषष्टि० ९ । १ । ७६ ॥ ४ स्याच्चेन्न चिरं स्याच्चिरं खं ॥ ५ सम्भूति° खं. ॥



5

10

॥२१७॥

तस्य कोप उपाशाम्यच्चित्रवाक्यैः श्रुतानुगैः । पयोवाहपयःपूरैर्गिरेरिव दवानलः ॥७९॥
महाकोपतमोमुक्तः[1] शशाङ्क इव पार्वणः । क्षणादासादयामास प्रसादं स महामुनिः ॥८०॥
वन्दित्वा क्षमयित्वा च लोकस्तस्माद् न्यवर्त्तत । सम्भूतश्चित्रमुनिना तदुद्यानमनीयत ॥८१॥
पश्चात्तापं चक्रतुस्तौ पर्यटद्भिर्गृहे गृहे । आहारमात्रककृते प्राप्यते व्यसनं महत् ॥८२॥
शरीरं गत्वरमिदं[2] ह्याहारेणापि पोषितम् । किमनेन शरीरेण किं वाहारेण योगिनाम् ॥८३॥
चेतसीति[3] विनिश्चित्य कृतसंलेखनौ पुरा । उभौ चतुर्विधाहारप्रत्याख्यानं प्रचक्रतुः ॥८४॥
कः पराभूतवान् साधुं वसुधां पाति मय्यपि । इति जिज्ञासतो राज्ञो मन्त्री व्यज्ञपि केनचित् ॥८५॥
अर्च्यान्नार्चति यः सोऽपि पापः किमुत हन्ति यः । इत्यानाययदुर्वीशो दस्युवत् संयमय्य तम् ॥८६॥
अन्योऽपि साधुविध्वंसं मा विधादिति शुद्धधीः । तं बद्धं पुरमध्येन सोऽनैषीत्साधुसन्निधौ ॥८७॥
नमन्नृपशिरोरत्नभाभिरम्भोमयीमिव । कुर्वन्नुर्वीं स उर्वीशपुङ्गवस्ताववन्दत ॥८८॥
सव्यपाणिगृहीतास्यवस्त्रिकापिहिताननौ । उद्दक्षिणकरौ तौ तमाशशंसतुराशिषा ॥८९॥
यो वोऽपराधवान् सोऽस्तु स्वकर्मफलभाजनम्[4] । राज्ञा सनत्कुमारेणेत्यदर्शि नमुचिस्तयोः ॥९०॥

---

१ तीव्रकोप° खं. ग. च. ङ. त्रिषष्टि० ९ । १ । ८१ ॥ २ °मिदमाहा० खं. ॥ ३ चेतसेति खं त्रिषष्टि० ९ । १ । ८५ ॥
४ °फलभागसौ क. छ. ॥

अमोचि नमुचिः प्राप्तः पञ्चत्वोचितभूमिकाम् । सनत्कुमारतस्ताभ्यामुरगो गरुडादिव ॥९१॥
निर्वास्य कर्मचण्डालश्चण्डाल इव पत्तनात् । वध्योऽप्यमोच्यसौ राज्ञा मान्यं हि गुरुशासनम् ॥९२॥
सपत्नीभिश्चतुःषष्टिसहस्रैः परिवारिता । वन्दितुं तौ सुनन्दाऽऽगात् स्त्रीरत्नमथ चक्रिणः ॥९३॥
सा सम्भूतमुनेः पादपद्मयोर्लुलितालका । पपातास्येन कुर्वाणा भुवमिन्दुमतीमिव ॥९४॥
तस्याश्चाऽलकसंस्पर्शं सम्भूतमुनिरन्वभूत् । रोमाञ्चितश्च सद्योऽभूच्छलान्वेषी हि मन्मथः ॥९५॥ 5
अथ सान्तःपुरे राज्ञि तावनुज्ञाप्य जग्मुषि । रागाभिभूतः सम्भूतो निदानमिति निर्ममे ॥९६॥
दुष्करस्य मदीयस्य यद्यस्ति तपसः फलम् । तत् स्त्रीरत्नपतिरहं भूयासं भाविजन्मनि ॥९७॥
चित्रोऽप्यूचे काङ्क्षसीदं मोक्षदात् तपसः फलम् । मौलियोग्येन रत्नेन पादपीठं करोषि किम् ॥९८॥
मोहात् कृतं तन्निदानमिदानीमपि मुच्यताम् । मिथ्यादुष्कृतमस्याऽस्तु मुह्यन्ति न मवादृशाः ॥९९॥
एवं निवार्यमाणोऽपि सम्भूतश्चित्रसाधुना । निदानं नामुचदहो विषयेच्छा बलीयसी ॥१००॥ 10
निर्व्यूढानशनौ तौ तु प्राप्तायुःकर्मसंक्षयौ । सौधर्मे समजायेतां विमाने सुन्दरे सुरौ ॥१०१॥
च्युत्वा जीवोऽथ चित्रस्य प्रथमस्वर्गलोकतः । पुरे पुरिमतालाख्ये महेभ्यतनयोऽभवत् ॥१०२॥
च्युत्वा सम्भूतजीवोऽपि काम्पिल्ये ब्रह्मभूपतेः । भार्यायाश्चुलनीदेव्याः कुक्षौ समवतीर्णवान् ॥१०३॥
चतुर्दशमहास्वप्नसूचितागामिवैभवः । अथ जज्ञे सुतस्तस्याः प्राच्या इव दिवाकरः ॥१०४॥

ब्रह्मेव इवानन्दाद् ब्रह्मभूपतिरस्य च। ब्रह्माण्डविश्रुतां ब्रह्मदत्त इत्यभिधां व्यधात् ॥१०५॥
ववृधे स जगन्नेत्रकुमुदानां मुदं दिशन्। पुष्यन् कलाकलापेन कलानिधिरिवामलः ॥१०६॥
वक्त्राणि ब्रह्मण इव चत्वारि ब्रह्मणोऽभवन्। प्रियमित्राणि तत्रैकः कटकः काशिभूपतिः ॥१०७॥
कणेरुदत्तसंज्ञोऽन्यो हस्तिनापुरनायकः। दीर्घश्च कोशलाधीशश्चम्पेशः पुष्पचूलकः[1] ॥१०८॥
ते स्नेहाद्वर्षमेकैकमेकैकस्य पुरं युताः। पश्चाप्यधिवसन्ति स्म स्वर्द्रुमा इव नन्दनम् ॥१०९॥
ब्रह्मणो नगरेऽन्येद्युस्ते यथायोगमाययुः। तत्र च क्रीडतां तेषां ययौ कालः कियानपि ॥११०॥
ब्रह्मदत्तस्य पूर्णेषु वर्षेषु द्वादशस्वथ[2]। परलोकगतिं भेजे ब्रह्मराजः शिरोरुजा ॥१११॥
कृत्वौर्द्ध्वदेहिकं ब्रह्मभूपतेः कटकादयः। उपाया इव मूर्त्तास्ते चत्वारोऽमन्त्रयन्निति ॥११२॥
ब्रह्मदत्तः शिशुर्यावदेकैकस्तावदत्र नः। तस्य प्राहरिक इव वर्षे वर्षेऽस्तु रक्षकः ॥११३॥
दीर्घस्तातुं सुहृद्राज्यं तैः संयुज्य न्ययुज्यत। ततः स्थानाद्यथास्थानमथ जग्मुस्त्रयोऽपि ते ॥११४॥
अदीर्घबुद्धिर्दीर्घोऽपि ब्रह्मणो राज्यसम्पदम्। उक्षेवाऽरक्षकं क्षेत्रं स्वच्छन्दं बुभुजे ततः ॥११५॥
निरङ्कुशतया कोशं चिरगूढं स मूढधीः। सर्वमन्वेषयामास परमर्मेव दुर्जनः ॥११६॥
स प्राक्परिचयादन्तरन्तःपुरमनर्गलः। सञ्चाराधिपत्यं हि प्रायोऽन्धंकरणं नृणाम् ॥११७॥

1 कोसला° ख. ॥  2 द्वादशेष्वथ मु. ॥

एकान्ते चुलनीदेव्या सोऽतिमात्रममन्त्रयत्। वचोभिर्नर्म्मनिपुणैर्नुदन् स्मरशरैरिव ॥११८॥
आचारं ब्रह्मसुकृतं लोकं चावगणय्य सः। संप्रसक्तश्चुलन्याऽभूद् दुर्वाराणीन्द्रियाणि हि ॥११९॥
ब्रह्मराजे पतिप्रेम मित्रस्नेहं च तावुभौ। जहतुश्चूलनीदीर्घावहो सर्वङ्कषः स्मरः ॥१२०॥
सुखं विलसतोरेवं यथाकामीनयोस्तयोः। बहवो व्यतियान्ति स्म मुहूर्त्तमिव वासराः ॥१२१॥
ब्रह्मराजस्य हृदयं द्वैतीयीकमिव स्थितम्। मन्त्र्यज्ञासीद् धनुरिदं स्पष्टं दुश्चेष्टितं तयोः ॥१२२॥ 5
सचिवोऽचिन्तयच्चेदं चुलनी स्त्रीस्वभावतः। अकार्यमाचरत्वेषा सत्यो हि विरलाः स्त्रियः ॥१२३॥
सकोशान्तःपुरं राज्यं न्यासे विश्वासतोऽर्पितम्। यद्विद्रवति दीर्घस्तदकार्यं नास्य किञ्चन ॥१२४॥
तदसावाचरेत् किञ्चित् कुमारस्यापि विप्रियम्। पोषकस्यापि नात्मीयो मार्जार इव दुर्जनः ॥१२५॥
विमृश्येति वरधनुसंज्ञं[1] स्वसुतमादिशत्। तत्तज् ज्ञापयितुं नित्यं ब्रह्मदत्तं च सेवितुम् ॥१२६॥
विज्ञप्ते मन्त्रिपुत्रेण वृत्तान्ते ब्रह्मनन्दनः। शनैः प्राकाशयत् कोपं नवोद्भिन्न इव द्विपः ॥१२७॥ 10
ब्रह्मदत्तोऽसहिष्णुस्तन्मातृदुश्चरितं ततः। मध्ये शुद्धान्तमगमद् गृहीत्वा काक-कोकिले ॥१२८॥
वर्णसङ्करतो वध्यावेतावन्यमपीदृशम्। निश्चितं निग्रहीष्यामि तत्रेत्युच्चैरुवाच सः ॥१२९॥
काकोऽहं त्वं पिकीत्यावां निजिघृक्षत्यसाविति। दीर्घेणोक्तेऽवदद्देवी मा भैषीर्बालभाषितात् ॥१३०॥

१ वरधनुःसंज्ञ शां. ॥



॥२२१॥

एकदा भद्रवशया सह नीत्वा मृगद्विपम् । साक्षेपं तद्ददेवोचे कुमारो मारसूचकम् ॥१३१॥
इति श्रुत्वाऽवदद् दीर्घः साकूतं बालभाषितम् । ततश्चुलन्युवाचेति यद्यस्त्येवं ततोऽपि किम् ॥१३२॥
हंस्याऽन्येद्युर्बकं बद्ध्वाभ्यधत्त ब्रह्मसूरिति । अनया रमते ह्येष सहे कस्यापि नेदृशम् ॥१३३॥
दीर्घोऽवादीदिदं देवि स्वपुत्रस्य शिशोः शृणु । अन्तरुद्भिन्नरोषाग्निधूमोद्गारोपमा गिरः ॥१३४॥
वर्द्धमानः कुमारोऽयं तदवश्यं भविष्यति । आवयोरतिविघ्नाय करेण्वोरिव केसरी ॥१३५॥ 5
न यावत् कवचहरः कुमारो हन्त जायते । तावद्विषद्रुम इव बालोऽप्युन्मूल्यतामसौ ॥१३६॥
चुलन्यूचे कथं राज्यधरः पुत्रो विहन्यते । तिरश्चोऽपि हि रक्षन्ति पुत्रान् प्राणानिवात्मनः ॥१३७॥
दीर्घोऽब्रवीत् पुत्रमूर्त्या तव कालोऽयमागतः । मा मुहस्त्वं मयि सति सुतास्तव न दुर्लभाः ॥१३८॥
विमुच्यापत्यवात्सल्यं शाकिनीव चुलन्यथ । रतस्नेहपरवशा प्रतिशुश्राव तत्तथा ॥१३९॥
साऽमन्त्रयद् विनाश्योऽयं रक्ष्या च वचनीयता । यद्वदाम्रवणं सेक्यं कार्यं च पितृतर्पणम् ॥१४०॥ 10
क उपायोऽथवास्त्येष विवाह्यो ब्रह्मसूरसौ । वासागारमिषात् तस्य कार्यं जतुगृहं ततः ॥१४१॥
गूढप्रवेशनिःसारे[1] तत्रोद्वाहादनन्तरम् । सुषुप्ते सस्नुपेऽप्यस्मिन् ज्वाल्यो निशि हुताशनः ॥१४२॥
उभाभ्यां मन्त्रयित्वैवं पुष्पचूलस्य कन्यका । वृता वैवाहिकी सर्वसामग्री चोपचक्रमे ॥१४३॥

१ कूटप्रवेश° खं. ॥

तयोश्च क्रूरमाकूतं विज्ञाय सचिवो धनुः । इति विज्ञपयामास दीर्घराजं कृताञ्जलिः ॥१४४॥
कलाविन्नीतिकुशलः सूनुर्वरधनुर्मम । वहंलिहयुवेवाऽस्तु त्वदाज्ञारथधूर्वहः ॥१४५॥
जरद्गव इवाहं तु यातायातेषु निःसहः । गत्वा क्वचिदनुष्ठानं करोमि त्वदनुज्ञया ॥१४६॥
कमप्यनर्थं कुर्वीत मायाव्येष गतोऽन्यतः । आशङ्कतेति तं दीर्घो धीमद्भ्यः को न शङ्कते ॥१४७॥
मायाकृतावहित्थोऽथ दीर्घः सचिवमूचिवान् । राज्येन त्वां विना नः किं यामिन्येव विना विधुम् ॥१४८॥ 5
धर्मं सत्रादिनाऽत्रैव कुरु मा गास्त्वमन्यतः । राज्यं भवादृशैर्भाति सद्वृक्षैरिव काननम् ॥१४९॥
ततो भागीरथीतीरे सद्बुद्धिर्विदधे धनुः । धर्मस्येव महाच्छत्रं पवित्रं सत्रमण्डपम् ॥१५०॥
सत्रं च पान्थसार्थानामन्नपानादिना ततः । प्रवाहमिव गाङ्गं सोऽनवच्छिन्नमवाहयत् ॥१५१॥
दानमानोपकाराद्यैः स प्रत्ययितपूरुषैः । चक्रे सुरङ्गां द्विक्रोशां ततो जतुगृहावधि ॥१५२॥
इतः प्रच्छन्नलेखेन सौहार्दद्रुमवारिणा । इमं व्यतिकरं पुष्पचूलमज्ञापयद्धनुः ॥१५३॥ 10
ज्ञात्वा तत् पुष्पचूलोऽपि सुधीः स्वदुहितुः पदे । प्रेषयामास दासेरीं हंसीस्थाने बकीमिव ॥१५४॥
पित्तले च स्वर्णमिति पौष्पचूलीति सा जनैः । लक्षिता भूषणमणिद्योतिताशाऽविशत् पुरीम् ॥१५५॥
मूर्च्छद्गीति-ध्वनतूर्य[1]पूर्यमाणे नभस्तले । मुदा तां चुलनी ब्रह्मसूनुना पर्यणाययत् ॥१५६॥

॥२२३॥

---
१ °ध्वनितूर्य° शां. मु.॥

चुलन्यप्यखिलं लोकं विसृज्य रजनीमुखे। कुमारं सस्नुषं प्रैषीज्जातुषे वासवेश्मनि ॥१५७॥
सवधूकः कुमारोऽपि विसृष्टान्यपरिच्छदः। तत्रागाद्वरधनुना छाययेव स्वया सह ॥१५८॥
वार्त्ताभिर्मन्त्रिपुत्रेण ब्रह्मदत्तस्य जाग्रतः। निशार्द्धं व्यतिचक्राम कुतो निद्रा महात्मनाम् ॥१५९॥
चुलन्यादिष्टपुरुषैः फूत्कर्तुं नमिताननैः। ज्वलेति प्रेरित इव वासगेहेऽ[1]ज्वलच्छिखी ॥१६०॥
धूमस्तोमस्ततो विष्वक् पूरयामास रोदसीम्। चुलनीदीर्घदुष्कृत्यदुष्कीर्त्तिप्रसरोपमः ॥१६१॥
सप्तजिह्वोऽप्यभूत् कोटिजिह्वो ज्वालाकदम्बकैः। तत् सर्वं कवलीकर्तुं बुभुक्षित इवानलः ॥१६२॥
किमेतदिति संपृष्टो ब्रह्मदत्तेन मन्त्रिभूः। संक्षेपादाचचक्षेऽदश्चुलनीदुष्टचेष्टितम् ॥१६३॥
आकष्टुं त्वामितः स्थानाद्रूपं करिकरादिव। अस्ति तातेन दत्तेह सुरङ्गा[2] सत्रगामिनी ॥१६४॥
अत्र पार्ष्णिप्रहारेण प्रकाशीकृत्य तत्क्षणात्। योगीव विवरद्वारं तद्द्वारं प्रविशाधुना ॥१६५॥
आतोद्यपुटवत् सोऽथ पार्ष्णिनाऽऽस्फोट्य भूपुटम्। सुरङ्गया[3] समित्रोऽगाद् रत्नरन्ध्रेण सूत्रवत् ॥१६६॥
सुरङ्गान्ते धनुभृतौ तुरङ्गावध्यरोहताम्। राजमन्त्रिकुमारौ तौ रेवन्तश्रीविडम्बकौ ॥१६७॥
पञ्चाशद्योजनीं क्रोशमिव पञ्चमधारया। अश्वौ जग्मतुरुच्छ्वासौ ततः पञ्चत्वमापतुः ॥१६८॥
ततस्तौ पादचारेण प्राणत्राणपरायणौ। जग्मतुर्निकषा ग्रामं कृच्छात् कोष्टकनामकम्[4] ॥१६९॥

१ वासगृहे मु. ॥ २ सुरुंगा खं. ॥ ३ सुरुंगया खं. ॥ ४ कोष्टक° मु. ॥

प्रोवाच ब्रह्मदत्तोऽथ सखे वरधनोऽधुना। स्पर्द्धमाने इवान्योन्यं बाधेते क्षुत्तृषा च माम् ॥१७०॥
क्षणमत्र प्रतीक्षस्वेत्युक्त्वा तं मन्त्रिनन्दनः। ग्रामादाकारयामास नापितं वपनेच्छया ॥१७१॥
मन्त्रिपुत्रस्य मन्त्रेण तत्रैव ब्रह्मनन्दनः। वपनं कारयामास चूलामात्रमधारयत् ॥१७२॥
तथा कषायवस्त्राणि पवित्राणि स धारयन्। सन्ध्याभ्रच्छन्नबालांशुमालिलीलामधारयत् ॥१७३॥
कण्ठे वरधनुन्यस्तं ब्रह्मसूत्रमधत्त च। ब्रह्मपुत्रो ब्रह्मपुत्रसादृश्यमुदुवाह च ॥१७४॥
मन्त्रिसूर्ब्रह्मदत्तस्य वक्षः श्रीवत्सलाञ्छितम्। पट्टेन पिदधे प्रावृट् पयोदेनेव भास्करम् ॥१७५॥
एवं वेषपरावर्त्तं ब्रह्मसूः सूत्रधारवत्। पारिपार्श्विकवन्मन्त्रिपुत्रोऽपि विदधे तथा ॥१७६॥
ततः प्रविष्टौ ग्रामे तौ पर्वणीवेन्दु-भास्करौ[1]। केनापि द्विजवर्येण भोजनाय निमन्त्रितौ ॥१७७॥
सोऽथ तौ भोजयामास भक्त्या राजानुरूपया। प्रायस्तेजोऽनुमानेन जायन्ते प्रतिपत्तयः ॥१७८॥
कुमारस्याक्षतान् मूर्ध्नि क्षिपन्ती विप्रगेहिनी। श्वेतवस्त्रयुगं कन्यां चोपनिन्येऽप्सरःसमाम् ॥१७९॥
ऊचे ततो वरधनुर्बटोरस्याऽकलापटोः। कण्ठे बध्नासि किमिमां मूढे शण्डस्य गामिव ॥१८०॥
ततो द्विजवरेणोचे ममेयं गुणबन्धुरा। कन्या बन्धुमती नास्या विनाऽमुमपरो वरः ॥१८१॥
षट्खण्डपृथिवीपाता पातिरस्या भविष्यति। इत्याख्यायि निमित्तज्ञैर्निश्चितं चायमेव सः ॥१८२॥

१ पार्वणाविन्दु° मु. त्रिषष्टि० ९। १। १७८॥



॥२२५॥

तैरेवाख्यायि मे पट्टच्छन्नश्रीवत्सलाञ्छनः। भोक्ष्यते यस्तव गृहे तस्मै देया स्वकन्यका ॥१८३॥
जज्ञे च ब्रह्मदत्तस्योद्वाहः सह तया तदा। भोगिनामुपतिष्ठन्ते भोगाः काममचिन्तिताः ॥१८४॥
तामुषित्वा निशां बन्धुमतीमाश्वास्य चान्यतः। ययौ कुमार एकत्रावस्थानं सद्विषां कुतः ॥१८५॥
प्रान्तग्रामं[1] प्रापतुस्तौ तत्र चाश्रृणुतामिदम्। पन्थानोऽधिब्रह्मदत्तं सर्वे दीर्घेण रोधिताः ॥१८६॥
प्रस्थितावुत्पथेनाथ पेततुस्तौ महाटवीम्। निरुद्धां श्वापदैर्दीर्घपुरुषैरिव दारुणैः ॥१८७॥ 5
ततः कुमारं तृषितं मुक्त्वा वटतरोरधः। वारिणेऽगाद् वरधनुर्मनस्तुल्येन रंहसा ॥१८८॥
ततो वरधनुः सोऽयमुपलक्ष्य न्यरुध्यत। रुषितैर्दीर्घपुरुषैः पोत्रिपोत[2] इव श्वभिः ॥१८९॥
गृह्यतां गृह्यतामेष वध्यतां वध्यतामिति। भीषणं भाषमाणैस्तैर्जगृहे ववधे[3] च सः ॥१९०॥
संज्ञामधिब्रह्मदत्तं पलायस्वेति सोऽकृत। पलायिष्ट कुमारोऽपि समये खलु पौरुषम् ॥१९१॥
ततस्तस्या महाटव्या महाटव्यन्तरं जवात्। ब्रह्मसूराश्रमीवाऽगादाश्रमादाश्रमान्तरम् ॥१९२॥ 10
स तु तत्र कृताहारो विरसैररसैः फलैः। तृतीये दिवसेऽपश्यदेकं तापसमग्रतः ॥१९३॥
कुत्राश्रमो वो भगवन्निति पृच्छंस्तपस्विना[4]। स स्वाश्रमपदं निन्ये तापसा ह्यतिथिप्रियाः ॥१९४॥
सोऽथापश्यत् कुलपतिं ववन्दे पितृवन् मुदा। प्रमाणमन्तःकरणमविज्ञातेऽपि वस्तुनि ॥१९५॥

---

१ प्रातर्ग्रामं मु. ॥ २ वराहपोतः ॥ ३ ववधे–त्रिषष्टि० ९। १। १९१ ॥ ४ पृष्टस्त' मु. ॥

ऊचे कुलपतिर्वत्स तवातिमधुराकृतेः। को हेतुरत्रागमने मरौ सुरतरोरिव ॥१९६॥
ततो महात्मनस्तस्य विश्वस्तो ब्रह्मदत्तनिजम्। वृत्तान्तमाख्यत् प्रायेण गोप्यं न खलु तादृशाम् ॥१९७॥
हृष्टस्ततः कुलपतिर्व्याहरद् गद्गदाक्षरम्। द्विधा स्थित इवात्मैको भ्राताहं त्वत्पितुर्लघुः ॥१९८॥
ततो निजगृहं प्राप्तस्तिष्ठ वत्स यथासुखम्। अस्मत्तपोभिर्वर्द्धस्व सहैवास्मन्मनोरथैः ॥१९९॥
कुर्वन् जनदृगानन्दममन्दं विश्ववल्लभः। असौ तत्राश्रमे तस्थौ प्रावृट्कालोऽप्युपस्थितः ॥२००॥
तत्राऽसौ निवसंस्तेन वलेनेव जनार्दनः। शास्त्राणि शस्त्राण्यस्त्राणि सर्वाण्यध्याप्यते स्म च ॥२०१॥
वर्षात्यये समायाते सारसालापबन्धुरे। वन्धाविव फलाद्यर्थं प्रचेलुस्तापसा वनम् ॥२०२॥
सादरं कुलपतिना वार्य्यमाणोऽप्यगाद्वनम्। तैः सह ब्रह्मदत्तोऽपि कलभः कलभैरिव ॥२०३॥
भ्रमन्नितस्ततोऽपश्यद् विण्मूत्रं तत्र दन्तिनः। प्रत्यग्रमिति सोऽमंस्त हस्ती कोऽप्यस्त्यदूरतः ॥२०४॥
तापसैर्वार्य्यमाणोऽपि ततः सोऽनुपदं व्रजन्। योजनपञ्चकस्यान्ते नागं नगमिवैक्षत ॥२०५॥
निःशङ्कं बद्धपर्यङ्कः कुर्वन् गर्जितमूर्जितम्। मल्लो मल्लमिवाह्वास्त नृहस्ती मत्तहस्तिनम् ॥२०६॥
क्रुधोद्धुपितसर्वाङ्गो व्याकुञ्चितकरः करी। निष्कम्पकर्णस्ताम्रास्यः कुमारं प्रत्यधावत ॥२०७॥
इभोऽभ्यर्णेऽभ्यगाद्यावत् कुमारस्तावदन्तरे। उत्तरीयं प्रचिक्षेप तं वञ्चयितुमर्भवत् ॥२०८॥
अभ्रखण्डमिव भ्रश्यदन्तरिक्षात् तदंशुकम्। दशनाभ्यां प्रतीयेष क्षणादेपोऽत्यमर्षणः ॥२०९॥

5

10

अकस्माज्जायते कोऽयं खे शब्दोऽनब्दवृष्टिवत्[1] । तेनेति पृष्टा संभ्रान्ता पुष्पवत्येवमब्रवीत् ॥२३६॥
भगिन्यौ त्वद्द्विषो नाट्योन्मत्तस्येमे समागते । नाम्ना खण्डा विशाखा च विद्याधरकुमारिके ॥२३७॥
तन्निमित्तं विवाहोपस्करपाणी इमे मुधा । अन्यथा चिन्तितं कार्यं दैवं घटयतेऽन्यथा ॥२३८॥
अपसर्प क्षणं तावद् यावत् त्वद्गुणकीर्त्तनैः । लभेऽहमनयोर्भावं त्वयि रागविरागयोः ॥२३९॥
रागे रक्तां प्रेरयिष्ये पताकां तत् त्वमापतेः । विरागे चलयिष्यामि[2] श्वेतां गच्छेस्तदाऽन्यतः ॥२४०॥
ब्रह्मदत्तस्ततोऽवादीन्मा भैषीर्भीरु नन्वहम् । ब्रह्मसूनुः किमेते मे तुष्टे रुष्टे करिष्यतः ॥२४१॥
उवाच पुष्पवत्येवं नैताभ्यां वच्मि ते भयम् । एतत्सम्बन्धिनः किन्तु मा विरौत्सुर्नभश्वराः ॥२४२॥
तस्याश्चित्तानुवृत्त्या तु तत्रैवास्थात् स एकतः । अथ पुष्पवती श्वेतां पताकां पर्यचीचलत् ॥२४३॥
ततः कुमारस्तां दृष्ट्वा तत्प्रदेशाच्छनैः शनैः । प्रियानुरोधादगमन्न हि भीरुस्तादृशां नृणाम् ॥२४४॥
आकाशमिव दुर्ग्राह्[3]मरण्यमवगाह्य सः । दिनान्तेऽर्क इवाम्भोधिं प्रापदेकं महासरः ॥२४५॥
ततः प्रविश्य तत्रासौ सुरेभ इव मानसे । स्नात्वा स्वच्छन्दमत्यच्छाः सुधा इव पपावपः ॥२४६॥
निःसृत्य ब्रह्मसूर्नीरात्तीरमुत्तरपश्चिमम् । लताक्वणदलिस्वानैः सौस्नातिकमिवाभ्यगात् ॥२४७॥
तत्र तेन द्रुमलताकुञ्जे पुष्पाणि चिन्वती । वनाधिदेवता साक्षादिव काप्यैक्षि सुन्दरी ॥२४८॥

1 °नभवृ° शां. खं. ॥   2 चाल° मु. ॥   3 दुर्गाह°-त्रिषष्टि० ९ । १ । २४६ ॥

5

10

दध्याविति कुमारोऽपि जन्मप्रभृति वेधसः। रूपाण्यभ्यस्यतोऽमुष्यां सञ्जातं रूपकौशलम् ॥२४९॥
सा दास्या सह जल्पन्ती कटाक्षैः कुन्दसोदरैः। कण्ठे मालामिवास्यन्ती तं पश्यन्त्यन्यतो ययौ ॥२५०॥
पश्यन् कुमारस्तामेव प्रस्थितो यावदन्यतः। वस्त्रभूषणताम्बूलभृद्दासी तावदाययौ ॥२५१॥
सा वस्त्राद्यर्पयित्वोचे या त्वया ददृशेऽत्र सा। सत्यङ्कारमिव स्वार्थसिद्धेः प्रैषीदिदं त्वयि ॥२५२॥
आदिष्टा चास्मि यदमुं मन्दिरे तातमन्त्रिणः। नयातिथ्याय तथ्याय स हि वेत्ति यथोचितम् ॥२५३॥ 5
सोऽगात् सह तया वेश्म नागदेवस्य[1] मन्त्रिणः। अमात्योऽप्यभ्युदस्थात् तमाकृष्ट इव तद्गुणैः ॥२५४॥
श्रीकान्तया राजपुत्र्या वासाय तव वेश्मनि। प्रेषितोऽसौ महाभागः सन्दिश्येति जगाम सा ॥२५५॥
उपास्यमानः स्वामीव विविधं तेन मन्त्रिणा। क्षणदां क्षपयामास क्षणमेकमिवैष ताम् ॥२५६॥
मन्त्री राजकुलेऽनैषीत् कुमारं क्षणदात्यये। अर्घादिनोपतस्थेऽमुं बालार्कमिव भूपतिः ॥२५७॥
वंशाद्यपृष्ट्वापि नृपः कुमाराय सुतां ददौ। आकृत्यैव हि तत् सर्वं विदन्ति ननु तद्विदः ॥२५८॥ 10
उपायंस्त कुमारस्तां हस्तं हस्तेन पीडयन्। अन्योऽन्यं संक्रमयितुमनुरागमिवाभितः ॥२५९॥
ब्रह्मदत्तोऽन्यदा क्रीडन् रहः पप्रच्छ तामिति। एकस्याज्ञातवंशादेः पित्रा दत्तासि मे कथम् ॥२६०॥
श्रीकान्ता कान्तदन्तांशुधौताधरदलाऽब्रवीत्। राजा शबरसेनोऽभूद् वसन्तपुरपत्तने ॥२६१॥

॥२३१॥

---

१ नागदत्तस्य शां. ॥

तत्सूनुर्मे[1] पिता राज्ये निषण्णः क्रूरगोत्रिभिः। पर्यस्तोऽशिश्रियदिमां पल्लीं सबलवाहनः ॥२६२॥
भिल्लानुपनमय्यात्र वार्वेग इव वेतसान्। ग्रामघातादिना तातः पुष्णाति स्वं परिग्रहम् ॥२६३॥
जातास्मि चाहं तनया तातस्यात्यन्तवल्लभा। स्वामिन् सम्पदिवोपायांश्चतुरस्तनयाननु[2] ॥२६४॥
स मामुद्यौवनामूचे सर्वे मे द्वेषिणो नृपाः। त्वयेह स्थितया वीक्ष्य शंस्यो यस्ते मतो वरः ॥२६५॥
तस्थुषी चक्रवाकीव सरस्तीरे निरन्तरम्। ततः प्रभृति पश्यामि सर्वानेकैकशोऽध्वगान् ॥२६६॥
मनोरथानामगतिः स्वप्नेऽप्यत्यन्तदुर्लभः। आर्यपुत्रागतोऽसि त्वं मद्भाग्योपचयादिह ॥२६७॥
स पल्लीपतिरन्येद्युर्ग्रामघातकृते ययौ। कुमारोऽपि समं[3] तेन क्षत्रियाणां क्रमो ह्यसौ ॥२६८॥
लुण्ट्यमाने ततो ग्रामे कुमारस्य सरस्तटे। पादाब्जयोर्वरधनुरेत्य हंस इवापतत् ॥२६९॥
कुमारकण्ठमालम्ब्य मुक्तकण्ठं रुरोद[4] च। नवीभवन्ति दुःखानि सञ्जाते हीष्टदर्शने ॥२७०॥
ततः पीयूषगण्डूषैरिवालापैः सुपेशलैः। आश्वास्य पृष्टस्तेनोचे स्ववृत्तमिति मन्त्रिसूः ॥२७१॥
वटाधस्त्वां[5] तदा मुक्त्वा गतोऽहं नाथ पाथसे। सुधाकुण्डमिवापश्यं किञ्चिदग्रे महासरः ॥२७२॥




---

१ °पसमय्यात्र शां. ॥ २ उपायानां श्रीरिवानु चतुर्णां तनुजन्मनाम्।-शां. खं. ख. ग. घ.। श्रीवत् पश्चादुपायानां चतुर्णां तनुजन्मनाम्।-च. ङ. त्रिषष्टि० ९। १। २६५॥ ३ सह खं.॥ ४ रुरोद सः-ग. च. ङ. त्रिषष्टि० ९। १। २७१॥ ५ वटेऽधस्त्वां-मु. त्रिषष्टि० ९। १। २७३॥

तुभ्यमम्भोजिनीपत्रपुटेनादाय वार्य्यहम्। यमदूतैरिवागच्छन् रुद्धः संवर्मितैर्भटैः ॥२७३॥

अरे वरधनो ब्रूहि ब्रह्मदत्तः क्व विद्यते। इति तैः पृच्छ्यमानः सन्न वेद्मीत्यहमब्रवम्[1] ॥२७४॥

तस्करैरिव निःशङ्कं ताड्यमानोऽथ तैरहम्। इत्यवोचं यथा ब्रह्मदत्तो व्याघ्रेण भक्षितः ॥२७५॥

तं देशं दर्शयेत्युक्तो माययेतस्ततो भ्रमन्। त्वद्दर्शनपथेऽभ्येत्याकार्षं संज्ञां पलायने ॥२७६॥

परिव्राड्दत्तगुटिकां मुखेऽहं क्षिप्तवांस्ततः। तत्प्रभावेन निःसंज्ञो मृत इत्युज्झितोऽस्मि तैः ॥२७७॥ 5

चिरं गतेषु तेष्वास्यादाकृष्य गुटिकामहम्। त्वां नष्टार्थमिवान्वेष्टुं भ्रमन् ग्रामं कमप्यगाम् ॥२७८॥

[2]तत्रकः कोऽपि ददृशे परिव्राजकपुङ्गवः। साक्षादिव तपोराशिर्नमश्चक्रे मया ततः ॥२७९॥

सोऽवदद् मां वरधनो मित्रमस्मि धनोरहम्। वसुभागो [3]महाभागो ब्रह्मदत्तः क्व वर्त्तते ॥२८०॥

आचचक्षे मयाप्यस्य विश्वं विश्वस्य सूनृतम्। स च मे दुष्कथाधूमैर्म्लानास्यः पुनरभ्यधात् ॥२८१॥

तदा जतुगृहे दग्धे दीर्घः प्रातरुदैक्षत। करङ्कमेकं निर्दग्धं करङ्कत्रितयं न हि ॥२८२॥ 10

[4]सुरङ्गां तत्र चापश्यत् तदन्तेऽश्वपदानि च। धनोर्बुद्ध्या प्रनष्टौ वां ज्ञात्वा तस्मै चुकोप सः ॥२८३॥

१ °मब्रुवम्—प्रतिषु पाठः। °मब्रवम्—त्रिषष्टि० ९।१।२७५॥ २ तत्रैककोऽपि मु.॥ ३ महाभाग खं.॥
४ सुरुगां खं.॥ ५ प्रणष्टौ मु. त्रिषष्टि० ९।१।२८४। "नशः शः" [सि० २।३।७८] इति सूत्रेण 'प्रनष्टौ' इति सम्यक्॥



॥२३३॥

बद्ध्वा युवां समानेतुं प्रत्याशं साधनानि सः। अस्खलद्गमनान्यर्कमहांसीवादिदेश च ॥२८४॥
पलायितो धनुर्मन्त्री जनयित्री तु सा तव। दीर्घेण नरक इव क्षिप्ता मातङ्गपाटके ॥२८५॥
गण्डोपरिष्टात् पिटकेनेवार्त्तो वार्त्तया तया। दुःखोपर्युद्भवद्दुःखः काम्पील्यं[1] गतवानहम् ॥२८६॥
छन्नकापालिकीभूय तत्र मातङ्गपाटके। वेश्म वेश्मानुप्रवेशमस्थां स्पश इवानिशम् ॥२८७॥
पृच्छ्यमानश्च लोकेन तत्र भ्रमणकारणम्। अवोचमिति मातङ्ग्या विद्यायाः कल्प एष मे ॥२८८॥
तत्रैवं भ्राम्यता मैत्री मया विश्वासभाजनम्। अजायताऽऽरक्षकस्य मायया किं न साध्यते ॥२८९॥
अन्येद्युस्तन्मुखेनाम्बामवोचं यत् करोत्यसौ। त्वत्पुत्रमित्रं कौण्डिन्यो महाव्रत्यभिवादनम् ॥२९०॥
द्वितीयेऽह्नि स्वयं गत्वा जनन्या बीजपूरकम्। अदां सगुटिकं जग्धेनाऽसंज्ञा तेन साऽभवत् ॥२९१॥
मृतेति तां पुराध्यक्षो गत्वा राज्ञे व्यजिज्ञपत्। राज्ञाऽऽदिष्टाः स्वपुरुषास्तस्याः संस्कारहेतवे ॥२९२॥
तत्राऽऽयाता मयोक्तास्ते संस्कारोऽस्याः क्षणेऽत्र चेत्। महाननर्थो वो राज्ञश्चेति जग्मुः स्वधाम ते ॥२९३॥
आरक्षं चावदं त्वं चेत् सहायः साधयाम्यहम्। सर्वलक्षणभाजोऽस्या मन्त्रमेकं शवेन तत् ॥२९४॥
आरक्षः प्रतिपेदे तत्तेनैव सहितस्ततः। सायमादाय जननीं श्मशानेऽगां दवीयसि ॥२९५॥
स्थण्डिले मण्डलादीनि मया निर्माय मायया। पूर्देवीनां बलिं दातुमारक्षः प्रेषितस्ततः ॥२९६॥

१ शश—मु. ॥

5

10

॥२३५॥

गते तस्मिन्नहं मातुरपरां गुटिकामदाम्। निद्राच्छेद इवोज्जृम्भा सोदस्थाज्ज्ञातचेतना ॥२९७॥
स्वं ज्ञापयित्वा रुदतीं निवार्य स्म नयामि ताम्। कच्छग्रामे गृहे तातसुहृदो देवशर्म्मणः ॥२९८॥
इतस्ततो भ्रमन्नेषोऽन्वेषयंस्त्वामिहागमम्। दिष्ट्या दृष्टोऽधुना साक्षात्पुण्यराशिरिवासि मे ॥२९९॥
ततः परं कथं नाथ प्रस्थितोऽसि स्थितोऽसि च। तेनेति पृष्टः स्वं वृत्तं कुमारोऽपि न्यवेदयत् ॥३००॥
अथ कोऽप्येत्य तावूचे ग्रामे दीर्घभटाः पटम्। युष्मत्तुल्यद्विरूपाङ्कं[1] दर्शयन्तो वदन्त्यदः ॥३०१॥ 5
ईदृग्नरौ किमायातावत्रेत्याकर्ण्य गां मया। दृष्टाविह युवां यद् वां रुचितं कुरुतं हि तत् ॥३०२॥
ततस्तस्मिन् गतेऽरण्यमध्येन कलभाविव। पलायमानौ कौशाम्बीं प्रापतुस्तौ पुरीं क्रमात् ॥३०३॥
तत्र सागरदत्तस्य श्रेष्ठिनो बुद्धिलस्य च। उद्यानेऽपश्यतां लक्षपणं तौ कुक्कुटाहवम् ॥३०४॥
उत्पत्योत्पत्य नखरैः प्राणाकर्षाङ्कुटैरिव। युयुधाते ताम्रचूडौ चञ्चाचञ्चवि चोच्चकैः ॥३०५॥
तत्र सागरदत्तस्य जात्यं शक्तं च कुक्कुटम्। भद्रेभमिव मिश्रेभोऽभाङ्क्षीद् बुद्धिलकुक्कुटः ॥३०६॥ 10
ततो वरधनुः स्माह कथं जात्योऽपि कुक्कुटः। भग्नस्ते सागराऽनेन पश्याम्येनं यदीच्छसि ॥३०७॥
सागरानुज्ञया सोऽप्यपश्यद् बुद्धिलकुक्कुटम्। तत्पादयोरयःसूचीर्यमदूतीरिवैक्षत ॥३०८॥
लक्षयन् बुद्धिलोऽप्यस्य लक्षार्द्धं छन्नमिष्टवान्। सोऽप्याख्यत्तं व्यतिकरं कुमारस्य जनान्तिके ॥३०९॥

१ °ल्यर्द्धिरू° मु. शां.॥

॥२३५॥

ब्रह्मदत्तोऽप्ययःसूचीः कृष्ट्वा बुद्धिलकुक्कुटम् । भूयोऽपि सागरश्रेष्ठिकुक्कुटेनाभ्ययोजयत् ॥३१०॥
असूचिकः कुक्कुटेन तेन बुद्धिलकुक्कुटः । क्षणादभञ्जि निम्नानां छद्मबाह्यं कुतो जयः ॥३११॥
हृष्टः सागरदत्तस्तावारोप्य स्यन्दनं स्वकम् । जयदानैकसुहृदौ निनाय निलये निजे ॥३१२॥
स्वधामनीव तद्धाम्नि तयोर्निवसतोरथ । किमप्याख्यद् वरधनोरेत्य बुद्धिलकिङ्करः ॥३१३॥
तस्मिन् गते वरधनुः कुमारमिदमभ्यधात् । यद् बुद्धिलेन लक्षार्द्धं दित्सितं मेऽद्य पश्य तत् ॥३१४॥
सोऽदर्शयत्ततो हारं निर्मलस्थूलवर्त्तुलैः । कुर्वाणं मौक्तिकैः शुक्रमण्डलस्य विडम्बनाम् । ३१५॥
हारे बद्धं स्वनामाङ्कं ब्रह्मसूर्लेखमैक्षत । आगाच्च वाचिकमिव मूर्त्तं वत्साख्यतापसी ॥३१६॥
अक्षतानि तयोर्मूर्ध्नि क्षिप्त्वाशीर्वादपूर्वकम् । नीत्वान्यतो वरधनुं किञ्चिदाख्याय सा ययौ ॥३१७॥
तच्चाख्यातुं समारेभे मन्त्रिसूर्ब्रह्मसूनवे । प्रतिलेखं हारबद्धलेखस्येयमयाचत ॥३१८॥[1]
श्रीब्रह्मदत्तनामाङ्को लेखोऽयं प्रथयस्व तत् । को ब्रह्मदत्त इति सा मया पृष्टेदमब्रवीत् ॥३१९॥
अस्ति श्रेष्ठिसुता रत्नवती नामेह पत्तने । रूपान्तरेण कन्यात्वं प्रपन्नेव रतिर्भुवि ॥३२०॥
भ्रातुः सागरदत्तस्य बुद्धिलस्य च तद्दिने । कुक्कुटायोधनेऽपश्यद् ब्रह्मदत्तमिमं हि सा ॥३२१॥
ततःप्रभृति ताम्यन्ती कामार्त्ता सा न शाम्यति । शरणं ब्रह्मदत्तो मे स एवेत्याह चानिशम् ॥३२२॥
स्वयं लिखित्वा चान्येद्युर्लेखं हारेण संयुतम् । अर्प्यतां ब्रह्मदत्तस्येत्युदित्वा सा ममार्पयत् ॥३२३॥

१ हारबद्धममुं लेखं तापसीयमयाचत खं. ॥

||२३७||

दासहस्ते मया लेखः प्रैषीत्युक्त्वा स्थिता सती। मयापि प्रतिलेखं तेऽर्पयित्वा सा व्यसृज्यत ॥३२४॥

दुर्वारमारसन्तापः कुमारोऽपि ततो दिनात्। मध्याह्नार्ककरोत्तप्तः[1] करीव न सुखं स्थितः ॥३२५॥

कौशाम्बीस्वामिनोऽन्येद्युर्दीर्घेण प्रहिता नराः। नष्टशल्यवदङ्गे तौ तत्रान्वेष्टुं समाययुः ॥३२६॥

राजादेशेन कौशाम्ब्यां प्रवृत्तेऽन्वेषणे तयोः। सागरो भूगृहे क्षिप्त्वा तौ जुगोप निधानवत् ॥३२७॥

निशि तौ निर्यियासन्तौ रथमारोप्य सागरः। कियन्तमपि पन्थानं निनाय ववले[2] ततः ॥३२८॥ 5

तौ गच्छन्तौ पुरो नारीमुद्याने समपश्यताम्। अस्त्रपूर्णरथारूढाममरीमिव नन्दने ॥३२९॥

लग्ना किमियती वेला युवयोरिति सादरम्। तयोक्तौ तौ बभाषाते कावावां वेत्सि वा कथम् ॥३३०॥

अथाभाषत सा पुर्यामस्यां श्रेष्ठी महाधनः। धनप्रवर इत्यासीद्धनदस्येव सोदरः ॥३३१॥

श्रेष्ठिश्रेष्ठस्य तस्याहमष्टानां तनुजन्मनाम्। उपरिष्टाद्विवेकश्रीर्धीगुणानामिवाभवम् ॥३३२॥

उद्यौवनाऽस्मिन्नुद्याने यक्षमाराधयं बहु। अत्युत्तमवरप्राप्त्यै स्त्रीणां नाऽन्यो मनोरथः ॥३३३॥ 10

तुष्टो भक्त्यैष मे यक्षवरो वरमिमं[3] ददौ। ब्रह्मदत्तश्चक्रवर्त्ती तव भर्त्ता भविष्यति ॥३३४॥

सागर-बुद्धिलश्रेष्ठिकुक्कुटाजौ य एष्यति। श्रीवत्सी ससखा तुल्यरूपो ज्ञेयः स तु त्वया ॥३३५॥

मदायतनवर्त्तिन्याः प्रथमस्ते भविष्यति। मेलको ब्रह्मदत्तेन तज्जाने सोऽसि सुन्दर ॥३३६॥

||२३७||

---

१ °करात्तप्तः खं। °करैस्तप्तः ड.॥   २ चचले खं.॥   ३ वरमिदं मु.॥

एह्येहि तन्मां विरहदहनार्तां चिरादिह। विध्यापय पयःपूरेणेव सङ्गेन सम्प्रति ॥३३७॥
तथेति प्रतिपद्याऽस्या अनुरागमिवाऽलघुम्। सोऽधितष्ठौ रथं तां च गन्तव्यं क्वेति पृष्टवान् ॥३३८॥
सेत्यूचे मगधपुरे मत्पितृव्यो धनावहः। अस्ति श्रेष्ठ्यावयोर्वर्हां प्रतिपत्तिं स दास्यति ॥३३९॥
तदितस्तत्र गन्तव्यमिति रत्नवतीगिरा। ब्रह्मसूर्मन्त्रिपुत्रेण सूतेनाऽश्वाननोदयत् ॥३४०॥
कौशाम्बीदेशमुल्लङ्घ्य क्षणेन ब्रह्मनन्दनः। क्रीडास्थानं यमस्येव प्राप भीमां महाटवीम् ॥३४१॥
सुकण्टकः कण्टकश्च तत्र चौरचमूपती। ब्रह्मदत्तं रुरुधतुः श्वानाविव महाकिरिम् ॥३४२॥
ससैन्यौ युगपत् कालरात्रिपुत्राविवोत्कटौ। शरैर्नभोमण्डपवच्छादयामासतुश्च तौ ॥३४३॥
आत्तधन्वा कुमारोऽपि गर्जश्चौरवरूथिनीम्। निषिषेधेषुभिर्धारासारैर्दवमिवाम्बुदः ॥३४४॥
कुमारे वर्षति शरान् ससैन्यौ तौ प्रणेशतुः। हन्त प्रहारिणि हरौ हरिणानां कुतः स्थितिः ॥३४५॥
कुमारं मन्त्रिसूरेवमूचे श्रान्तोऽसि सङ्गरात्। मुहूर्तं स्वपिहि स्वामिंस्तदिहैव रथे स्थितः ॥३४६॥
स्यन्दने ब्रह्मदत्तोऽपि रत्नवत्या समन्वितः। सुष्वाप गिरिनितम्बे[1] करिण्येव[2] करी युवा ॥३४७॥
विभातायां विभावर्यां प्राप्यैकामथ निम्नगाम्। तस्थुः श्रान्तास्तुरङ्गाश्च कुमारश्च व्यबुध्यत ॥३४८॥
विबुद्धस्तु स नापश्यत्स्यन्दने मन्त्रिनन्दनम्। पयसे किं गतः स्यादित्यसकृद् व्याजहार तम् ॥३४९॥

१ गिरिणितम्बे खं. ॥ २ करण्येव शां. खं. ॥

5

10

सोऽलब्धप्रतिवाग् दृष्ट्वा रथाग्रं रक्तपङ्किलम् । विलपन् हा हतोऽस्मीति मूर्च्छितो न्यपतद् रथे ॥३५०॥
उत्थितो लब्धसंज्ञः सन् हाहा वरधनो सखे । क्वासीति लोकवत्[1] क्रन्दन् रत्नवत्येत्यबोधि सः ॥३५१॥
विपन्नो ज्ञायते नैव स तावद् भवतः सखा । तस्य वाचाप्यमङ्गल्यं नाथ कर्तुं न युज्यते ॥३५२॥
त्वत्कार्याय गतः क्वापि स भविष्यत्यसंशयम् । यान्ति नाथमपृष्ट्वापि नाथकार्याय मन्त्रिणः ॥३५३॥
स तवोपरि भक्त्यैव रक्षितो नूनमेष्यति । स्वामिभक्तिप्रभावो हि भृत्यानां कवचायते ॥३५४॥
स्थाने प्राप्ताः करिष्यामो नरैस्तस्य गवेषणम् । युज्यते नेह तु स्थातुमन्तकोपवने वने ॥३५५॥
तद्वाचा सोऽनुदद् रथ्यान् प्रपेदे मगधक्षितेः । सीमग्रामं दविष्ठं हि वाजिनां मरुतां च किम् ॥३५६॥
ग्रामेशेन सदःस्थेन दृष्ट्वा निन्ये स्ववेश्म सः । अज्ञाता अपि पूज्यन्ते महान्तो मूर्त्तिदर्शनात् ॥३५७॥
शोकाक्रान्त इवासीति पृष्टो ग्रामाधिपेन सः । इत्यूचे मत्सखा चौरैर्युध्यमानो गतः क्वचित् ॥३५८॥
तस्य प्रवृत्तिमानेष्ये सीताया इव मारुतिः । इत्युक्त्वा ग्रामणीः सर्वां तां जगाहे महाटवीम् ॥३५९॥
अथैत्य ग्रामणीरूचे दृष्टः कोऽपि वने न हि । प्रहारपतितः किन्तु प्राप्त एष[2] शरो[3] मया ॥३६०॥
हतो वरधनुर्नूनमिति चिन्तयतस्ततः । ब्रह्मसूनोः शोक इव तमोभूरभवन्निशा ॥३६१॥
यामे तुरीये यामिन्यास्तत्र चौराः समापतन् । ते तु भग्नाः कुमारेण मारेणेव प्रवासिनः ॥३६२॥

---

१ °मांगल्यं मु. ॥ २ एकः ड ॥ ३ करो शां. ॥

ततोऽनुयातो ग्रामण्या ययौ राजगृहं क्रमात्। स चामुचद्रत्नवतीं तद्बहिस्तापसाश्रमे ॥३६३॥
विशन् पुरं स ऐक्षिष्ट हर्म्यवातायनस्थिते। साक्षादिव रति-प्रीती कामिन्यौ नवयौवने ॥३६४॥
ताभ्यां सोऽभिदधे प्रेमभाजं त्यक्त्वा जनं ननु। यत्तदा गतवान् युक्तं तत् किं ते प्रत्यभासत ॥३६५॥
व्याजहार कुमारोऽपि प्रेमभाग् बत को जनः। स कदा च मया त्यक्तः कोऽहं के वा युवामिति ॥३६६॥
प्रसीदागच्छ विश्राम्य नाथेत्यालापनिष्ठयोः। प्राविशद् ब्रह्मदत्तोऽपि मनसीव तयोर्गृहे ॥३६७॥
तिष्ठमाने कृतस्नाना-ऽशनाय ब्रह्मसूनवे। कथयामासतुस्ते स्वां कथामवितथामिति ॥३६८॥
अस्ति विद्याधरावासः कलधौतशिलामयः। मेदिन्यास्तिलक इव वैताढ्यो नाम पर्वतः ॥३६९॥
अमुष्य दक्षिणश्रेण्यां नगरे शिवमन्दिरे। राजास्ति ज्वलनशिखोऽलकायामिव गुह्यकः ॥३७०॥
विद्याधरपतेस्तस्य द्युतिद्योतितदिग्मुखा। प्रिया विद्युच्छिखेत्यस्ति विद्युदम्भोमुचो यथा ॥३७१॥
तयोः प्राणप्रिये नाट्योन्मत्ताभिधसुतानुजे। नाम्ना खण्डा विशाखा च पुत्र्यावावां बभूविव ॥३७२॥
तातः सौधेऽन्यदा सख्याग्निशिखेन सहालपन्। गच्छतोऽष्टापदगिरिं गीर्वाणान् खे निरैक्षत ॥३७३॥
ततः स तीर्थयात्रार्थं चलितोऽचालयच्च नौ। सुहृदं चाग्निशिखं तं धर्मेणेष्टं हि योजयेत् ॥३७४॥
प्राप्ता[1] अष्टापदं तत्रापश्याम मणिनिर्मिताः। प्रतिमास्तीर्थनाथानां मान-वर्णसमन्विताः ॥३७५॥

5

10

---

१ प्राप्तावष्टा° खं । प्राप्ताश्चाष्टा° त्रिषष्टि० ९ । १ । ३७६ ॥

स्नानं विलेपनं पूजां विरचय्य यथाविधि। तास्त्रिः प्रदक्षिणीकृत्याऽवन्दामहि समाहिताः ॥३७६॥
प्रासादान्निःसृतैर्दृष्टौ रक्ताशोकतरोरधः। चारणश्रमणौ मूर्त्तिमन्ताविव तपःशमौ ॥३७७॥
तौ प्रणम्योपविश्याग्रे शुश्रुम श्रद्धया वयम्। अज्ञानतिमिरच्छेदकौमुदीं धर्मदेशनाम् ॥३७८॥
पप्रच्छाऽग्निशिखः कः स्यात् कन्ययोरनयोः पतिः। तावूचतुर्यो ह्यनयोर्भ्रातरं मारयिष्यति ॥३७९॥
हिमेनेव शशी म्लानो जातस्तातस्तया गिरा। आवामपीत्यवोचाव वाचा वैराग्यगर्भया ॥३८०॥ 5
संसारासारतासारा देशनाद्यैव शुश्रुवे। तद्विषादनिषादेन किं तात परिभूयसे ॥३८१॥
अलमस्माकमप्येवंविधैर्विषयजैः सुखैः। प्रवृत्ते तत्प्रभृत्यावां त्रातुं निजसहोदरम् ॥३८२॥
भ्राम्यन्नपश्यन्मे भ्राताऽन्यदा पुष्पवतीमसौ। मातुलस्य त्वदीयस्य पुष्पचूलस्य कन्यकाम् ॥३८३॥
रूपेणाद्भुतलावण्यपुण्येन हृतमानसः। तां जहार स दुर्बुद्धिर्बुद्धिः कर्मानुसारिणी ॥३८४॥
सोऽसहिष्णुर्दृशं तस्या विद्यां साधयितुं ययौ। स्वयं संविद्रते सम्यग् भवन्तस्तु ततः परम् ॥३८५॥ 10
तदा च पुष्पवत्याख्यदावयोर्भ्रातृसङ्क्षयम्। शोकं धर्माक्षरैः शोकापनोद इव चानुदत् ॥३८६॥
अन्यच्च पुष्पवत्यूचेऽभिगम्योऽयमिहागतः। ब्रह्मदत्तोऽस्तु वां भर्ता नान्यथा हि मुनेर्गिरः ॥३८७॥
स्वीकृतं च तदावाभ्यां तया च रभसावशात्। पताकाऽचालि धवला त्यक्त्वा वां त्वं गतस्ततः ॥३८८॥



॥२४१॥

यदास्मद्भाग्यवैगुण्यान्नागतोऽसि न वेक्षितः[1]। भ्रान्त्वा सर्वत्र निर्विण्णे आवामिह तदागते ॥३८९॥
पुण्यैरसि समायातः पुरा पुष्पवतीगिरा। वृतोऽसि वरयाऽऽवां तद् गतिरेकस्त्वमावयोः ॥३९०॥
गान्धर्वेण विवाहेन स उपायंस्त ते अपि। भोगी हि भाजनं स्त्रीणां सरितामिव सागरः ॥३९१॥
रममाणः समं ताभ्यां गङ्गोमाभ्यामिवेश्वरः। तत्राऽतिवाहयामास तां निशां ब्रह्मनन्दनः ॥३९२॥
यावन्मे राज्यलाभः स्यात् पुष्पवत्याः समीपतः। तावद्युवाभ्यां स्थातव्यमित्युक्त्वा व्यसृजच्च ते ॥३९३॥
तथेत्याहतवन्त्यौ ते स लोकस्तच्च मन्दिरम्। गन्धर्वनगरमिव ततः सर्वं तिरोदधे ॥३९४॥
अथाश्रमे रत्नवतीमन्वेष्टुं ब्रह्मभूर्गात्। अपश्यंस्तत्र पप्रच्छ नरमेकं शुभाकृतिम् ॥३९५॥
दिव्याम्बरधरा नारी रत्नाभरणभूषिता। कापि दृष्टा महाभाग त्वयाऽतीतदिनेऽद्य वा ॥३९६॥
स ऊचे नाथ नाथेति रुदती ह्यो मयेक्षिता। प्रत्यभिज्ञाय नप्त्रीति तत्पितृव्याय चार्पिता ॥३९७॥
तद्वरोऽसीति तेनोक्तस्तथेति ब्रह्मसूर्वदन्। निन्ये तेन प्रहृष्टेन तत्पितृव्यनिकेतनम् ॥३९८॥
रत्नवत्या[2] पितृव्योऽपि ब्रह्मदत्तं व्यवाहयत्। ऋद्ध्या महत्या धनिनां सर्वमीषत्करं यतः ॥३९९॥
तया विषयसौख्यानि समं सोऽनुभवन्नथ। मृतकार्यं वरधनोरपरेद्युः प्रचक्रमे ॥४००॥
साक्षादिव परेतेषु भुञ्जानेषु द्विजन्मसु। विप्रवेषो वरधनुस्तत्रागत्याऽब्रवीदिति ॥४०१॥

१ चेक्षितः मु. खं.॥  २ रत्नवत्याः खं. त्रिषष्टि० ९। १। ४००॥

मम चेद्भोजनं दत्थ साक्षाद् वरधनोर्हि तत्। इति श्रुतिसुधेवाऽस्य श्रुता वाग् ब्रह्मसूनुना ॥४०२॥
स तं दृष्ट्वा परिष्वङ्गादेकीकुर्वन्निवात्मना। स्नपयन्निव हर्षास्रैर्निनायाऽन्तर्गृहं ततः ॥४०३॥
ऊचे पृष्टः कुमारेण स्ववृत्तं[1] सोऽथ यत्तदा। सुप्ते त्वयि निरुद्धोऽहं चौरैर्दीर्घभटैर्यथा ॥४०४॥
वृक्षान्तरस्थितेनैकदस्युनैकेन पत्रिणा। हतोऽहं पतितः पृथ्व्यां तिरोऽधां च लतान्तरे ॥४०५॥
गतेषु तेषु चौरेषु मध्येवृक्षं तिरोभवन्। आतिरन्तर्जलमिव[2] क्रमेण ग्राममाप्नवम्[3] ॥४०६॥
भवत्प्रवृत्तिं ग्रामेशाद्विज्ञायाऽहमिहाऽऽगमम्। दिष्ट्याऽपश्यं भवन्तं च कलापीव पयोमुचम् ॥४०७॥
अथोचे ब्रह्मदत्तस्तमस्माभिः स्थास्यते ननु। विना पुरुषकारेण क्लीबैरिव कियच्चिरम् ॥४०८॥
अत्रान्तरे च सम्प्राप्तसाम्राज्यमकरध्वजः। मधुवन्मदको[4] यूनां प्रादुरासीन्मधूत्सवः ॥४०९॥
तदा च राज्ञो मत्तेभः स्तम्भं भङ्क्त्वाऽपशृङ्खलः। निर्ययौ त्रासिताशेषमर्त्यो मृत्योरिवाऽनुजः ॥४१०॥
ततो नितम्बभारार्त्तां काञ्चित् कन्यां स्खलद्गतिम्। करी करेण जग्राहाऽऽकृष्य पुष्करिणीमिव ॥४११॥
तस्यां च शरणार्थिन्यां क्रन्दन्त्यां दीनचक्षुषि। जज्ञे हाहारवो विश्वदुःखबीजाक्षरोपमः ॥४१२॥
रे मातङ्गाऽसि मातङ्गः[5] स्त्रियं गृह्णन्न लज्जसे। इत्युक्तः स कुमारेण तां विमुच्य तमभ्यगात् ॥४१३॥

---

१ स्वं वृत्त शां.॥ २ आडि° त्रिषष्टि० ९।१।४०७। आतिः पक्षिविशेषः॥ ३ °माप्नुवम्-प्रतिषु। °माप्नवम् त्रिषष्टि० ९।१।४०७॥ ४ °न्मादको त्रिषष्टि० ९।१।४१०॥ ५ चण्डालः॥

उत्प्लुत्य दन्तसोपाने पादं विन्यस्य हेलया । आरुरोह कुमारस्तमशिश्रयदथाऽऽसनम् ॥४१४॥
वाक्-पादा-ऽङ्कुशयोगेन स्वं योगेनेव योगवित् । वशीचकार तं नागं कुमारस्तरसा ततः ॥४१५॥
साधु साध्वित्युच्यमानो जनैर्जय जयेति च । कुमारः करिणं स्तम्भे नीत्वाऽबध्नाद्वशामिव ॥४१६॥
ततो नरेन्द्रस्तत्रागात् तं च दृष्ट्वा विसिष्मिये । आकृतिर्विक्रमश्चास्य कस्य चित्रीयते न वा ॥४१७॥
कोऽयं कुतो वा छन्नात्मा किं सूर्यो वासवोऽथवा । राज्ञेत्युक्ते रत्नवत्याः पितृव्यस्तमचीकथत् ॥४१८॥ 5
ततो विशाम्पतिः कन्याः पुण्यमानी कृतोत्सवः । दक्षः क्षपाकरायेव ब्रह्मदत्ताय दत्तवान् ॥४१९॥
परिणीय स तास्तत्र सुखं तिष्ठन्नथाऽन्यदा । जरत्यैत्यैकयेत्यूचे भ्रमयित्वांशुकाञ्चलम् ॥४२०॥
इह वैश्रवणो[1]ऽस्त्याढ्यः श्रिया वैश्रवणो[2]ऽपरः । तस्य च श्रीमतिर्नाम सुता श्रीरिव वारिधेः ॥४२१॥
मोचिता भवता व्यालाद् राहोरिन्दुकलेव या । सा त्वामेव पतीयन्ती ततः प्रभृति ताम्यति ॥४२२॥
यथा गजात् त्वया त्राता तथा त्रायस्व तां स्मरात् । गृहाण पाणिं त्वं तस्या यथा हृदयमग्रहीः ॥४२३॥ 10
उपयेमे कुमारस्तां विविधोद्वाहमङ्गलैः । सुबुद्धिमन्त्रिणः कन्यां नन्दां वरधनुः पुनः ॥४२४॥
पप्रथाते पृथिव्यां तौ तिष्ठन्तौ तत्र शक्तितः । साभियोगौ प्रतस्थाते ततो वाराणसीं प्रति ॥४२५॥
श्रुत्वाऽऽयान्तं ब्रह्मदत्तं ब्रह्माणमिव गौरवात् । अभ्येत्य संमुखं वाराणसीशः स्वगृहेऽनयत् ॥४२६॥

---

१-२ वैश्रमणो—शां. ॥

कटकः कटकवतीं नाम पुत्रीं निजां ददौ । चतुरङ्गचमूं चास्मै मूर्तामिव जयश्रियम् ॥४२७॥
कणेरुदत्तश्चम्पेशो धनुर्मन्त्री तथाऽपरे । भगदत्तादयोऽप्येयुर्नृपाः श्रुत्वा तदागमम् ॥४२८॥
कृत्वा वरधनुं[1] सेनान्यं सुषेणमिवार्षभिः । दीर्घं दीर्घपथे नेतुं प्रतस्थे ब्रह्मनन्दनः ॥४२९॥
दीर्घस्य दूतः कटकराजमेत्यैवमूचिवान् । दीर्घेण सममाबाल्यमैत्री[2] त्यक्तुं न युज्यते ॥४३०॥
ततः कटक इत्यूचे ब्रह्मणा सहिताः पुरा । सोदर्य्या इव पश्चापि[3] सञ्जाताः सुहृदो वयम् ॥४३१॥
स्वर्जुषो ब्रह्मणः पुत्रे राज्ये च त्रातुमर्पिते । दीर्घेण[4] धिक् कृतं नाप्ति शाकिन्यपि समर्पितम् ॥४३२॥
ब्रह्मणः पुत्रभाण्डे यद्दीर्घो दीर्घमचिन्तयन् । आचचाराऽतिपापं तच्छ्वपचोऽपि किमाचरेत् ॥४३३॥
तद् गच्छ शंस दीर्घाय ब्रह्मदत्तोऽभ्युपैत्यसौ । युद्धयस्व यदि वा नश्येत्युक्त्वा दूतं व्यसर्जयत् ॥४३४॥
ततः प्रयाणैरच्छिन्नैः काम्पील्यं ब्रह्मसूर्ययौ । सदीर्घमप्यरौत्सीत्तन्नभः सार्कमिवाम्बुदः ॥४३५॥
दीर्घः सर्वाभिसारेण रणसारेण पत्तनात् । दण्डाक्रान्तो निरसरद् बिलादिव महोरगः ॥४३६॥
चुलन्यपि[5] तदात्यन्तवैराग्यादाददे व्रतम् । पार्श्वे पूर्णाप्रवर्त्तिन्याः क्रमान्निर्वृतिमाप च ॥४३७॥
पुरोगा दीर्घराजस्य पुरोगैर्ब्रह्मजन्मनः । नदीयादांस्यकूपारयादोभिरिव जघ्निरे ॥४३८॥

---

१ वरधनुः खं ॥ २ मैत्रीं खं. ॥ ३ —ख. ग. घ. त्रिषष्टि० । पश्चाप्यभवाम सुहृदो वयम् मु. ॥
४ दीर्घेणाधिकृते त्रिषष्टि० ९ । १ । ४३२ ॥ ५ श्लोकोऽयं नास्ति शां. खं. ॥



॥२४५॥

दीर्घोऽप्यमर्षादुन्नामिदंष्ट्रिकाविकटाननः। वराह इव धावित्वा हन्तुं प्रववृते परान् ॥४३९॥
ब्रह्मदत्तस्य पादात रथि-साद्यादिकं बलम्। पर्यास्यत नदीपूरेणेव दीर्घेण वेगिना ॥४४०॥
ब्रह्मदत्तस्ततः क्रोधारुणाक्षो युयुधे स्वयम्। गर्जता दीर्घराजेन गर्जन् दन्तीव दन्तिना ॥४४१॥
उभावपि बलिष्ठौ तावस्त्राण्यस्त्रैर्निरासतुः। कल्लोलैरिव कल्लोलान् युगान्तोद्भ्रान्तवारिधी ॥४४२॥
ज्ञात्वाऽथ सेवक इवावसरं प्रसरद्द्युति। डुढौके ब्रह्मदत्तस्य चक्रं दिक्चक्रजित्वरम् ॥४४३॥
ततो जहार दीर्घस्य तेनाशु ब्रह्मस्वरसून्। विमर्दो विद्युतः को वा गोधानिधनसाधने ॥४४४॥
जयतादेष चक्रीति भाषिणो मागधा इव। ब्रह्मदत्तोपरि सुराः पुष्पवृष्टिं वितेनिरे ॥४४५॥
पौरैः पितेव मातेव देवतेव स वीक्षितः। पुरं विवेश काम्पील्यं[1] सुत्रामेवाऽमरावतीम् ॥४४६॥
[2]पूर्वोढाः सर्वतोऽपि पत्नीरानाययन्नृपः। कुरुमत्यभिधानां च स्त्रीरत्नं प्रत्यतिष्ठिपत् ॥४४७॥
विभिन्नस्वामिनोद्भूतसीमनिर्मूलनादसौ[3]। षट्खण्डां साधयित्वोर्वीमेकखण्डां विनिर्ममे ॥४४८॥
संवत्सरैर्द्वादशभिरुपेत्योपेत्य सर्वतः। तस्याभिषेको विदधे भरतस्येव राजभिः ॥४४९॥
चतुःषष्टिसहस्रान्तःपुरस्त्रीपरिवारितः। स राज्यसौख्यं बुभुजे प्राक्तपोभूरुहः फलम् ॥४५०॥
अन्येद्युर्नाट्यसङ्गीते तस्य दास्या समर्पितः। स्वर्वधूगुम्फित इव विचित्रः पुष्पगेन्दुकः ॥४५१॥

१ काम्पिल्यं त्रिषष्टि० ९। १। ४४७॥ २ श्लोकोऽयं नास्ति शां. खं.॥ ३ (°स्वामितोद्भूत° ?)॥

5

10

ब्रह्मदत्तस्तु तं दृष्ट्वा दृष्टपूर्वो मयेदृशः । कुत्रापीति व्यधादन्तरूहापोहं मुहुर्मुहुः ॥४५२॥
प्राक्पञ्चजन्मस्मरणोत्पत्तेस्तत्कालमेव च । मूर्च्छित्वा[1] ज्ञातवानेतं सौधर्मे दृष्टवानिति ॥४५३॥
स सिक्तश्चन्दनाम्भोभिः स्वस्थीभूयेत्यचिन्तयत् । कथं मिलिष्यति[2] स मे पूर्वजन्मसहोदरः ॥४५४॥
तं ज्ञातुकामः श्लोकार्द्धसमस्यामेवमार्पयत् । 'आस्व दासौ मृगौ हंसौ मातङ्गावमरौ तथा' ॥४५५॥
अर्द्धश्लोकसमस्यां मे य इमां पूरयिष्यति । राज्यार्द्धं तस्य दास्यामीत्यसावाघोषयत्[3] पुरे ॥४५६॥ 5
श्लोकार्द्धं तत्तु सर्वोऽपि कण्ठस्थं निजनामवत् । पठन्नकार्षीत् पश्चार्द्धं न चापूरिष्ट कश्चन ॥४५७॥
तदा च पुरिमतालाच्चित्रजीवो महेभ्यभूः । जातिस्मृतेः प्रव्रजितो विहरन्नेक[4] आययौ ॥४५८॥
तत्र कस्मिंश्चिदुद्याने प्रासुकस्थण्डिलस्थितः । श्लोकार्द्धं तत्तु पठतः सोऽश्रौषीदारघट्टिकात् ॥४५९॥
'एषा नौ षष्ठिका जातिरन्योन्याभ्यां वियुक्तयोः ।' श्लोकापरार्द्धमेवं स सम्पूर्य तमपाठयत् ॥४६०॥
श्लोकापरार्द्धं तद्राज्ञः पुरस्तादारघट्टिकः । पपाठ कः कविरिति तत्पृष्टस्तं मुनिं जगौ ॥४६१॥ 10
स पारितोषिकं तस्मै वितीर्य्योत्कण्ठया ययौ । तत्रोद्याने मुनिं द्रष्टुं धर्मद्रुममिवोद्गतम् ॥४६२॥
वन्दित्वा तं मुनिं तत्र बाष्पपूर्णविलोचनः । निषसादान्तिके राजा सस्नेहः पूर्वजन्मवत् ॥४६३॥

१ —क ख. च. ड. । सौधर्मे दृष्टवानेतदित्यज्ञासीन्महीपतिः मु. । मूर्च्छित्वाऽबुधदीदृक्षं सौधर्मे दृष्टवानिति– त्रिषष्टि० ९ । १ । ४८७॥ २ मेलिष्यति मु. ॥ ३ °वघो° मु. ॥ ४ विहरन्नेकदाऽऽययौ मु. ॥

आशीर्वादं मुनिर्दत्त्वा कृपारसमहोदधिः। अनुग्रहार्थं भूपस्य प्रारेभे धर्मदेशनाम् ॥४६४॥
राजन्नसारे संसारे सारमन्यन्न किञ्चन। सारोऽस्ति धर्म्म एवैकः सरोजमिव कर्दमे ॥४६५॥
शरीरं यौवनं लक्ष्मीः स्वाम्यं मित्राणि बान्धवः। सर्वमप्यनिलोद्धूतपताकाञ्चलचञ्चलम् ॥४६६॥
बहिरङ्गान् द्विषोऽजैषीर्य्यथा साधयितुं महीम्। अन्तरङ्गान् जय तथा मोक्षसाधनहेतवे ॥४६७॥
गृहाण यतिधर्मं तत् पृथक्कृत्य त्यजापरम्। राजहंसो हि गृह्णाति विभज्य क्षीरमम्भसः ॥४६८॥
ब्रह्मदत्तस्ततोऽवादीद् दिष्ट्या दृष्टोऽसि बान्धव। इयं तवैव राज्यश्रीर्भुङ्क्ष्व भोगान् यथारुचि ॥४६९॥
तपसो हि फलं भोगाः सन्ति ते किं तपस्यसि। उपक्रमेत को नाम स्वतः सिद्धे प्रयोजने ॥४७०॥
मुनिरूचे ममाप्यासन् धनदस्येव सम्पदः। मया तास्तृणवत्त्यक्ता भवभ्रमणभीरुणा ॥४७१॥
सौधर्मात् क्षीणपुण्योऽस्मिन्नागतोऽसि महीतले। इतोऽपि क्षीणपुण्यः सन् राजन् मा गा अधोगतिम् ॥४७२॥
आर्य्ये देशे कुले श्रेष्ठे मानुष्यं प्राप्य मोक्षदम्। साधयस्यमुना भोगान् सुधया पायुशौचवत् ॥४७३॥
स्वर्गाच्च्युत्वा क्षीणपुण्यौ भ्रान्तावावां कुयोनिषु। यथा तथा स्मरन् राजन् किं बाल इव मुह्यसि ॥४७४॥
तेनैवं बोध्यमानोऽपि नाबुद्ध वसुधाधवः। कुतः कृतनिदानानां बोधिबीजसमागमः ॥४७५॥
तमबोध्यतमं बुद्ध्वा जगाम मुनिरन्यतः। कालादिष्टाहिना दष्टे कियत्तिष्ठन्ति मान्त्रिकाः ॥४७६॥
घातिकर्मक्षयात् प्राप्य केवलज्ञानमुत्तमम्। भवोपग्राहिकर्माणि हत्वा प्राप परं पदम् ॥४७७॥

ब्रह्मदत्तोऽपि संसारसुखानुभवलालसः । सप्तातिवाहयामास शतानि शरदां क्रमात् ॥४७८॥
कदाचित् प्राक्परिचितो द्विजः कश्चिज्जगाद तम् । चक्रवर्त्तिन् स्वयं भुङ्क्षे यत् तन्मे देहि भोजनम् ॥४७९॥
ब्रह्मदत्तोऽप्यवोचत्तं मदन्नं द्विज दुर्जरम् । चिरेण जीर्य्यमाणं तु महोन्मादाय जायते ॥४८०॥
कदर्य्योऽस्यन्नदानेऽपि धिक् त्वामिति वदन् द्विजः । अभोजि सकुटुम्बोऽपि भूभुजा भोजनं निजम् ॥४८१॥
निशायामथ विप्रस्य बीजादिव तदोदनात् । शतशाखः स्मरोन्मादतरुः प्रादुरभूद् भृशम् ॥४८२॥ 5
अज्ञातजननी-जामि-स्नुषाव्यतिकरं मिथः । पशुवत् सहपुत्रोऽपि विप्रः प्रववृते रते ॥४८३॥
ततो विरामे यामिन्या द्विजो गृहजनश्च सः । ह्रिया दर्शयितुं स्वास्यमन्योन्यमपि नाऽशकत् ॥४८४॥
क्रूरेणानेन राज्ञाऽस्मि सकुटुम्बो विडम्बितः । चिन्तयन्नित्यमर्षेण नगरान्निरगाद् द्विजः ॥४८५॥
दूरादश्वत्थपत्राणि काणयन् शर्कराकणैः । तेन कश्चिदजापालो ददृशे भ्रमता बहिः ॥४८६॥
मद्वैरसाधनायाऽलमसाविति विमृश्य सः । तं मूल्येनेव सत्कारेणाऽऽदायैवमवोचत ॥४८७॥ 10
राजमार्गे गजारूढो यः श्वेतच्छत्रचामरः । याति कृष्ये दृशौ तस्य त्वया प्रक्षिप्य गोलिके ॥४८८॥
विप्रवाचमजापालः प्रतिपेदे तथैव ताम् । पशुवत् पशुपाला हि न विमृश्यविधायिनः ॥४८९॥
सोऽथ कुड्यान्तरे स्थित्वा समं प्रक्षिप्य गोलिके । अस्फोटयद्[1] दृशौ राज्ञो नाज्ञा लङ्घ्या विधेः खलु ॥४९०॥
सोऽङ्गरक्षैरजापालः प्राप्तः श्येनैरिव द्विकः[2] । हन्यमानस्तमेवाख्यद्विप्रं विप्रियकारकम् ॥४९१॥

१ —ख. च. छ. । आस्फो° शां. खं. मु. ॥ २ द्विजः शां. । द्विकैः खं. ॥



॥२४९॥

तच्छ्रुत्वा पार्थिवोऽवोचद्धिग्[1] धिग् जातिर्द्विजन्मनाम्। यत्रैते भुञ्जते पापास्तत्र भञ्जन्ति भाजनम् ॥४९२॥
यः स्वामीयति दातारं दत्तं तस्मै वरं शुने। न जातु दातुमुचितं कृतघ्नानां द्विजन्मनाम् ॥४९३॥
वञ्चकानां नृशंसानां श्वापदानां पलादिनाम्। सृष्टिं द्विजानां योऽकार्षीन्निग्राह्यः प्रथमं हि सः ॥४९४॥
इति जल्पन्ननल्पक्रुत् पृथ्वीपतिरघातयत्। सपुत्र-बन्धु-मित्रं तं विप्रं मशकमुष्टिवत् ॥४९५॥
दृशोरन्धीकृतस्तेन हृदयेऽन्धीकृतः क्रुधा। विप्रान् सोऽघातयत् सर्वान् पुरोधःप्रभृतीनपि ॥४९६॥
सोऽमात्यमादिदेशैवं नेत्रैरेषां द्विजन्मनाम्। विशालं स्थालमापूर्य्य निधेहि पुरतो मम ॥४९७॥
रौद्रमध्यवसायं तं राज्ञो विज्ञाय मन्त्र्यपि। श्लेष्मातकफलैः स्थालं पूरयित्वा पुरो न्यधात् ॥४९८॥
मुमुदे ब्रह्मदत्तोऽपि पाणिना संस्पृशन् मुहुः। विप्राणां लोचनैः स्थालं साधु पूर्णमिति ब्रुवन् ॥४९९॥
स्पर्शे स्त्रीरत्नरूपायाः पुष्पवत्यास्तथा न हि। यथाऽऽसीद् ब्रह्मदत्तस्य तत्स्थालस्पर्शने रतिः ॥५००॥
न कदाचन स स्थालमपासारयदग्रतः। दुर्म्मदी मदिरापात्रमिव दुर्गतिकारणम् ॥५०१॥
विप्रनेत्रधियाऽमृद्नात् श्लेष्मातकफलानि सः। फलाभिमुखपापद्रोः सज्जयन्निव दोहदम् ॥५०२॥
तस्यानिवर्त्तको रौद्राध्यवसायोऽत्यवर्द्धत। अशुभं वा शुभं वाऽपि सर्वं हि महतां महत् ॥५०३॥
तस्यैवं वसुधेशस्य रौद्रध्यानानुबन्धिनः। पापपङ्कवराहस्य ययुर्वर्षाणि षोडश ॥५०४॥

१ धिग् जातिर्द्विजन्मनां शां.। धिग् जातिजन्मनां खं॥

यातेषु षोडशयुतेषु समाशतेषु सप्तस्वसौ क्षितिपतिः परिपूरितायुः ।
हिंसानुबन्धिपरिणामफलानुरूपां तां सप्तमीं नरकलोकभुवं जगाम ||५०५|| २७ ||

[ इति[1] ब्रह्मदत्तचक्रवर्त्तिकथानकम् ]

पुनरपि हिंसकान् निन्दति—

कुणिर्वरं वरं पङ्गुरशरीरी वरं पुमान् ।
अपि सम्पूर्णसर्वाङ्गो न तु हिंसापरायणः ||२८||

कुणिर्विकलपाणिः, वरमिति मनागिष्टे मन्तमव्ययम्, पङ्गुः पादविकलः, कुत्सितं शरीरमशरीरं नञः कुत्सार्थत्वात्, तद्विद्यते यस्य सोऽशरीरी कुष्ठी, विकलाङ्गाः कुणि-पङ्गु-कुष्ठिनः, ते हि विकलाङ्गत्वादेव हिंसामकुर्वन्तो मनाक् श्रेष्ठाः, सम्पूर्णसर्वाङ्गोऽपि कृतपरिकरबन्धं हिंसापरायणः पुमान्न तु श्रेष्ठः ||२८||

5

ननु रौद्रध्यानपरायणस्य या हिंसा सा नरकहेतुत्वाद् निन्द्याऽस्तु, या तु शान्तिकनिमित्तं प्रायश्चित्तभूता हिंसा या वा कुलक्रमायाता मत्स्यबन्धानामिव सा रौद्रध्यानरहितत्वान्न दोषायेत्याह—

10

हिंसा विघ्नाय जायेत विघ्नशान्त्यै कृताऽपि हि ।
कुलाचारधियाऽप्येषा कृता कुलविनाशनी ||२९||

१ एतदन्तर्गतः पाठो नास्ति शां. खं. ||

रौद्रध्यानमन्तरेणाऽप्यविवेकाल्लोभाद्वा या शान्तिनिमित्तं कुलक्रमाद्वा हिंसा सा न केवलं पापहेतुः, प्रत्युत विघ्न-शान्तिनिमित्तं क्रियमाणा समरादित्यकथोक्तस्य यशोधरजीवस्य सुरेन्द्रदत्तस्येव पिष्टमयकुक्कुटवधरूपा विघ्नाय जायेत कल्पेत, अस्मत्कुलाचारोऽयमिति बुद्ध्याऽपि कृता हिंसा[1] कुलमेव विनाशयति ॥२९॥

इदानीं कुलक्रमायातामपि हिंसां परिहरन् पुमान् प्रशस्य एवेत्याह—

अपि वंशक्रमायातां यस्तु हिंसां परित्यजेत् ।
स श्रेष्ठः सुलस इव कालसौकरिकात्मजः ॥३०॥

5

वंशः कुलम्, कुलक्रमायातामपि हिंसां यः परिहरेत् सः श्रेष्ठः प्रशस्यतमः, सुलस इव, तस्य विशेषणं काल-सौकरिकात्मजः, कालसौकरिको नाम सौनिकः, तस्यात्मजः पुत्रः। यदाह—

" अवि इच्छंति य मरणं न य परपीडं कुणंति मणसा वि ।
जे सुविइअसुगइपहा सोअरिअसुओ जहा सुलसो ॥ " [ ]

10

सुलसकथानकं सम्प्रदायगम्यम् । स चायम्—

महर्द्धि मगधेष्वस्ति पुरं राजगृहाभिधम् । तत्र श्री वीरपादाब्जभृङ्गोऽभूच्छ्रेणिको नृपः ॥१॥

१ हिंसा नास्ति खं. ॥

तस्य प्रियतमे नन्दा–चिल्लणे शीलभूषणे । अभूतां देवकी-रोहिण्याविवाऽऽनकदुन्दुभेः ॥२॥

नन्दाया[1] नन्दनो विश्वकुमुदानन्दचन्द्रमाः । नाम्नाऽभयकुमारोऽभूदुभयान्वयभूषणः ॥३॥

राजा तस्य परिज्ञाय प्रकृष्टं बुद्धिकौशलम् । ददौ सर्वाधिकारित्वं गुणा[2] हि गरिमास्पदम् ॥४॥

अन्यदा श्रीमहावीरो विहरन् परमेश्वरः । जगत्पूज्यः पुरे तस्मिन्नागत्य समवासरत् ॥५॥

श्रुत्वा स्वामिनमायातं जङ्गमं कल्पपादपम् । कृतार्थमानी तत्रागान्मुदितः श्रेणिको नृपः ॥६॥

यथास्थानं निषण्णेषु देवादिषु जगद्गुरुः । प्रारेभे दुरितध्वंसदेशनीं धर्म्मदेशनाम् ॥७॥

तदा कुष्ठगलत्कायः कश्चिदेत्य प्रणम्य च । निषसादोपतीर्थेशमलर्कं इव कुट्टिमे ॥८॥

ततो भगवतः पादौ निजपूयरसेन सः । निःशङ्कश्चन्दनेनेव चर्चयामास भूयसा ॥९॥

तद्वीक्ष्य श्रेणिकः क्रुद्धो दध्यौ वध्योऽयमुत्थितः । पापीयान् यज्जगद्भर्त्तर्य्येवमाशातनापरः ॥१०॥

अत्रान्तरे जिनेन्द्रेण क्षुते प्रोवाच कुष्ठिकः । म्रियस्वेत्यथ जीवेति श्रेणिकेन क्षुते सति ॥११॥

क्षुतेऽभयकुमारेण जीव वा त्वं म्रियस्व वा । कालसौकरिकेणापि क्षुते मा जीव मा मृथाः ॥१२॥

जिनं प्रति म्रियस्वेति वचसा रुषितो[3] नृपः । इतः स्थानादुत्थितोऽसौ ग्राह्य इत्यादिशद् भटान् ॥१३॥

देशनान्ते महावीरं नत्वा कुष्ठी समुत्थितः । रुरुधे श्रेणिकभटैः किरातैरिव सूकरः[4] ॥१४॥

१ नन्दायां मु. ॥ २ गुणो ख. ॥ ३ कुपितो खं. ॥ ४ शूकरः मु. ॥



5

10

॥२९३॥

स तेषां पश्यतामेव दिव्यरूपधरः क्षणात् । उत्पपाताम्बरे कुर्वन्नर्कबिम्बविडम्बनाम् ॥१५॥
पत्तिभिः कथिते राज्ञा क एष इति विस्मयात् । विज्ञप्तो भगवानस्मै देवोऽसावित्यचीकथत् ॥१६॥
पुनर्विज्ञपयामास सर्वज्ञमिति भूपतिः । देवः कथमभूदेष कुष्ठी वा केन हेतुना ॥१७॥
अथोचे भगवानेवमस्ति वत्सेषु विश्रुता । कौशाम्बी नाम पूस्तस्यां शतानीकोऽभवन्नृपः ॥१८॥
तस्यां नगर्यामेकोऽभून्नामतः सेडुको[1] द्विजः । सीमा सदा दरिद्राणां मूर्खाणामवधिः परः ॥१९॥
गर्भिण्याऽभाणि सोऽन्येद्युर्ब्राह्मण्या सूतिकर्म्मणे । भट्टानय घृतं मह्यं सह्या न ह्यन्यथा व्यथा ॥२०॥
सोऽप्यूचे तां प्रिये नास्ति मम कुत्रापि कौशलम् । येन किञ्चिल्लभे क्वापि कलाग्राह्या यदीश्वराः ॥२१॥
उवाच सा च तं भट्ट गच्छ सेवस्व पार्थिवम् । पृथिव्यां पार्थिवादन्यो न कश्चित् कल्पपादपः ॥२२॥
तथेति प्रतिपद्यासौ नृपं पुष्प-फलादिना । प्रवृत्तः सेवितुं विप्रो रत्नेच्छुरिव सागरम् ॥२३॥
कदाचिदथ कौशाम्बी चम्पेशेनाऽमितैर्बलैः । घनर्तुनेव मेघौघैररुध्यत समन्ततः ॥२४॥
सानीकोऽपि शतानीको मध्येकौशाम्बि तस्थिवान् । प्रतीक्षमाणः समयमन्तर्बिलमिवोरगः ॥२५॥
चम्पाधिपोऽपि कालेन बहुना सन्नसैनिकः । प्रावृषि स्वाश्रयं यातुं प्रवृत्तो राजहंसवत् ॥२६॥
तदा पुष्पार्थमुद्याने गतः सेडुक[2] ऐक्षत । तं क्षीणसैन्यं प्रत्यूषे निष्प्रभोडुमिवोडुपम् ॥२७॥

---

१ सेदुको शां. ॥ २ सेदुक शां. ॥

तूर्णमेत्य शतानीकं व्यजिज्ञपद्साविदम् । याति क्षीणबलस्तेऽरिर्भग्नदंष्ट्र इवोरगः ॥२८॥
यद्यद्योत्तिष्ठसे तस्मै तदा ग्राह्यः सुखेन सः । बलीयानपि खिन्नः सन्नखिन्नेनाभिभूयते ॥२९॥
तद्वचः साधु मन्वानो राजा सर्वाभिसारतः । निःससार शरासारसारनासीरदारुणः ॥३०॥
ततः पश्चादपश्यन्तो नेशुश्चम्पेशसैनिकाः । अचिन्तिततडित्पाते को वीक्षितुमपि क्षमः ॥३१॥
चम्पाधिपतिरेकाङ्गः कान्दिशीकः पलायितः । तस्य हस्त्यश्वकोशादि कौशाम्बीपतिरग्रहीत् ॥३२॥ 5
हृष्टः प्रविष्टः कौशाम्बीं शतानीको महामनाः । उवाच सेडुकं विप्रं ब्रूहि तुभ्यं ददामि किम् ॥३३॥
विप्रस्तमूचे याचिष्ये पृष्ट्वा निजकुटुम्बिनीम् । पर्यालोचपदं नान्यो गृहिणां गृहिणीं विना ॥३४॥
भट्टः प्रहृष्टो भट्टिन्यै तदशेषं शशंस सः । चेतसा चिन्तयामास सा चैवं बुद्धिशालिनी ॥३५॥
यद्यमुना[1] ग्राहयिष्ये नृपाद् ग्रामादिकं तदा । करिष्यत्यपरान् दारान् मदाय विभवः खलु ॥३६॥
दिनं प्रत्येक आलोचस्तथाऽग्रासनभोजनम् । दीनारो दक्षिणायां च याच्य इत्यन्वशात् पतिम् ॥३७॥ 10
ययाचे तत्तथा विप्रो राजाऽदात् तद् वदन्निदम् । करङ्कोऽब्धिमपि प्राप्य गृह्णात्यात्मोचितं पयः ॥३८॥
प्रत्यहं तत्तथा लेभे प्राप सम्भावनां च सः । पुंसां राजप्रसादो हि वितनोति महार्घताम् ॥३९॥
राजमान्योऽयमित्येष नित्यं लोकैर्न्यमन्त्र्यत । यस्य प्रसन्नो नृपतिस्तस्य कः स्यान्न सेवकः ॥४०॥
अग्रे भुक्तं वालयित्वा[2] बुभुजेऽनेकशोऽप्यसौ । प्रत्यहं दक्षिणालोभाद्धिग्धिग्लोभो[3] द्विजन्मनाम् ॥४१॥

१ यद्यमुं ग्राहयिष्यामि नृपा° शां. ॥ २ चालयित्वा मु. । वमयित्वा त्रिषष्टि० १० । ९ । ९२ ॥ ३ °द्धिग्जीवितं द्विजन्मनाम् खं. ॥ 15

॥२५५॥

उपाचीयत विप्रोऽसौ विविधैर्दक्षिणाधनैः। प्रासरत् पुत्र-पौत्रैश्च पादैरिव वटद्रुमः ॥४२॥
स तु नित्यमजीर्णान्नवमनादूर्ध्वगै रसैः। आमैरभूद् दूषितत्वगश्वत्थ इव लाक्षया ॥४३॥
कुष्ठी क्रमेण सञ्जज्ञे शीर्णघ्राणां-ऽह्रि-पाणिकः। तथैवाऽभुक्त राजाग्रे सोऽतृप्तो हव्यवाडिव ॥४४॥
एकदा मन्त्रिभिर्भूपो विज्ञप्तो देव कुष्ठ्यसौ। सञ्चरिष्णुः कुष्ठरोगो नास्य योग्यमिहाशनम्[1] ॥४५॥
सन्त्यस्य नीरुजः पुत्रास्तेभ्यः कोऽप्यत्र भोज्यताम्। व्यङ्गितप्रतिमायां[2] हि स्थाप्यते प्रतिमान्तरम् ॥४६॥
एवमस्त्विति राज्ञोक्तेऽमात्यैर्विप्रस्तथोदितः। स्वस्थानेऽस्थापयत् पुत्रं गृहे तस्थौ स्वयं पुनः ॥४७॥
मधुमण्डकवत् क्षुद्रमक्षिकाजालमालितः। पुत्रैर्गृहादपि बहिः कुटीरेऽक्षेपि स द्विजः ॥४८॥
बहिःस्थितस्य तस्याज्ञां पुत्रा अपि न चक्रिरे। दारुपात्रे ददुः किन्तु शुनकस्येव भोजनम् ॥४९॥
जुगुप्समाना वध्वोऽपि तं भोजयितुमाययुः। तिष्ठिवुर्वलितग्रीवं मोटनोत्पुटनासिकाः ॥५०॥
अथ सोऽचिन्तयद्विप्रः श्रीमन्तोऽमी मया कृताः। एभिर्मुक्तोऽस्म्यनादृत्य तीर्णाम्भोभिस्तरण्डवत् ॥५१॥
तोषयन्ति न वाचाऽपि रोषयन्त्येव माममी। कुष्ठी रुष्टो न सन्तुष्टोऽभव्य इत्यनुलापिनः[3] ॥५२॥
जुगुप्सन्ते यथैते मां जुगुप्स्याः स्युरमी[4] अपि। यथा तथा करिष्यामीत्यालोच्यावोचदात्मजान् ॥५३॥
उद्विग्नो जीवितस्याहं कुलाचारस्त्वसौ सुताः। मुमूर्षुभिः कुटुम्बस्य देयो मन्त्रोक्षितः पशुः ॥५४॥

१ °हासनम् खं. ॥ २ न्यंगित° खं. ख. ग. ङ. त्रिषष्टि० १० । ९ । ९७ ॥ ३ °त्यपलापिनः त्रिषष्टि० १० । ९ । १०३ ॥
४ °स्त्ययं खं. ॥

5 10 15

पशुरानीयतामेक इत्याकर्ण्यानुमोदिनः । आनिन्यिरे तेऽथ पशुं पशुवन्मन्दबुद्धयः ॥५५॥
उद्वर्त्योद्वर्त्य च स्वाङ्गमनेन[1] व्याधिवर्त्तिकाः । तेनाचारि पशुस्तावद्यावत् कुष्ठी बभूव सः ॥५६॥
ददौ विप्रः स्वपुत्रेभ्यस्तं हत्वा पशुमन्यदा । तदाशयमजानन्तो मुग्धा बुभुजिरे च ते ॥५७॥
तीर्थे स्वार्थाय यास्यामीत्यापृच्छ्य तनयान् द्विजः । ययावूर्द्ध्वमुखोऽरण्यं शरण्यमिव चिन्तयन् ॥५८॥
अत्यन्ततृषितः सोऽटन्नटव्यां पयसे चिरम् । अपश्यत् सुहृदमिव देशे नानाद्रुमे ह्रदम् ॥५९॥ 5
नीरं तीरतरुस्रस्तपत्र-पुष्प-फलं द्विजः । ग्रीष्ममध्यन्दिनार्कांशुक्वथितं क्वाथवत् पपौ ॥६०॥
सोऽपाद्यथा यथा वारि भूयो भूयस्तृषातुरः । तथा तथा विरेकोऽस्य बभूव कृमिभिः सह ॥६१॥
स नीरुगासीत् कतिभिरप्यहोभिर्[2]ह्रदाम्भसा । मनोज्ञसर्वावयवो वसन्तेनेव पादपः ॥६२॥
आरोग्यहृष्टो ववले विप्रः क्षिप्रं स्ववेश्मने । पुंसां वपुर्विशेषोत्थः[3] शृङ्गारो जन्मभूमिषु ॥६३॥
स पुर्यां प्रविशन् पौरैर्ददृशे जातविस्मयैः । देदीप्यमानो निर्मुक्तनिर्मोक इव पन्नगः ॥६४॥ 10
पौरैः पृष्टः पुनर्जात इवोल्लाघः कथं न्वसि । देवताराधनादस्मीत्याचचक्षे स[4] तु द्विजः ॥६५॥
स गत्वा स्वगृहेऽपश्यत् स्वपुत्रान् कुष्ठिनो मुदा । मयाऽवज्ञाफलं साधु दत्तमित्यवदच्च तान् ॥६६॥
सुतास्तमेवमूचुश्च भवता तात निर्घृणम् । विश्वस्तेषु किमस्मासु द्विषेवेदमनुष्ठितम् ॥६७॥

१ °मनेन खं. ॥ २ कतिथैर° खं । क्वथितैर° शां. ॥ ३ °त्थश्रृ° शां. मु. ॥ ४ स नु खं. ॥

लोकैराकुश्यमानोऽसौ राजन्नागत्य ते पुरम्। आश्रयज्जीविकाद्वारं द्वारपालं निराश्रयः ॥६८॥
तदाऽत्र वयमायाता द्वाःस्थोऽस्मद्धर्मदेशनाम्। श्रोतुं प्रचलितोऽमुश्चत् तं विप्रं निजकर्मणि ॥६९॥
द्वारोपविष्टः स द्वारदुर्गाणामग्रतो बलिम्। जन्मादृष्टमिवाभुङ्क्त यथेष्टं कष्टितः क्षुधा ॥७०॥
आकण्ठं परिभुक्तान्नदोषाद् ग्रीष्मोष्मणा च सः। उत्पन्नया तृषाऽकारि मरुपान्थ इवाकुलः ॥७१॥
तत्तु द्वाःस्थ[1]भिया स्थानं त्यक्त्वा नाऽगात् प्रपादिषु। असौ जलचरान् जीवान् धन्यान् मेने तृषातुरः ॥७२॥ 5
आरटन् वारि वारीति स तृषार्त्तो व्यपद्यत। इहैव नगरद्वारवाप्यामजनि दर्दुरः ॥७३॥
विहरन्तो वयं भूयोऽप्यागमामेह पत्तने। लोकोऽस्मद्वन्दनार्थं च प्रचचाल ससम्भ्रमः ॥७४॥
अस्मदागमनोदन्तं श्रुत्वाऽम्भोहारिणीमुखात्। स भेकोऽचिन्तयदिदं क्वाप्येवं श्रुतपूर्व्य[2]हम् ॥७५॥
ऊहापोहं ततस्तस्य कुर्वाणस्य मुहुर्मुहुः। स्वप्नस्मरणवज्जातिस्मरणं तत्क्षणादभूत् ॥७६॥
स दध्यौ दर्दुरश्चैवं द्वारे संस्थाप्य मां पुरा। द्वाःस्थो यं वन्दितुमगात् स आगाद् भगवानिह ॥७७॥ 10
यथैते यान्ति तं द्रष्टुं लोका यास्याम्यहं तथा। सर्वसाधारणी गङ्गा न हि कस्यापि पैतृकी ॥७८॥
ततोऽस्मद्वन्दनाहेतोरुत्प्लुत्योत्प्लुत्य सोऽध्वनि। आयांस्तेऽश्वखुरक्षुण्णो भेकः पञ्चत्वमासवान् ॥७९॥
दर्दुराङ्कोऽयमुत्पेदे देवोऽस्मद्भक्तिभावितः। भावना हि फलत्येव विनाऽनुष्ठानमप्यहो ॥८०॥

---

१ द्वास्थ° खं. ॥ २ °पूर्वाहं खं. ॥

इन्द्रः सदस्युवाचेदमुपश्रेणिकमार्हताः । अश्रद्दधानस्तदसौ त्वत्परीक्षार्थमागतः ॥८१॥
गोशीर्षचन्दनेनायमानर्च्च चरणौ मम । त्वद्दृष्टिमोहनायाऽन्यत् सर्वं[1] व्यधित वैक्रियम् ॥८२॥
अथोचे श्रेणिकः स्वामिन्नमङ्गल्यं प्रभोः क्षुते । एषोऽन्येषां तु मङ्गल्या-ऽमङ्गल्यानि जगाद किम् ॥८३॥
अथाचचक्षे भगवान् किं भवेऽद्यापि तिष्ठसि । शीघ्रं मोक्षं प्रयाहीति मां म्रियस्वेत्युवाच सः ॥८४॥
स त्वां जगाद जीवेति जीवतस्ते यतः सुखम् । नरके नरशार्दूल मृतस्य हि गतिस्तव ॥८५॥
जीवन् धर्म्मं विधत्ते स्याद्विमानेऽनुत्तरे मृतः । जीव म्रियस्व वेत्येवं तेनाऽभयमभाषत ॥८६॥
जीवन् पापपरो मृत्वा सप्तमं नरकं व्रजेत् । कालसौकरिकस्तेन प्रोचे मा जीव मा मृथाः ॥८७॥
तच्छ्रुत्वा श्रेणिको नत्वा भगवन्तं व्यजिज्ञपत् । त्वयि नाथे जगन्नाथ कथं मे नरके गतिः ॥८८॥
बभाषे भगवानेवं पुरा त्वमसि भूपते । बद्धायुर्नरके तेन तत्रावश्यं गमिष्यसि ॥८९॥
शुभानामशुभानां वा फलं प्राग्बद्धकर्मणाम् । भोक्तव्यं तद् वयमपि नान्यथा कर्त्तुमीश्महे ॥९०॥
आद्यो भाविजिनचतुर्विंशतौ त्वं भविष्यसि । पद्मनाभाभिधो राजन् खेदं मा स्म कृथास्ततः ॥९१॥
श्रेणिकोऽथावदन्नाथ किमुपायोऽस्ति कोऽपि सः । नरकाद् येन रक्ष्येऽहमन्धकूपादिवान्धलः ॥९२॥
भगवान् व्याजहारेदं साधुभ्यो भक्तिपूर्वकम् । ब्राह्मण्या चेत् कपिलया भिक्षां दापयसे मुदा ॥९३॥

[1] मांग° खं ॥

5

10

कालसौकरिकात् सूनां विमोचयसि वा यदि। तदा ते नरकान्मोक्षो राजन् जायेत नान्यथा ॥९४॥
सम्यगित्युपदेशं स हृदि हारमिवोद्वहन्। प्रणम्य श्रीमहावीरं चचाल स्वाश्रयं प्रति ॥९५॥
अत्रान्तरे परीक्षार्थं दर्दुराङ्केन भूपतेः। अकार्यं विदधत् साधुः कैवर्त्त इव दर्शितः ॥९६॥
तं दृष्ट्वा प्रवचनस्य मालिन्यं मा भवत्विति। निवार्याऽकार्य्यतः साम्ना स्वगृहं प्रत्यगान्नृपः ॥९७॥
स देवो दर्शयामास साध्वीमुदरिणीं पुनः। नृपः शासनभक्तस्तां जुगोप निजवेश्मनि ॥९८॥
प्रत्यक्षीभूय देवोऽपि तमूचे साधु साधु भोः। सम्यक्त्वाच्चाल्यसे नैव पर्वतः स्वपदादिव ॥९९॥
नृनाथ यादृशं शक्रः सदसि त्वामचीकथत्। दृष्टस्तादृश एवासि मिथ्यावाचो न तादृशाः ॥१००॥
दिवानिर्मितनक्षत्रश्रेणिकं श्रेणिकाय[1] सः। व्यश्राणयत् ततो हारं गोलकद्वितयं तथा ॥१०१॥
योऽमुं सन्ध्यास्यते हारं त्रुटितं स मरिष्यति। इत्युदीर्य्य तिरोऽधत्त स्वप्नदृष्ट इवामरः ॥१०२॥
दिव्यं देव्यै ददौ हारं चेल्लणायै मनोहरम्। गोलकद्वितयं तत्तु नन्दायै नृपतिर्मुदा ॥१०३॥
दानस्याऽस्याऽस्मि योग्येति सेर्ष्यं[2] नन्दा मनस्विनी। आस्फाल्य स्फोटयामास स्तम्भे तद् गोलकद्वयम् ॥१०४॥
एकस्मात् कुण्डलद्वन्द्वं चन्द्रद्वन्द्वमिवामलम्। देदीप्यमानमन्यस्मात् क्षौमयुग्मं च निःसृतम् ॥१०५॥
तानि दिव्यानि रत्नानि नन्दा सानन्दमग्रहीत्। अनभ्रवृष्टिवल्लाभो महतां स्यादचिन्तितः ॥१०६॥

१ श्रेणिकं च सः-च.॥ २ सेर्ष्या शां.॥


5
10

राजा ययाचे कपिलां साधुभ्यः श्रद्धयाऽन्विता । भिक्षां प्रयच्छ निर्भिक्षां त्वां करिष्ये धनोच्चयैः[१] ॥१०७॥
कपिलोचे विधत्से मां सर्वां स्वर्णमयीं यदि । हिनस्सि वा तथाप्येतदकृत्यं न करोम्यहम् ॥१०८॥
कालसौकरिकोऽप्यूचे राज्ञा सूनां विमुञ्च यत् । दास्येऽहमर्थमर्थस्य लोभात् त्वमसि सौनिकः ॥१०९॥
सूनायां ननु को दोषो यया जीवन्ति मानवाः । तां न जातु त्यजामीति कालसौकरिकोऽवदत् ॥११०॥
सूनाव्यापारमेषोऽत्र करिष्यति कथं न्विति । नृपः क्षिप्त्वाऽन्धकूपे तमहोरात्रमधारयत् ॥१११॥
अथ विज्ञपयामास गत्वा भगवते नृपः । सोऽत्याजि सौनिकः सूनामहोरात्रमिदं विभो ॥११२॥
सर्वज्ञोऽभिदधे राजन्नन्धकूपेऽपि सोऽवधीत् । शतानि पञ्च महिषान् स्वयं निर्माय मृण्मयान्[२] ॥११३॥
तद् गत्वा श्रेणिकोऽपश्यत् स्वयमुद्विविजे ततः । धिगहो मे पुरा कर्म्म, नान्यथा भगवद्गिरः ॥११४॥
पञ्च पञ्च शतान्यस्य महिषान्निघ्नतोऽन्वहम् । कालसौकरिकस्योच्चैः पापराशिरवर्द्धत ॥११५॥
इहापि रोगास्तस्याऽऽसन् दारुणैरतिदारुणाः । पर्यन्तनरकप्राप्तेरुपर्युत्कलितैरघैः ॥११६॥
हा तात हा मातरिति व्याधिबाधाकदर्थितः । वध्यमान[३]सूकरवत् कालसौकरिकोऽरटत् ॥११७॥
सोऽङ्गना-तूलिका-पुष्प-वीणा-क्वणित-मार्जिताः[४] । दृष्टि-त्वग्-नासिका-कर्ण-जिह्वाशूलान्यमन्यत ॥११८॥
ततस्तस्य सुतस्तादृक् स्वरूपं सुलसोऽखिलम् । जगाद जगदाप्तायाऽभयायाऽभयदायिने ॥११९॥

१ °च्चकैः मु. ॥ २ मृन्मयान्-प्रतिषु ॥ ३ °मानः शूकरवत् मु. ॥ ४ मार्जिता सुगन्धिद्रव्यैः सस्कृतं दधि ॥

ऊचेऽभयस्त्वत्पिता यच्चक्रे तस्येदृशं फलम्। सत्यमत्युग्रपापानां फलमत्रैव लभ्यते ॥१२०॥
तथाऽप्यस्य कुरु प्रीत्यै विपरीतेन्द्रियार्थताम्। अमेध्यगन्धविध्वंसे भवेन्नृजलमौषधम्[1] ॥१२१॥
अथैत्य सुलसस्तं तु कटुतिक्तान्यभोजयत्[2]। अपाययदपोऽत्युष्णास्तप्तत्रपुसहोदराः ॥१२२॥
भूयिष्ठविष्ठया सुष्ठु सर्वाङ्गीणं व्यलेपयत्। ऊर्ध्वकण्टकमय्यां च शय्यायां पर्यस्वपत् ॥१२३॥
श्रावयामास चक्रीवत्-क्रमेलकरवान् कटून्। रक्षो-वेताल-कङ्कालघोररूपाण्यदर्शयत् ॥१२४॥
तैः प्रीतः सोऽब्रवीत् पुत्रं चिरात् स्वाद्वद्य भोजनम्। शीतं वारि मृदुः शय्या सुगन्धि च विलेपनम् ॥१२५॥
शब्दः श्रुतिसुधाऽमूनि रूपाण्येकं सुखं दृशोः। भक्तेनापि त्वयाऽस्मात् किं वञ्चितोऽस्मि चिरं सुखात् ॥१२६॥
तच्छ्रुत्वा सुलसो दध्याविदमत्रैव जन्मनि। अहो पापफलं घोरं नरके किं भविष्यति ॥१२७॥
सुलसे चिन्तयत्येवं स मृत्वा प्राप दारुणम्। सप्तमे नरके स्थानमप्रतिष्ठानसंज्ञितम् ॥१२८॥
कृतौर्ध्वदेहिको[3]ऽभाणि सुलसः स्वजनैरिति। पितुः श्रय पदं स्याम सनाथा हि त्वया यथा ॥१२९॥
सुलसस्तानुवाचेदं करिष्ये कर्म न ह्यदः। किञ्चिल्लेभे फलं पित्राऽप्यत्रैवाऽमुष्य कर्मणः ॥१३०॥
यथा मम प्रियाः प्राणास्तथाऽन्यप्राणिनामपि। स्वप्राणिताय धिगहो परप्राणप्रमारणम्[4] ॥१३१॥
हिंसाजीविकया जीवेत् कः प्रेक्ष्य फलमीदृशम्। मरणैकफलं ज्ञात्वा किंपाकफलमत्ति कः ॥१३२॥

१ भवेन्न जल° मु.। नृजलं मूत्रम् ॥ २ कटुत्यक्ता° शां. खं. ॥ ३ कृतो° प्रतिषु ॥ ४ प्रमापणम् शां. ॥

अथ ते स्वजनाः प्रोचुः पापं प्राणिवधेऽत्र यत्। तद्विभज्य ग्रहीष्यामो हिरण्यमिव गोत्रिणः ॥१३३॥
त्वमेकं महिषं हन्या हनिष्यामोऽपरान् वयम्। अत्यल्पमेव ते पापं भविष्यति ततो ननु ॥१३४॥
आदाय सुलसः पित्र्यं कुठारं पाणिना ततः। तेनाऽऽजघ्ने निजां जङ्घां मूर्छितो निपपात च ॥१३५॥
लब्धसंज्ञस्ततोऽवादीत् साक्रन्दः[1] करुणस्वरम्। हा! कुठारप्रहारेण कठोरेणास्मि पीडितः ॥१३६॥
गृह्णीत बन्धवो यूयं विभज्य मम वेदनाम्। स्यामल्पवेदनो येन, पीडितं पात पात माम् ॥१३७॥
सुलसं खिन्नमनसस्ते च प्रतिबभाषिरे। पीडा कस्यापि केनापि ग्रहीतुं शक्यते किमु ॥१३८॥
सुलसो व्याजहारेदं यद् व्यथामियतीमपि। न मे ग्रहीतुमीशिध्वे, तत् कथं नरकव्यथाम् ॥१३९॥
कृत्वा पापं कुटुम्बार्थे घोरां नरकवेदनाम्। एकोऽमुत्र सहिष्येऽहं, स्थास्यन्त्यत्रैव बान्धवाः ॥१४०॥
हिंसा तन्न करिष्यामि पैतृकीमपि[2] सर्वथा। पिता भवति यद्यन्धः किमन्धः स्यात् सुतोऽपि हि ॥१४१॥
एवं व्याहरमाणस्य सुलसस्यातिपीडया। प्रतिजागरणायाऽऽगादभयः श्रेणिकात्मजः ॥१४२॥
परिरभ्य बभाषे तमभयः साधु साधु भोः। सर्वं ते श्रुतमस्माभिः, प्रमोदाद्वयमागताः ॥१४३॥
पापात् पित्र्यादपक्रामन्[3] कर्दमादिव दूरतः। त्वमेकः श्लाघ्यसे हन्त पक्षपातो गुणेषु नः ॥१४४॥
सुलसं पेशलैरेवमालापैर्धर्मवत्सलः। अनुमोद्य निजं धाम[4] जगाम स नृपात्मजः ॥१४५॥

१ साक्रन्दकरु° खं.। स क्रन्दन् करु° ड। स क्रन्दन् दारु° च॥ २ पैत्रिकी° खं. मु.॥ ३ पैत्र्या° शां. मु.॥ ४ धाम स जगाम मु.॥

॥२६३॥

स्वाननादृत्य सुलसो गृहीतद्वादशव्रतः। दौर्गत्यभीतोऽस्थाज्जैनधर्मे रोर इवेश्वरे ॥१४६॥
कालसौकरिकसूनुरिवैवं यस्त्यजेत् कुलभवामपि हिंसाम्।
स्वर्गसम्पददवीयसि तस्य श्रेयसामविषयो न हि किञ्चित् ॥ १४७ ॥ ३० ॥

अथ हिंसां कुर्वन्नपि दमादिभिः पुण्यमर्जयत्येव पापं च विशोधयेदित्याह—

दमो देव-गुरूपास्तिर्दानमध्ययनं तपः।
सर्वमप्येतदफलं हिंसां चेन्न परित्यजेत् ॥३१॥

दम इन्द्रियजयः, देव-गुरूपास्तिर्देवसेवा गुरुसेवा च, दानं पात्रेषु द्रव्यविश्राणनम्, अध्ययनं धर्मशास्त्रादेः पठनम्, तपः कृच्छ्र-चान्द्रायणादि। एतद्दमादि सर्वमपि, न तु किञ्चिदेव, अफलं पुण्यार्जनपापक्षयादिफलरहितम्, चेद्यदि हिंसां शान्तिकहेतुं कुलक्रमायातां वा न परित्यजेन्न परिहरेत्। एवं तावन्मांसलुब्धानां शान्तिकार्थिनां कुलाचारमनुपालयतां च या हिंसा सा प्रतिषिद्धा ॥३१॥

इदानीं शास्त्रीयां हिंसां प्रतिषेधन् शास्तॄनेवाऽऽक्षिपति—

विश्वस्तो मुग्धधीर्लोकः पात्यते नरकावनौ।
अहो नृशंसैर्लोभान्धैर्हिंसाशास्त्रोपदेशकैः ॥३२॥

||२६५||

हिंसाशास्त्रं वक्ष्यमाणम्, तस्योपदेशका हिंसाशास्त्रोपदेशका मन्वादयः, तैः, किंविशिष्टैः? नृशंसैर्निर्दयैः। दयावान् हि कथं हिंसाशास्त्रमुपदिशेत्। नृशंसत्वे हेतुमाह — लोभान्धैः मांसलोभादन्धैः स्वाभाविकविवेक-विवेकिसंसर्गचक्षूरहितैः। यदाह—

एकं हि चक्षुरमलं सहजो विवेकस्तद्वद्भिरेव सह संवसतिर्द्वितीयम्।

एतद् द्वयं भुवि न यस्य स तत्त्वतोऽन्धस्तस्यापमार्गचलने[1] खलु कोऽपराधः? ||१||

अहो इति निर्वेदे, यतो विश्वस्तो विस्रब्धः[2], विश्वस्तत्वे हेतुर्मुग्धधीः। चतुरबुद्धिर्हि कृत्याकृत्यं विवेचयन् न प्रतारकवचस्सु विश्वसिति। लोकः प्राकृतो जनः पात्यते क्षेप्यते नरकावनौ नरकपृथ्व्याम् ||३२||

हिंसाशास्त्रमेव यदाहुरित्यनेन प्रस्तुत्य निर्दिशति—

"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयंभुवा।

यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ||३३||

यज्ञार्थं यज्ञनिमित्तं स्वयंभुवा प्रजापतिना पशवः सृष्टा उत्पादिताः स्वयमेवेत्यर्थवादः। अस्य जगतो विश्वस्य यज्ञो ज्योतिष्टोमादिः भूत्यै, भूतिर्विभवः, तस्मात्तत्र यो वधः स न वधो विज्ञेयः, हिंसाजन्यस्य पापस्यानुत्पत्तेरेवमुच्यते। कथं पुनर्यज्ञे हिंसादोषो नास्ति? उच्यते—हिंसा हिंस्यमानस्य महानपकारः, प्राणवियोगेन पुत्र-दार-धनादिवियो-

---

१ °स्तस्यापि मार्गचलने शां. खं. || २ विश्रब्धः—शां. मु. ||



||२६५||

गेन वा सर्वानर्थोत्पत्तेर्दुष्कृतस्य वा नरकादिफलविपाकस्य प्रत्यासत्तेः । यज्ञे तु हतानामुपकारः, नापकारः नरकादिफलानुत्पत्तेः ॥३३॥

एतदेवाह—

[1]औषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितिं पुनः ॥३४॥

[2]औषध्यो दर्भादयः, पशवश्छागादयः, वृक्षा यूप्याः[3], तिर्यञ्चो गवाश्वादयः, पक्षिणः कपिञ्जलादयः, यज्ञार्थं यज्ञनिमित्तं निधनं विनाशं प्राप्ताः । यद्यपि केषाञ्चित्तत्र निधनं नास्ति तथापि या च यावती च पीडा विद्यत इति सा निधनशब्देन लक्ष्यते । प्राप्नुवन्ति यान्ति उच्छ्रितिमुत्कर्षं देवगन्धर्वयोनित्वमुत्तरकुर्वादिषु दीर्घायुष्कादि च ॥३४॥

यावत्यः काश्चिच्छास्त्रे चोदिता हिंसास्ताः संक्षिप्य दर्शयति—

मधुपर्के च यज्ञे च पितृदैवतकर्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥३५॥

मधुपर्कः क्रियाविशेषः, तत्र गोवधो विहितः, यज्ञो ज्योतिष्टोमादिः, तत्र पशुवधो विहितः । पितरो दैवतानि यत्र कर्मण्यष्टकादौ तच्च श्राद्धम्, यद्वा पितॄणां दैवतानां च कर्म महायज्ञादि ॥३५॥

१-२ औष° खं. ॥ ३ यूपाः शां. । यूपाद्यः मु. ॥

एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः ।
आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम् ॥३६॥" [ मनुस्मृ० ५ । ३९–४२ ]

एतानर्थान् साधयितुं पशून् हिंसन् द्विज आत्मानं पशूंश्चोत्तमां गतिं स्वर्गा-ऽपवर्गलक्षणां गमयति प्रापयति, वेदतत्त्वार्थविदिति विदुषोऽधिकारित्वमाह ॥३६॥

हिंसाशास्त्रमनूद्य पुनस्तदुपदेशकानाक्षिपति—

ये चक्रुः क्रूरकर्माणः शास्त्रं हिंसोपदेशकम् ।
क्व ते यास्यन्ति नरके नास्तिकेभ्योऽपि नास्तिकाः ॥३७॥

ये मन्वादयः क्रूरं निर्घृणं कर्म येषां ते क्रूरकर्माणः शास्त्रं स्मृत्यादि हिंसाया उपदेशकं चक्रुः ते हिंसा-शास्त्रकर्त्तारः क्व नरके यास्यन्तीति विस्मयः । ते चास्तिकाभासा अपि नास्तिकेभ्योऽपि नास्तिकाः परमनास्तिका इत्यर्थः ॥३७॥

उक्तं चेत्यनेन संवादश्लोकमुपदर्शयति—

"वरं वराकश्चार्वाको योऽसौ प्रकटनास्तिकः ।
वेदोक्तितापसच्छद्मच्छन्नं रक्षो न जैमिनिः ॥३८॥" [ ]

॥२६७॥

वरमिति मनागिष्टो जैमिन्यपेक्षया, चार्वाको लौकायतिकः, वराक इति दम्भरहितत्वादनुकम्प्यः ।

तदेवाह—योऽसौ प्रकटनास्तिकः । जैमिनिस्तु न वरम्, कुतः ? वेदोक्तितापसच्छद्मच्छन्नं रक्षः सः । वेदोक्ति-रेव[1] तापसच्छद्म तापसवेषस्तेन छन्नं रक्षो राक्षसः, अयं हि वेदोक्तिं मुखे कृत्वा सकलप्राणिवञ्चनात् मायावी राक्षस इव । यच्चोक्तं 'यज्ञार्थं पशवः सृष्टाः, इति तद्वाङ्मात्रम्, निजनिजकर्मनिर्माणमाहात्म्येन नानायोनिषु जन्तवः समुत्पद्यन्त इति व्यलीकः कस्यचित् सृष्टिवादः । 'यज्ञोऽस्य भूत्यै सर्वस्य' इति त्वर्थवादः पक्षपातमात्रम् । 'वधोऽवधः' इति तूपहासपात्रं वचः । यज्ञार्थं विनिहतानां चौषध्यादीनां पुनरुच्छ्रयप्राप्तिः श्रद्दधानभाषितम्, अकृतसुकृतानां यज्ञ-वधमात्रेणोच्छ्रितगतिप्राप्त्ययोगात । अपि च यज्ञहननमात्रेण यदि उच्छ्रितगतिप्राप्तिस्तर्हि मातापित्रादीनामपि यज्ञे वधः किं न क्रियते । यदाहुः—

" नाहं स्वर्गफलोपभोगतृषितो नाभ्यर्थितस्त्वं मया, सन्तुष्टस्तृणभक्षणेन सततं साधो न युक्तं तव ।
स्वर्गं यान्ति यदि त्वया विनिहता यज्ञे ध्रुवं प्राणिनो, यज्ञं किं न करोषि मातृ-पितृभिः पुत्रैस्तथा बान्धवैः ॥" [ ]

मधुपर्कादिषु च हिंसा श्रेयसे नान्यत्रेति स्वच्छन्दभाषितम् । को हि विशेषो हिंसाया येनैका श्रेयस्करी नान्येति । पुण्यात्मानस्तु सर्वाऽपि हिंसा न कर्त्तव्येत्याहुः । यथा—

"सव्वे[2] जीवा वि इच्छंति जीविउं न मरिज्जिउं ।
तम्हा पाणिवहं घोरं निग्गंथा वज्जयंति णं ॥" [ दशवै० ६ । ११ ]

---

१ °रेय च ताप° खं. ॥ २ सर्वे जीवा अपीच्छन्ति जीवितुं न मर्तुम् ।तस्मात् प्राणिवधं घोरं निर्ग्रन्था वर्जयन्ति ॥

5 10 15

यत्तूक्तम् 'आत्मानं च पशूंश्चैव गमयत्युत्तमां गतिम्' इति तदतिमहासाहसिकादन्यः को वक्तुमर्हति ? । अपि नाम पशोरहिंस्रस्याऽकामनिर्जरयोत्तमगतिलाभः संभवेत्, द्विजस्य तु निशातकृपाणिकाप्रहारपूर्वं सौनिकस्येव निर्दयस्य हिंसतः कथमुत्तमगतिसंभावनाऽपि स्यात् ? ॥ ३८ ॥

एतदेव विशेषाभिधानपूर्वकमुपसंहरन्नाह—

देवोपहारव्याजेन यज्ञव्याजेन येऽथवा ।
घ्नन्ति जन्तून् गतघृणा घोरां ते यान्ति दुर्गतिम् ॥३९॥

देवा भैरव-चण्डिकादयः, तेभ्य उपहारो बलिः, स एव व्याजं छद्म, तेन, महानवमी-माघाष्टमी-चैत्राष्टमी-नमसितकादिषु देवपूजाच्छद्मना ये जन्तुघातं कुर्वन्ति ये च यज्ञव्याजेन गतघृणा निर्दयास्ते घोरां रौद्रां दुर्गतिं नरकादिलक्षणां यान्ति । अत्र देवोपहारव्याजेनेति विशेषाभिधानम्, यज्ञव्याजेनेत्युपसंहारः । अपि च निराबाधे धर्मसाधने स्वाधीने साबाधपराधीनधर्मसाधनपरिग्रहो न श्रेयान् । यदाहुः—

'अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्' [ ] इति ॥३९॥

एतदेवाह—

शम-शील-दयामूलं हित्वा धर्मं जगद्धितम् ।
अहो हिंसाऽपि धर्माय जगदे मन्दबुद्धिभिः ॥४०॥

शमः कषायेन्द्रियजयः, शीलं सुस्वभावता, दया भूतानुकम्पा, एतानि मूलं कारणं यस्य स तथा, धर्मोऽभ्युदय-निःश्रेयसकारणम्, तम्, किंविशिष्टम्? जगद्धितम्, हित्वा उपेक्ष्य, शम-शीलादीनि धर्मसाधनान्युपेक्ष्येत्यर्थः, अहो इति विस्मये, हिंसाऽपि धर्मसाधनबहिर्भूता धर्माय धर्मसाधनत्वेन मन्दबुद्धिभिरुक्ता, सर्वजनप्रसिद्धानि शम-शीलादीनि धर्मसाधनान्युपेक्ष्य अधर्मसाधनमपि हिंसां धर्मसाधनत्वेन प्रतिपादयतां परेषां व्यक्तैव मन्दबुद्धिता ॥४०॥

एवं तावल्लोभमूला शान्त्यर्था कुलक्रमायाता यज्ञनिमित्ता देवोपहारहेतुका च हिंसा प्रतिषिद्धा । पितृनिमित्ता अवशिष्यते, तां प्रतिषेधितुं परशास्त्रीयां षट्श्लोकीमनुवदति—

"हविर्यच्चिररात्राय यच्चानन्त्याय कल्पते ।
पितृभ्यो विधिवद्दत्तं तत् प्रवक्ष्याम्यशेषतः ॥४१॥

चिररात्रशब्दो दीर्घकालवचनः, यच्चानन्त्याय, केनचिद्धविषा दीर्घकाला तृप्तिर्जायते केनचिदनन्तैव, तदुभयं प्रवक्ष्यामि ॥४१॥

तिलैर्व्रीहि-यवैर्माषैरद्भिर्मूल-फलेन वा ।
दत्तेन मासं प्रीयन्ते विधिवत् पितरो नृणाम् ॥४२॥

तिलादिग्रहणं नेतरपरिसंख्यानार्थमपि तूपात्तानां फलविशेषप्रदर्शनार्थम्[१] । एतैर्विधिवद्दत्तैः पितरो मासं प्रीयन्ते ॥४२॥

१ फले खं. ॥

द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु ।
औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ॥४३॥

मत्स्याः पाठीनकाद्याः, हरिणा मृगाः, उरभ्रा[1] मेषाः, शकुनय आरण्यकुक्कटाद्याः ॥४३॥

षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै ।
अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥४४॥

छागश्छगलः, पृषतैण-रुरवो मृगजातिविशेषवचनाः ॥४४॥

दशमासांस्तु तृप्यन्ति वराह-महिषामिषैः ।
शश-कूर्मयोर्मांसेन मासानेकादशैव तु ॥४५॥

वराह आरण्यशूकरः[2] ॥ ४५ ॥

संवत्सरं तु गव्येन पयसा पायसेन तु ।
वाध्रीणसस्य[3] मांसेन तृप्तिर्द्वादशवार्षिकी ॥४६॥" [मनुस्मृ० ३ । २६६–२७१]

१ औरभ्रा मु. ॥ २ अरण्यस्नकरः खं. ॥ ३ वार्ध्री° मु. ॥

5

10

॥२७१॥

श्रुतानुमितयोः श्रुतसम्बन्धस्य बलीयस्त्वाद् गव्येन पयसा पायसेन च संबन्धो न मांसेन प्राकरणिकेन, अन्ये तु व्याख्यानयन्ति[1]–मांसेन गव्येन पयसा पायसेन वा। पयसो विकारः पायसं दध्यादि, पयःसंस्कृते त्वोदने प्रसिद्धिः। वाध्रीणसो जरच्छागः यस्य पिबतो जलं त्रीणि स्पृशन्ति जिह्वा कर्णौ च। यदाह[2]—

" त्रिपिबं त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्।
[3]वाध्रीणसं तु तं प्राहुर्याज्ञिकाः पितृकर्मसु ॥" [ ] ॥४६॥

5

[4]पितृनिमित्तं हिंसोपदेशकं शास्त्रमनूद्य तदुपदिष्टां हिंसां दूषयति—

**इति स्मृत्यनुसारेण पितॄणां तर्पणाय या।**
**मूढैर्विधीयते हिंसा साऽपि दुर्गतिहेतवे ॥४७॥**

इति पूर्वोक्ता या स्मृतिर्धर्मसंहिता तस्या अनुसारेणालम्बनेन पितरः पितुर्वंश्याः। यच्छ्रुतिः—" पित्रे पितामहाय प्रपितामहाय पिण्डं निर्वपेत्" [ ] इति। तेषां तर्पणाय तृप्तये मूढैरविचारकैर्या हिंसा विधीयते सापि—न केवलं मांसलोभादिनिमित्ता—दुर्गतिहेतवे नरकाय। न हि स्वल्पाऽपि काचिद्धिंसा न नरकादिनिबन्धनम्। यत्तु पितृ-तृप्तिप्रपञ्चवर्णनं[5] तन्मुग्धबुद्धिप्रतारणमात्रम्, न हि तिल-व्रीह्यादिभिर्मत्स्यमांसादिभिर्वा परासूनां पितॄणां तृप्तिरुत्पद्यते।

10

१ वार्ध्री° मु.॥ २ यदाहु खं.॥ ३ वार्ध्री° मु.॥ ४ पितृनिमित्तहिंसो° मु.॥ ५ प्रबन्धवर्णनं शां.॥

यदाह—
"मृतानामपि जन्तूनां यदि तृप्तिर्भवेदिह । निर्वाणस्य प्रदीपस्य[1] स्नेहः संवर्द्धयेच्छिखाम् ॥" [ ] इति ॥४७॥

न केवलं हिंसा दुर्गतिहेतुरेव, किं तु हिंस्यमानैर्जन्तुभिर्विरोधनिबन्धनत्वेन स्वस्यापि इहामुत्र च हिंसाहेतु-तया भयहेतुः, अहिंस्रस्य तु सर्वजीवाभयदानशौण्डस्य न कुतोऽपि भयमस्तीत्याह—

यो भूतेष्वभयं दद्याद् भूतेभ्यस्तस्य नो भयम् ।
यादृग् वितीर्यते दानं तादृगासाद्यते[2] फलम् ॥४८॥

स्पष्टम् ॥ ४८ ॥

एवं तावद्धिंसापराणां मनुष्याणां नरकादि हिंसाफलमभिहितम् । सुराणामपि हिंसकानां[3] जुगुप्सनीयचरितानां मूढजनप्रसिद्धं पूज्यत्वं परिदेवयते—

कोदण्ड-दण्ड-चक्रा-ऽसि-शूल-शक्तिधराः सुराः ।
हिंसका अपि हा कष्टं पूज्यन्ते देवताधिया ॥४९॥

हा कष्टमित्यतिशयनिर्वेदे, हिंसका अपि रुद्रप्रभृतयः सुराः प्राकृतैर्जनैः पूज्यन्ते विविधपुष्पोपहारादिभिरर्च्यन्ते । ते च यथाकथञ्चिदभ्यर्च्यन्तां नाम, केवलं देवताबुद्धिस्तत्र विरुद्धा इत्याह—देवताधिया ।

१ °रोधनत्वेन खं ॥ २ °सद्यते खं. ॥ ३ हिंसासक्तानां खं. ॥



॥२७३॥

हिंसकत्वे विशेषणद्वारेण हेतुमाह—कोदण्ड-दण्ड-चक्रा-ऽसि शूल-शक्तिधरा इति । कोदण्डादिधरत्वाद्धिंसकाः, हिंसकत्वमन्तरेण कोदण्डादीनां धारयितुमयुक्तत्वात् । कोदण्डधरः शङ्करः, दण्डधरो यमः, चक्रा-ऽसिधरो विष्णुः, शूलधरौ शिवौ, शक्तिधरः कुमारः, उपलक्षणमन्येषां शस्त्राणां शस्त्रधराणां च ॥४९॥

एवं प्रपञ्चतो हिंसां प्रतिषिध्य तद्विपक्षभूतमहिंसाव्रतं श्लोकद्वयेन स्तौति—

मातेव सर्वभूतानामहिंसा हितकारिणी ।
अहिंसैव हि संसारमरावमृतसारणिः[१] ॥५०॥
अहिंसा दुःखदावाग्निप्रावृषेण्यघनावली ।
भवभ्रमिरुगार्त्तानामहिंसा परमौषधी ॥५१॥

स्पष्टम् ॥५०॥५१॥

अहिंसाव्रतस्य फलमाह—

दीर्घमायुः परं रूपमारोग्यं श्लाघनीयता ।
अहिंसायाः फलं सर्वं किमन्यत् कामदैव सा ॥५२॥

5

10

१ °सारिणिः ख.

अहिंसापरो हि परेषामायुर्वर्द्धयन्ननुरूपमेव जन्मान्तरे दीर्घायुष्ट्वं लभते। तथैव पररूपमविनाशयन् प्रकृष्टं रूपमाप्नोति। तथैव चास्वास्थ्यहेतुं हिंसां परिहरन् परमस्वास्थ्यरूपमारोग्यं लभते। सर्वभूताभयप्रदश्च तेभ्यः आत्मनः श्लाघनीयतामश्नुते। एतत् सर्वमहिंसायाः फलम्, कियद्वा शृङ्गग्राहिकया वक्तुं शक्यते इत्याह–किमन्यत् कामदैव सा, यद्यत् कामयते तत्तस्मै ददाति। उपलक्षणमेतत्, अकामितस्यापि स्वर्गापवर्गादेः फलस्य दानात्।

अत्रान्तरे[1] श्लोकः—

हेमाद्रिः पर्वतानां हरिरमृतभुजां चक्रवर्त्ती नराणां, शीतांशुर्ज्योतिषां स्वस्तरुरवनिरुहां चण्डरोचिर्ग्रहाणाम्। सिन्धुस्तोयाशयानां जिनपतिरसुरा-ऽमर्त्य-मर्त्याधिपानां यद्वत् तद्वद् व्रतानामधिपतिपदवीं यात्यहिंसा किमन्यत् ॥१॥५२॥

उक्तमहिंसाव्रतम्।

अथ सूनृतव्रतस्यावसरः, तच्च नालीकविरतिमन्तरेणोपपद्यते,[2] न च तत्फलमनुपदर्श्यालीकाद्विरतिं कारयितुं शक्यः पर इत्यलीकफलमुपदर्श्य[3] तद्विरतिमुपदर्शयति—

मन्मनत्वं काहलत्वं मूकत्वं मुखरोगिताम्।
वीक्ष्यासत्यफलं कन्यालीकाद्यसत्यमुत्सृजेत् ॥५३॥

---

१ °न्तरश्लोकाः खं. ॥ २ °विरतिव्रतमन्तरेणो° मु. ॥ ३ °मुपदर्शयति खं. ॥

मन एव मन्तृ यत्र तद् मन्मनं परस्याप्रतिपादकं वचनम्, तद्योगात् पुरुषोऽपि मन्मनः, तस्य भावो मन्मनत्वम्, १। काहलमव्यक्तवर्णं वचनम्, तद्योगात् पुरुषोऽपि काहलः, तस्य भावः काहलत्वम् २। मूकोऽवाक्, तस्य भावो मूकत्वम् ३। मुखस्य रोगा उपजिह्वादयः, तेऽस्य सन्ति मुखरोगी, तस्य भावो मुखरोगिता ४। एतत् सर्वमसत्यफलं वीक्ष्य शास्त्रबलेनोपलभ्यासत्यं स्थूलासत्यमुत्सृजेच्छ्रावकः। यदाह—

“ मूका जडाश्च विकला वाग्हीना वाग्जुगुप्सिताः।
पूतिगन्धमुखाश्चैव जायन्तेऽनृतभाषिणः ॥ ” [ ]

असत्यं[1] च कन्यालीकादि वक्ष्यमाणम् ॥५३॥ तदेवाह—

**कन्या-गो-भूम्यलीकानि न्यासापहरणं तथा।**
**कूटसाक्ष्यं च पञ्चेति स्थूलासत्यान्यकीर्त्तयन् ॥५४॥**

१ कन्यालीकं, २ गवालीकं, ३ भूम्यलीकं, ४ न्यासापहरणं, ५ कूटसाक्ष्यं च। एतानि पञ्च स्थूलासत्यान्यकीर्त्तयन् जिनाः।

10

तत्र कन्याविषयमलीकं कन्यालीकं भिन्नकन्यामभिन्नां विपर्ययं वा[2] वदतो भवति; इदं च सर्वस्य कुमारादिद्विपदविषयस्यालीकस्योपलक्षणम्। गवालीकमल्पक्षीरां बहुक्षीरां विपर्ययं वा वदतः, इदमपि सर्वचतुष्पदविषयस्या-

१ असत्यं च ॥ तच्च वक्ष्यमाणम्— खं. ॥ २ वा नास्ति खं. ॥

लीकस्योपलक्षणम्। भूम्यलीकं परसत्कामप्यात्मादिसत्कां विपर्ययं वा वदतः, इदं च शेषपादपाद्यपदद्रव्यविषयालीकस्योपलक्षणम्।

अथ द्विपद-चतुष्पदा-ऽपदग्रहणमेव कस्पान्न कृतम्? उच्यते—कन्याद्यलीकानां लोकेऽतिगर्हितत्वेन रूढत्वादिति।

न्यस्यते रक्षणायान्यस्मै समर्प्यत इति न्यासः सुवर्णादिः[1], तस्यापहरणमपलापः, तद्वचनं स्थूलमृषावादः, इदं चानेनैव विशेषेण पूर्वालीकेभ्यो भेदेनोपात्तम्। कूटसाक्ष्यं प्रमाणीकृतस्य लञ्चा-मत्सरादिना कूटं वदतः 'यथाहमत्र साक्षी,' अस्य च परकीयपापसमर्थकत्वलक्षणविशेषमाश्रित्य पूर्वेभ्यो भेदेनोपन्यासः। एतानि क्लिष्टाशयसमुत्थत्वात् स्थूलासत्यानि ॥ ५४ ॥

एतेषां स्थूलालीकत्वे विशेषणद्वारेण हेतुमुपन्यस्य प्रतिषेधमाह—

सर्वलोकविरुद्धं यद्यद्विश्वसितघातकम्।
यद्विपक्षश्च पुण्यस्य न वदेत्तदसूनृतम् ॥५५॥

सर्वलोकविरुद्धत्वात् कन्यागोभूम्यलीकानि न वदेत्। विश्वसितघातकत्वान्न्यासापलापं न वदेत्[2]। पुण्यस्य धर्मस्य विपक्षरूपोऽधर्मः, तं[3] हि वदन् प्रमाणीकृतो विवादिभिरभ्यर्थ्यते[4] 'धर्मं[5] ब्रूया नाधर्मम्' इति, इति धर्मविपक्षत्वात् कूटसाक्ष्यं न वदेत् ॥ ५५ ॥

१ सुवर्णादि खं॥ २ वदेन्न पुण्यस्य खं.॥ ३ सूनृतं हि (?)॥ ४ °भ्यर्थिते खं.॥ ५ धर्मं ब्रूयान्नाधर्मम्— खं. विना॥

असत्यस्य फलविशेषमुपदर्शयंस्तत्परिहारमुपदिशति—

असत्यतो लघीयस्त्वमसत्याद्वचनीयता ।
अधोगतिरसत्याच्च तदसत्यं परित्यजेत् ॥५६॥

लघीयस्त्वं वचनीयता चासत्यस्यैहिकं फलम्, अधोगतिरामुष्मिकम् ॥ ५६ ॥

अथ भवतु क्लिष्टाशयपूर्वस्यासत्यस्य निषेधः, प्रामादिकस्य तु का वार्त्तेत्याह— 5

असत्यवचनं प्राज्ञः प्रमादेनापि नो वदेत् ।
श्रेयांसि येन भज्यन्ते वात्ययेव महाद्रुमाः ॥५७॥

आस्तां क्लिष्टाशयपूर्वकमसत्यवचनम्, प्रामादिकमप्यज्ञान-संशयादिजनितवचनं न वदेत् येन प्रामादिकेनासत्यवचनेन श्रेयांसि भङ्गमुपयान्ति वात्ययेव महाद्रुमा इति दृष्टान्तः । यदाहुर्महर्षयः—

"अइअम्मि अ कालम्मि पच्चुप्पन्नमणागए । जमट्ठं तु न जाणेज्जा एवमेअं ति णो वए ॥१॥[1] 10

[1] दशवैकालिकादुद्धृतास्विमासु तिसृष्वपि गाथासु 'कालम्मि' इत्यस्य स्थाने 'अद्धम्मी' इति पाठः शां. ख. प्रत्योर्दृश्यते, क. ख. ग. छ. ड. प्रतिषु तु 'अद्धम्मि' इति पाठः। आसां तिसृणां गाथानां हरिभद्रसूरिविरचितं व्याख्यानमेवं दृश्यते—" अईयंमि त्ति सूत्रम् । अतीते च काले तथा प्रत्युत्पन्ने वर्तमानेऽनागते च यमर्थं न तु जानीयात् सम्यगेवमयमिति, तमङ्गीकृत्य एवमेतदिति न ब्रूयादिति सूत्रार्थः । अयमज्ञातभाषणप्रतिषेधः ॥ तथा अईयम्मि त्ति सूत्रम् ।

अइअम्मि अ कालम्मि पच्चुप्पण्णमणागए। जत्थ संका भवे तं तु एवमेअं[1] ति णो वए ॥२॥

अइअम्मि अ कालम्मि पच्चुप्पन्नमणागए। निस्संकिअं भवे जं तु एवमेअं तु निद्दिसे ॥३॥"

[दशवै० ७।८, ९, १०]

एतच्चासत्यं चतुर्द्धा—भूतनिह्नवोऽभूतोद्भावनमर्थान्तरं गर्हा च।

भूतनिह्नवो यथा–नास्त्यात्मा, नास्ति पुण्यं, नास्ति पापं चेत्यादि। अभूतोद्भावनं यथा–सर्वगत आत्मा श्यामाकतन्दुलमात्रो[2] वा। अर्थान्तरं यथा–गामश्वमभिदधतः। गर्हा तु त्रिधा, एका सावद्यव्यापारप्रवर्त्तनी, यथा क्षेत्रं कृषेत्यादि। द्वितीया अप्रिया काणं काणमिति वदतः। तृतीयाआक्रोशरूपा, यथा अरे बान्धकिनेय इत्यादि ॥५७॥

अतिपरिहरणीयत्वमसत्यवचनस्य दर्शयन्[3] पुनरप्यैहिकान् दोषानाह—

---

अतीते च काले प्रत्युत्पन्नेऽनागतार्थे यत्रार्थे शङ्का भवेदिति तमप्यर्थमाश्रित्य 'एवमेतत्' इति न ब्रूयादिति सूत्रार्थः। अयमपि विशेषतः शङ्कितभाषणप्रतिषेधः॥ तथा अइयंमि त्ति सूत्रम्। अतीते च काले प्रत्युत्पन्नेऽनागते निःशङ्कितं भवेत् यदर्थजातं, तुशब्दादनवद्यम्, तद् 'एवमेतत्' इति निर्दिशेत्। अन्ये पठन्ति 'स्तोकस्तोकम्' इति, तत्र परिमितया वाचा निर्दिशेदिति सूत्रार्थः॥" इति दशवैकालिकसूत्रस्य हारिभद्र्यां वृत्तौ पृ० २१४-२१५॥

१ एवमेवं— शां.। थेवथेवं— खं.॥ २ °तंदुल° खं.॥ ३ दर्शयन् दोषानाह शां.॥

असत्यवचनाद्वैर-विषादा-ऽप्रत्ययादयः ।
प्रादुःषन्ति न के दोषाः कुपथ्याद् व्याधयो यथा ॥५८॥

वैरं विरोधः, विषादः पश्चात्तापः, अप्रत्ययोऽविश्वासः । आदिग्रहणाद् राजावमानादयो गृह्यन्ते ॥५८॥

आमुष्मिकं मृषावादस्य फलमाह—

निगोदेष्वथ तिर्यक्षु तथा नरकवासिषु । 5
उत्पद्यन्ते मृषावादप्रसादेन शरीरिणः ॥५९॥

निगोदा अनन्तकायिका जीवास्तेषु, तिर्यक्षु गोबलीवर्दन्यायेन शेषतिर्यग्योनिषु, नरकवासिषु नैरयिकेषु ॥५९॥

इदानीं मृषावादपरिहारे अन्वयव्यतिरेकाभ्यां कालिकाचार्य-वसुराजौ दृष्टान्तावाह—

ब्रूयाद् भियोपरोधाद्वा नासत्यं कालिकार्यवत् ।
यस्तु ब्रूते स नरकं प्रयाति वसुराजवत् ॥६०॥ 10

भिया मरणादिभयेन, उपरोधाद्दाक्षिण्यादसत्यं न ब्रूयात् । यस्तु ब्रूते 'भियोपरोधाद्वा' इत्यत्रापि संबन्धनीयम् । दृष्टान्तौ संप्रदायगम्यौ । स चायम्—

अस्ति भूरमणीमौलिमणिस्तुरमणी पुरी । यथार्थनामा तत्रासीज्जितशत्रुर्महीपतिः ॥१॥

---

१ °नाशेष°—शां खं. ॥

रुद्रेति नामधेयेन ब्राह्मणी तत्र विश्रुता। दत्त इत्यभिधानेन तस्याः पुत्रो बभूव च ॥२॥
दत्तो नितान्तदुर्दान्तो द्यूत-मद्यप्रियः सदा। सेवितुं तं महीपालं प्रवृत्तो वर्त्तनेच्छया ॥३॥
राज्ञा प्रधानीचक्रेऽसौ छायावत् पारिपार्श्विकः[1]। आरोहायोपसर्पन्त्या विषवल्लेरपि द्रुमः ॥४॥
विभिद्य[2] प्रकृतीरेष राजानं निरवासयत्। पापात्मानः कपोताश्च स्वाश्रयोच्छेददायिनः ॥५॥ 5
तस्य राज्ञो दुरात्माऽसौ राज्ये स्वयमुपाविशत्। क्षुद्रः पादान्तदानेऽपि क्रामत्युच्छीर्षकावधि[3] ॥६॥
पशुहिंसोत्कटान् यज्ञानज्ञो धर्मधिया व्यधात्। धूमैर्मलिनयन् विश्वं स मूर्त्तैरिव पातकैः ॥७॥
विहरन् कालिकार्याख्यश्चाचार्यस्तस्य[4] मातुलः। तत्राजगाम भगवानङ्गवानिव संयमः ॥८॥
तत्समीपमनापित्सुर्दत्तो मिथ्यात्वमोहितः। अत्यर्थं प्रार्थितो मात्रा मातुलाभ्यर्णमाययौ ॥९॥
मत्तोन्मत्तप्रमत्ताभो दत्तोऽपृच्छत् तमुद्भटम्। आचार्य यदि जानासि यज्ञानां ब्रूहि किं फलम् ॥१०॥ 10
उवाच कालिकाचार्यो धर्मं पृच्छसि तच्छृणु। तत् परस्य न कर्त्तव्यं यद्यद्विप्रियमात्मनः ॥११॥
ननु यज्ञफलं पृच्छामीति दत्तोदिते पुनः। सूरिरूचे न हिंसादि श्रेयसे किन्तु पाप्मने ॥१२॥
पुनस्तदेव साक्षेपं पृष्टो दत्तेन दुर्धिया। ससौष्ठवमुवाचार्यो यज्ञानां नरकः फलम् ॥१३॥

॥२८१॥

१ °पार्श्वकः मु. शां.। "परेर्मुखपार्श्वात्" सि० ६।४।२९॥ २ विभेद्य मु. खं.॥ ३ °वधेः खं.॥
४ °ख्य आचार्य° खं.॥

दत्तः क्रुद्धोऽभ्यधादेवमिह कः प्रत्ययो वद । आर्योऽप्यूचे श्वकुम्भ्यां त्वं पक्ष्यसे सप्तमेऽहनि ॥१४॥
दत्तः कोपादुदस्तभ्रूररुणीकृतलोचनः । भूताविष्ट इवोवाच प्रत्ययोऽत्रापि को ननु ॥९५॥
अथोचे कालिकार्योऽपि श्वकुम्भीपचनात् पुरः । तस्मिन्नेवाह्न्यकस्मात् ते मुखे विष्ठा प्रवेक्ष्यति ॥१६॥
रोषाद् दत्तो जगादेदं तव मृत्युः कुतः कदा । न कुतोऽपि, स्वकाले द्यां यास्यामीत्यवदन्मुनिः ॥१७॥
अमुं निरुन्द्ध दुर्बुद्धिमिति दत्तेन रोषतः । आदिष्टैः कालिकाचार्यो रुरुधे दण्डपूरुषैः ॥१८॥
अथ दत्तात् समुद्विग्नाः सामन्ताः पापकर्मणः । आह्वनार्थं नृपं तस्मै दत्तमर्पयितुं किल ॥१९॥
दत्तोऽपि शङ्कितस्तस्थौ निलीनो निजवेश्मनि । कण्ठीरवत्रस्तो निकुञ्ज इव कुञ्जरः ॥२०॥
स विस्मृतदिनो दैवादागते सप्तमे दिने । बहिर्निर्गन्तुमारक्षै राजमार्गानरक्षयत् ॥२१॥
तत्रैको[1] मालिकः प्रातर्विशन् पुष्पकरण्डवान् । चक्रे वेगातुरो विष्ठां भीतः पुष्पैः प्यधत्त च ॥२२॥
इहाहनि हनिष्यामि पशुवन्मुनिपांसनम् । चिन्तयन्निति दत्तोऽपि निर्ययौ सादिभिर्वृतः ॥२३॥
एकेन वल्गताऽश्वेन विष्ठोत्क्षिप्ता खुरेण सा । दत्तस्य प्राविशच्चास्ये नासत्या यतिनां[2] गिरः ॥२४॥
शिलास्फालितवत् सद्यः श्लथाङ्गो विमनास्ततः । स सामन्ताननापृच्छ्य ववले स्वगृहं प्रति ॥२५॥
नाऽस्मन्मन्त्रोऽमुना ज्ञात इति प्रकृतिपूरुषैः । गृहमप्रविशन्नेव बद्ध्वा दध्रे स गौरिव ॥२६॥

१ तथैको खं ॥ २ —क ख. ग. छ. । यमिनां मु. ॥

अथ प्रकाशयंस्तेजो निजं राजा चिरन्तनः। प्रादुरासीत् तदानीं स निशात्यय इवार्यमा ॥२७॥
सोऽहिः करण्डनिर्यात इव दूरं ज्वलन् क्रुधा। दत्तं श्वकुम्भ्यां नरककुम्भ्यामिव तदाऽक्षिपत् ॥२८॥
अधस्तात्ताप्यमानायां कुम्भ्यां श्वानोऽन्तरा स्थिताः। दत्तं विदद्रुः परमाधार्मिका इव नारकम् ॥२९॥
निरस्तभूपालभयोपरोधः श्रीकालिकाचार्य इवैवमुच्चैः। सत्यव्रतत्राणकृतप्रतिज्ञो न जातु भाषेत मृषा मनीषी ॥३०॥

[ इति कालिकाचार्यदत्तकथानकम् ]

अस्ति[1] चेदिषु विख्याता नाम्ना शुक्तिमती पुरी। शुक्तिमत्याख्यया नद्या नर्मसख्येव शोभिता ॥१॥
पृथ्वीमुकुटकल्पायां तस्यां तेजोभिरद्भुतः। माणिक्यमिव पृथ्वीशोऽभिचन्द्रो नामतोऽभवत् ॥२॥
सूनुः सूनृतवाक् तस्य वसुरित्यभिधानतः। अजायत महाबुद्धिः पाण्डोरिव युधिष्ठिरः ॥३॥
पार्श्वे क्षीरकदम्बस्य गुरोः पर्वतकः सुतः। राजपुत्रो वसुश्छात्रो[2] नारदश्चापठंस्त्रयः ॥४॥
सौधोपरि शयानेषु तेषु पाठश्रमान्निशि। चारणश्रमणौ व्योम्नि यान्तावित्यूचतुर्मिथः ॥५॥
एषामेकतमः स्वर्गं गमिष्यत्यपरौ पुनः। नरकं यास्यतस्तच्चाश्रौषीत् क्षीरकदम्बकः ॥६॥
तच्छ्रुत्वा चिन्तयामास खिन्नः क्षीरकदम्बकः। मय्यप्यध्यापके शिष्यौ यास्यतो नरकं हहा[3] ॥७॥
एभ्यः को यास्यति स्वर्गं नरकं कौ च यास्यतः। जिज्ञासुरित्युपाध्यायस्तांस्त्रीन् युगपदाह्वत ॥८॥

१ त्रिषष्टि० ७। २। ३८३–४५० ॥ २ वसुच्छात्रो मु. ॥ ३ हाहा खं. ॥

यावपूर्णं समर्प्यैषामेकैकं पिष्टकुकुटम्। स ऊचेऽमी तत्र वध्या यत्र कोऽपि न पश्यति ॥९॥
वसु-पर्वतकौ तत्र गत्वा शून्यप्रदेशयोः। आत्मनीनां गतिमिव जघ्नतुः पिष्टकुकुटौ ॥१०॥
महात्मा नारदस्तत्र व्रजित्वा नगराद् बहिः। स्थित्वा च विजने देशे दिशः प्रेक्ष्येत्यतर्कयत्[1] ॥११॥
गुरुपादैरदस्तावदादिष्टं वत्स यत्त्वया। वध्योऽयं कुकुटस्तत्र यत्र कोऽपि न पश्यति ॥१२॥
असौ पश्यत्यहं पश्याम्यमी पश्यन्ति खेचराः। लोकपालाश्च पश्यन्ति पश्यन्ति ज्ञानिनोऽपि च ॥१३॥ 5
नास्त्येव स्थानमपि तद्यत्र कोऽपि न पश्यति। तात्पर्यं तद् गुरुगिरां न वध्यः खलु कुकुटः ॥१४॥
गुरुपादा दयावन्तः सदा हिंसापराङ्मुखाः। अस्मत्प्रज्ञां परिज्ञातुमेतन्नियतमादिशन् ॥१५॥
विमृश्यैवमहत्वैव कुकुटं स समाययौ। कुकुटाहननने हेतुं गुरोर्व्यज्ञपयच्च तम् ॥१६॥
स्वर्गं यास्यत्यसौ तावदिति निश्चित्य सस्वजे। गुरुणा नारदः स्नेहात् साधु साध्विति भाषिणा ॥१७॥
वसु-पर्वतकौ पश्चादागत्यैवं[2] शशंसतुः। निहतौ कुकुटौ तत्र यत्र कोऽपि न पश्यति ॥१८॥
अपश्यतं युवामादावपश्यन् खेचरादयः। कथं हतौ कुकुटौ रे पापावित्यशपद् गुरुः ॥१९॥ 10
ततः खेदादुपाध्यायो दध्यौ विध्यातपाठधीः। मुधा मेऽध्यापनक्लेशो वसु-पर्वतयोरभूत् ॥२०॥
गुरूपदेशो हि यथापात्रं परिणमेदिह। अभ्राम्भः स्थानभेदेन मुक्ता-लवणतां व्रजेत् ॥२१॥

१ प्रेक्ष्य व्यतर्कं° मु.॥ २ °गत्यैव खं.॥

प्रियः पर्वतकः पुत्रः पुत्रादप्यधिको वसुः । नरकं यास्यतस्तस्माद् गृहवासेन किं मम ॥२२॥
निर्वेदादित्युपाध्यायः प्रव्रज्यामग्रहीत्तदा । तत्पदं पर्वतोऽध्यास्त व्याख्याक्षणविचक्षणः ॥२३॥
भूत्वा गुरोः प्रसादेन सर्वशास्त्रविशारदः । नारदः शारदाम्भोदशुद्धधीः स्वां भुवं ययौ ॥२४॥
नृपचन्द्रोऽभिचन्द्रोऽपि जग्राह समये व्रतम् । ततश्चासीद्वसू राजा वासुदेवसमः श्रिया ॥२५॥
सत्यवादीति स प्राप प्रसिद्धिं पृथिवीतले । तां प्रसिद्धिमपि त्रातुं सत्यमेव जगाद सः ॥२६॥ 5
अथैकदा मृगयुणा मृगाय मृगयाजुषा । चिक्षिपे विशिखो विन्ध्यनितम्बे सोऽन्तराऽस्खलत् ॥२७॥
इषुस्खलनहेतुं स ज्ञातुं तत्र ययौ ततः । आकाशस्फटिकशिलामज्ञासीत् पाणिना स्पृशन् ॥२८॥
स दध्याविति मन्येऽस्यां संक्रान्तः परतश्चरन् । भूमिच्छायेव शीतांशौ ददृशे हरिणो मया ॥२९॥
पाणिस्पर्शं विना नेयं सर्वथाऽप्युपलक्ष्यते । अवश्यं तदसौ योग्या वसोर्वसुमतीपतेः ॥३०॥
रहो व्यज्ञपयद्राज्ञे गत्वा तां मृगयुः शिलाम् । हृष्टो राजाऽपि जग्राह ददौ चास्मै महद्धनम् ॥३१॥ 10
स तया घटयामास च्छन्नं स्वासनवेदिकाम् । तच्छिल्पिनोऽघातयच्च नात्मीयाः कस्यचिन्नृपाः ॥३२॥
तस्यां सिंहासनं वेदौ चेदीशस्य निवेशितम् । सत्यप्रभावादाकाशस्थितमित्यबुधज्जनः ॥३३॥
सत्याद्धि तुष्टाः सान्निध्यमस्य कुर्वन्ति देवताः । एवमूर्जस्विनी तस्य प्रसिद्धिर्व्यानशे दिशः ॥३४॥
तया प्रसिद्ध्या राजानो भीतास्तस्य वशं[1] ययुः । सत्या वा यदिवा मिथ्या प्रसिद्धिर्जयिनी नृणाम् ॥३५॥ 

१ —क. ग. छ. । वशं गताः मु. ॥

आगाच्च नारदोऽन्येद्युस्ततश्चैक्षिष्ट पर्वतम् । व्याख्यानयन्तमृग्वेदं शिष्याणां शेमुषीजुषाम् ॥३६॥
अजैर्यष्टव्यमित्यस्मिन् मेषैरित्युपदेशकम् । बभाषे नारदो भ्रातर्भ्रान्त्या किमिदमुच्यते ॥३७॥
त्रिवार्षिकाणि धान्यानि न हि जायन्त इत्यजाः । व्याख्याता गुरुणाऽस्माकं व्यस्मार्षीः केन हेतुना ॥३८॥
ततः पर्वतकोऽवादीदिदं तातेन नोदितम् । उदिताः किं त्वजा मेषास्तथैवोक्ता निघण्टुषु ॥३९॥
जगाद नारदोऽप्येवं शब्दानामर्थकल्पना । मुख्या गौणी च तत्रेह गौणी गुरुरचीकथत् ॥४०॥
गुरुर्धर्मोपदेष्टैव श्रुतिर्धर्मात्मिकैव च । द्वयमप्यन्यथाकुर्वन्मित्र मा पापमर्जय ॥४१॥
साक्षेपं[1] पर्वतोऽजल्पदजान् मेषान् गुरुर्जगौ । गुरूपदेशशब्दार्थोल्लङ्घनाद्धर्ममर्जसि ? ॥४२॥
मिथ्याभिमानवाचो हि न स्युर्दण्डभयान्नृणाम् । स्वपक्षस्थापने तेन जिह्वाच्छेदः पणोऽस्तु नः ॥४३॥
प्रमाणमुभयोरत्र सहाध्यायी वसुर्नृपः । नारदः[2] प्रतिपेदे तन्न क्षोभः सत्यभाषिणाम् ॥४४॥
रहः पर्वतमूचेऽम्बा गृहकर्मरताप्यहम् । अजास्त्रिवार्षिकं धान्यमित्यश्रौषं भवत्पितुः ॥४५॥
जिह्वाच्छेदं पणेऽकार्षीर्यद्दर्पात्तदसाम्प्रतम् । अविमृश्य विधातारो भवन्ति विपदां पदम् ॥४६॥
अवदत् पर्वतोऽप्येवं कृतं तावदिदं मया । यथातथाकृतस्यात्र करणं न हि विद्यते ॥४७॥
साऽथ पर्वतकापायपीडया हृदि शल्यिता । वसुराजमुपेपाय पुत्रार्थे क्रियते न किम् ॥४८॥

१ साक्षेपः क. ग. च. छ. ड. ॥ २ नारदस्तदुरीचक्रे ख. ॥

दृष्टः क्षीरकदम्बोऽद्य यदम्ब त्वमसीक्षिता । किं करोमि प्रयच्छामि किं चेत्यभिदधे वसुः ॥४९॥
साऽवादीद्दीयतां पुत्रभिक्षा मह्यं महीपते । धनधान्यैः किमन्यैर्मे विना पुत्रेण पुत्रक ॥५०॥
वसुरूचे मम मातः पाल्यः पूज्यश्च पर्वतः । गुरुवद् गुरुपुत्रेऽपि वर्त्तितव्यमिति श्रुतेः[2] ॥५१॥
कस्याद्य पत्रमुत्क्षिप्तं कालेनाकालरोषिणा । को जिघांसुर्भ्रातरं मे ब्रूहि मातः किमातुरा ॥५२॥
अजव्याख्यानवृत्तान्तं स्वपुत्रस्य पणं च तम् । त्वं प्रमाणीकृतश्चासीत्याख्यायाऽर्थयते स्म सा ॥५३॥
कुर्वाणो रक्षणं भ्रातुरजान् मेषानुदीरय । प्राणैरप्युपकुर्वन्ति महान्तः किं पुनर्गिरा ॥५४॥
अवोचत वसुर्मातर्मिथ्या वच्मि वचः कथम् । प्राणात्ययेऽपि शंसन्ति नासत्यं सत्यभाषिणः ॥५५॥
अन्यदप्यभिधातव्यं नासत्यं पापभीरुणा । गुरुवागन्यथाकारे कूटसाक्ष्ये च का कथा ॥५६॥
बहूकुरु गुरोः सुनुं यद्वा सत्यव्रताग्रहम् । तया सरोषमित्युक्तस्तद्वचोऽमंस्त पार्थिवः ॥५७॥
ततः प्रमुदिता क्षीरकदम्बगृहिणी ययौ । आजग्मतुश्च विद्वांसौ तत्र नारद-पर्वतौ ॥५८॥
सभायाममिलन् सभ्या माध्यस्थ्यगुणशालिनः । वादिनोः सदसद्वादक्षीर-नीरसितच्छदाः ॥५९॥
आकाशस्फटिकशिलावेदिसिंहासनं वसुः । सभापतिरलञ्चक्रे नभस्तलमिवोडुपः ॥६०॥
ततो निजनिजव्याख्यापक्षं नारद-पर्वतौ । कथयामासतू राज्ञे सत्यं ब्रूहीति भाषिणौ ॥६१॥

१ किं वे° खं. त्रिषष्टि० ७ । २ । ४३१ ॥   १ श्रुतिः च. ड. ॥

विप्रवृद्धैरथोचे स विवादस्त्वयि तिष्ठते। प्रमाणमनयोः साक्षी त्वं रोदस्योरिवार्यमा ॥६२॥
घटप्रभृतिदिव्यानि वर्तन्ते हन्त सत्यतः। सत्याद्वर्षति पर्जन्यः सत्यात् सिद्ध्यन्ति देवताः ॥६३॥
त्वय्येव सत्ये लोकोऽयं स्थाप्यते पृथिवीपते। त्वामिहार्थे ब्रूमहे किं ब्रूहि सत्यव्रतोचितम् ॥६४॥
वचोऽश्रुत्वेव[1] तत् सत्यप्रसिद्धिं स्वां निरस्य च। अजान् मेषान् गुरुर्व्याख्यादिति साक्ष्यं वसुर्व्यधात् ॥६५॥
असत्यवचसा तस्य क्रुद्धास्तत्रैव देवताः। दलयामासुराकाशस्फटिकासनवेदिकाम् ॥६६॥
वसुर्वसुमतीनाथस्ततो वसुमतीतले। पपात सद्यो नरकपातं प्रस्तावयन्निव ॥६७॥
कूटसाक्ष्यं प्रदातुस्ते श्वपचस्येव को मुखम्। पश्येदिति वसुं निन्दन्नारदः स्वास्पदं ययौ ॥६८॥
देवताभिरसत्योक्तिकुपिताभिर्निपातितः। जगाम घोरं नरकं नरनाथो वसुस्ततः ॥६९॥
यो यः स्वनुरुपाविक्षद्राज्ये तस्यापराधिनः। प्रजघ्नुर्देवतास्तं तं यावदष्टौ निपातिताः ॥७०॥
इति वसुनृपतेरसत्यवाचः फलमाकर्ण्य जिनोक्तिविद्धकर्णः।
कथमप्युपरोधतोऽपि जल्पेदनृतं प्राणितसंशयेऽपि नैव ॥ ७१ ॥ ६० ॥

[2] [ इति नारद-पर्वतकथानकम् ॥ ]

सद्भ्यो हितं सत्यमिति व्युत्पत्त्या अवितथमपि परपीडाकरं वचनमसत्यमेवाहितत्वादिति सत्यमपीदृशं न भाषेतेत्याह—

---

१ वचोऽश्रुत्वैव—मु. ॥ २ [ ] एतदन्तर्गतः पाठो नास्ति शां. खं ॥

 

न सत्यमपि भाषेत परपीडाकरं[1] वचः ।
लोकेऽपि श्रूयते यस्मात् कौशिको नरकं गतः ॥६१॥

सत्यमवितथं लोकरूढ्या, परमार्थतस्तु परपीडाकरत्वादसत्यमेवेत्यर्थः, तन्न भाषेत तद्भाषणान्नरकगमनश्रुतेः । अत्रार्थे लौकिकं दृष्टान्तमाह—लोकेऽपि समयान्तरेऽपि श्रूयते निशम्यते परपीडाकरसत्यभाषणेन कौशिको नरकं गत इति । कौशिकस्तु सम्प्रदायगम्यः; स चायम्—

5

आसीत् सत्यधनः कोऽपि कौशिको नाम तापसः । अपास्य ग्रामसंवासमनुगङ्गमुवास सः ॥१॥
कन्दमूलफलाहारो निर्ममो निष्परिग्रहः । सत्यवादितया[2] प्राप प्रसिद्धिं परमामसौ ॥२॥
मुषित्वा ग्राममन्येद्युर्दस्यवस्तस्य पश्यतः । आश्रमं निकषा जग्मुर्वनं बिलमिवोरगाः ॥३॥
तेषामनुपदिनस्तु ग्राम्याः पप्रच्छुरेत्य तम् । सत्यवाद्यसि तद् ब्रूहि तस्कराः कुत्र वव्रजुः ॥४॥
धर्मतत्त्वानभिज्ञोऽथ कथयामास कौशिकः । घने[3] तरुनिकुञ्जेऽस्मिन् दस्यवः प्राविशन्निति ॥५॥

10

तस्योपदेशात् सन्नह्य ग्रामीणाः शस्त्रपाणयः । वनं प्रविश्य निर्जघ्नुर्दस्यून् व्याधा मृगानिव ॥६॥
ऋतमप्यनृतं पर्व्यथाकरणेनेदमुदीरयन् वचः । परिपूर्य निजायुरुल्बणं नरकं कौशिकतापसो ययौ ॥७॥६१॥

॥२८९॥

---

१ °परं खं. ॥ २ °या प्रसिद्धिं प्राप खं ॥ ३ वने च. ङ. ॥

अल्पमप्यसत्यवचनं प्रतिषेधितुं महदसत्यं वदतः परिदेवयते—

अल्पादपि मृषावादाद्रौरवादिषु संभवः ।
अन्यथा वदतां जैनीं वाचं त्वहह का गतिः ॥६२॥

अल्पादप्यैहिकार्थविषयत्वेन स्तोकादपि मृषावादादसत्याद्रौरवादिषु रौरव-महारौरवप्रभृतिषु नरकावासेषु संभव उत्पत्तिः, लोकप्रसिद्धत्वाद्रौरवग्रहणम्, अन्यथा सर्वनरकेष्वित्युच्येत। अन्यथा विपरीतार्थतया जैनीं वाचं वदतामतीवासत्यवादिनां कुतीर्थिकानां स्वयूथ्यानां च निह्नवादीनां का गतिः ? नरकादप्यधिका तेषां गतिः प्राप्नोतीत्यर्थः। अहहेति खेदे, अशक्यप्रतीकाराः परिदेवनीयाः खल्वेत इति। यदाह—

अहह[1] सयलन्नपावाहिं[2] वितहपन्नवणमणुमवि दुरंतं। जं मिरिइभवतदज्जियदुक्कयअवसेसलेसवसा[3] ॥१॥
सुरथुयगुणो वि तित्थंकरो वि तिहुयणअतुल्लमल्लो वि। गोवाइहिं वि बहुसो कअत्थिओ तिजयपहुत्तंसि[4] ॥२॥

---

१ अहह सकलान्यपापेभ्यो वितथप्रज्ञापनमण्वपि दुरन्तम्। यन्मरीचिभवतदर्जितदुष्कृतावशेषलेशवशात् ॥
सुरस्तुतगुणोऽपि तीर्थङ्करोऽपि त्रिभुवनातुल्यमल्लोऽपि। गोपादिभिरपि बहुशः कदर्थितस्त्रिजगत्प्रभुत्वे ॥
स्त्री-गो-ब्राह्मण-भ्रूणान्तका अपि केऽपि दृढप्रहार्यादयः। बहुपापा अपि प्रसिद्धाः सिद्धाः किल तस्मिन्नेव भवे ॥
२ °पावाहि खं. ॥ ३ मिरिई° खं. ॥ ४ °हु तं सि खं. अत्र यदि °पहु तं सि इति पाठः स्यात् तदा 'त्रिजगत्प्रभुस्त्वमसि' इत्यर्थो भवेत् ॥

थी-गो-बंभण भूणंतगा वि केवि इह दिढपहाराई। बहुपावा वि पसिद्धा सिद्धा किर तम्मि चेव[1] भवे ॥३॥६२॥

असत्यवादिनो निन्दित्वा सत्यवादिनः स्तौति—

ज्ञान-चारित्रयोर्मूलं सत्यमेव वदन्ति ये।
धात्री पवित्रीक्रियते तेषां चरणरेणुभिः ॥६३॥

ज्ञान-चारित्रयोर्ज्ञान-क्रिययोर्मूलं कारणं यत् सत्यं तदेव वदन्ति ये, ज्ञान-चारित्रग्रहणं 'नाण-किरियाहिं मोक्खो' [वि० भा० ३] इति भगवद्भाष्यकारवचनानुवादार्थम्। ज्ञानग्रहणेन दर्शनमप्याक्षिप्यते, दर्शनमन्तरेण[2] ज्ञानस्याज्ञानत्वात्, मिथ्यादृष्टिर्हि सत्त्वासत्त्वे वैपरीत्येन जानाति, भवहेतुश्च तज्ज्ञानं, यदृच्छया चार्थनिरपेक्षमुपलभते, न च ज्ञानफलमस्य।

यदाह—

" सयसयविसेसणाओ भवहेउ[3]-जइच्छिओपलंभाओ[4]।
नाणफलाभावाओ मिच्छ(च्छा)दिट्ठिस्स अण्णाणं ॥" [वि० भा० ५२१]

स्पष्टमन्यत् ॥ ६३ ॥

सत्यवादिनामैहिकमपि प्रभावं दर्शयति—

---

१ चेय खं. ॥ २ °लभ्यते शां. मु. ॥ ३ भवहेउं मु. शां. ॥ ४ °जहत्थिओपल° खं.। °जइच्छओपलं° शां. मु. ॥

अलीकं ये न भाषन्ते सत्यव्रतमहाधनाः ।
नापराद्धुमलं तेभ्यो भूत-प्रेतोरगादयः ॥६४॥

भूता भूतोपलक्षिताः व्यन्तराः, प्रेताः पितरो ये स्वसंबन्धिनो मनुष्यान् पीडयन्ति, भूत-प्रेतग्रहणं भुवनपत्यादीनामुपलक्षणार्थम् । उरगाः सर्पाः, आदिग्रहणाद् व्याघ्रादीनां परिग्रहः ।

अत्रान्तरश्लोकाः—

अहिंसापयसः पालिभूतान्यन्यव्रतानि यत् । सत्यभङ्गात् पालिभङ्गेऽनर्गलं विप्लवेत तत् ॥१॥
सत्यमेव वदेत् प्राज्ञः सर्वभूतोपकारकम् । यद्वा तिष्ठेत् समालम्ब्य मौनं सर्वार्थसाधकम् ॥२॥
पृष्टेनापि न वक्तव्यं वचो वैरस्य कारणम् । मर्मावित् कर्कशं शङ्कास्पदं हिंस्रमक्षयकम् ॥३॥
धर्मध्वंसे क्रियालोपे स्वसिद्धान्तार्थविप्लवे । अपृष्टेनापि शक्तेन वक्तव्यं तन्निषेधितुम् ॥४॥
चार्वाकैः कौलिकैर्विप्रैः सौगतैः पाञ्चरात्रिकैः । असत्येनैव विक्रम्य जगदेतद्विडम्बितम् ॥५॥
अहो पुरजलस्रोतःसोदरं तन्मुखोदरम् । निःसरन्ति यतो वाचः पङ्काकुलजलोपमाः ॥६॥
दवानलेन ज्वलता परिप्लुष्टोऽपि पादपः। सान्द्रीभवति लोकोऽयं न तु दुर्वचनाग्निना ॥७॥
चन्दनं चन्द्रिका चन्द्रमणयो मौक्तिकस्रजः । आह्लादयन्ति न तथा यथा वाक् सूनृता नृणाम् ॥८॥

शिखी मुण्डी जटी नग्नश्चीवरी यस्तपस्यति । सोऽपि मिथ्या यदि ब्रूते निन्द्यः स्यादन्त्यजादपि ॥९॥
एकत्रासत्यजं पापं पापं निःशेषमन्यतः । द्वयोस्तुलाविधृतयोराद्यमेवातिरिच्यते ॥१०॥
पारदारिक-दस्यूनामस्ति काचित् प्रतिक्रिया । असत्यवादिनः पुंसः प्रतीकारो न विद्यते ॥११॥

कुर्वन्ति देवा अपि पक्षपातं नरेश्वराः शासनमुद्वहन्ति ।
शान्तीभवन्ति[1] ज्वलनादयो यत् तत् सत्यवाचां फलमामनन्ति ॥१२॥

इति द्वितीयं व्रतमुक्तम् ॥६४॥

इदानीं तृतीयमस्तेयव्रतमुच्यते । तत्रापि फलानुपदर्शने न स्तेयान्निवर्त्तेत इति फलोपदर्शनपूर्वं स्तेयनिवृत्तिमाह—

दौर्भाग्यं प्रेष्यतां दास्यमङ्गच्छेदं दरिद्रताम् ।
अदत्तात्तफलं ज्ञात्वा स्थूलस्तेयं विवर्जयेत् ॥६५॥

दौर्भाग्यमुद्वेजनीयता, प्रेष्यता परकर्मकरत्वम्, दास्यमङ्कपातादिना परायत्तशरीरता, अङ्गच्छेदः कर-चरणादिच्छेदः, दरिद्रता निर्धनत्वम् । एतानीहामुत्र चादत्तादानफलानि शास्त्रतो गुरुमुखाद्वा ज्ञात्वा स्थूलं चौरादिव्यपदेशनिबन्धनं स्तेयं विवर्जयेच्छ्रावकः ॥६५॥

स्थूलस्तेयपरिहारमेव प्रपञ्चयति—

---

१ शीतीभ° मु. ॥



5
10
॥२९३॥

पतितं विस्मृतं नष्टं स्थितं स्थापितमाहितम् ।
अदत्तं नाददीत स्वं परकीयं क्वचित् सुधीः ॥६६॥

पतितं गच्छतो वाहनादेर्भ्रष्टम्, विस्मृतं क्वापि मुक्तमिति स्वामिना यन्न स्मर्यते, नष्टं क्वापि गतमिति स्वामिना यन्न ज्ञायते, स्थितं स्वामिपार्श्वे यदवस्थितम्, स्थापितं न्यासीकृतम्, आहितं निधीकृतम्, तदेवंविधं परकीयं स्वं धनमदत्तं सन्नाददीत क्वचिद् द्रव्यक्षेत्राद्यापद्यपि सुधीः प्राज्ञः ॥६६॥

इदानीं स्तेयकारिणो निन्दति—

अयं लोकः परलोको धर्मो धैर्यं धृतिर्मतिः ।
मुष्णता परकीयं स्वं मुषितं सर्वमप्यदः ॥६७॥

परकीयं स्वं धनं मुष्णता अपहरता सर्वमप्यद एतत् स्वं स्वकीयं मुषितं स्वशब्दस्योभयत्र संबन्धात् । किं तदित्याह—अयं लोकः, अयं प्रत्यक्षेणोपलभ्यमानो लोकः, इदं जन्मेत्यर्थः, परलोको जन्मान्तरम्, धर्मः पुण्यम्, धैर्यमापत्स्वप्यवैक्लव्यम्, धृतिः स्वास्थ्यम्, मतिः कृत्याकृत्यविवेकः ॥६७॥

अथ हिंसाकारिभ्योऽपि स्तेयकारिणो बहुदोषत्वमाह—

एकस्यैकं क्षणं दुःखं मार्यमाणस्य जायते ।
सपुत्र-पौत्रस्य पुनर्यावज्जीवं हृते धने ॥६८॥

एकस्य न तु बहूनाम्, एकं क्षणं न तु बहुकालम्, दुःखमसातं मार्यमाणस्य ह्रियमानस्य। स्तेयकारिणा त्वपहृते धने परस्य सपुत्र पौत्रस्य, न त्वेकस्य, यावज्जीवं न त्वेकं क्षणं दुःखं जायत इति संबन्धः ||६८||

उक्तमपि स्तेयफलं प्रपञ्चेनाह—

चौर्य्यपापद्रुमस्येह वध-बन्धादिकं फलम्।
जायते परलोके तु फलं नरकवेदना ||६९||

चौर्य्यात् पापम्, तदेव द्रुमः, तस्येह लोके फलं वधबन्धादिकम्, परलोके तु फलं नरकभाविनी वेदना ||६९||

अथ कदाचित् प्रमादात् स्तेयकारी नृपतिभिर्न निगृह्येत तथाप्यस्वास्थ्यलक्षणमैहिकं फलमवस्थितमेव इत्याह—

दिवसे वा रजन्यां वा स्वप्ने वा जागरेऽपि वा।
सशल्य इव चौर्येण नैति स्वास्थ्यं नरः क्वचित् ||७०||

स्वप्नः स्वापः, जागरो निद्राया अभावः, चौर्येण हेतुना क्वचिदपि स्थाने ||७०||

न केवलं स्तेयकर्तुः स्वास्थ्याभाव एव किन्तु बन्धुभिः परित्यागोऽपीत्याह—

मित्र-पुत्र-कलत्राणि भ्रातरः पितरोऽपि हि।
संसजन्ति[१] क्षणमपि न म्लेच्छैरिव तस्करैः ||७१||

---

१ संसृजन्ति खं. ||

||२९५||

व्याघुटन्तीं विनोदेच्छुः कलाकौशलयोगतः। स आस्फाल्य ऋजूचक्रे तां कुब्जीमब्जनालवत् ॥१७॥
वपुर्नवमिवासाद्य सानन्दा साऽपि चेटिका। उपेत्य देवदत्तायै तच्चेष्टितमचीकथत् ॥१८॥
देवदत्तवरेणेव देवदत्ताऽपि तेन ताम्। कुब्जामृजूकृतां वीक्ष्य परमं प्राप विस्मयम् ॥१९॥
देवदत्ता ततोऽवादीदीदृक्षमुपकारिणम्। निजाङ्गुलिमपि च्छित्वा तमेकच्छेकमानय ॥२०॥
ततो गत्वा समभ्यर्थ्य चाटुभिश्चतुरोचितैः। अचालि वेश्माभिमुखं धूर्त्तराजो भुजिष्यया ॥२१॥
तया निर्दिश्यमानाध्वा प्रविवेश निवेशनम्। ततोऽसौ देवदत्ताया राधाया इव माधवः ॥२२॥
तं वामनमपि प्रेक्ष्य कान्ति-लावण्यशालिनम्। सा मन्वाना सुरं छन्नमुपावेशयदासने ॥२३॥
मिथो हृदयसंवादिसंलापसुभगा ततः। तयोः प्रववृते गोष्ठी तुल्यवैदग्ध्यशालिनोः ॥२४॥
अथाऽऽगात्तत्र कोऽप्येको वीणाकारः प्रवीणधीः। वीणामवीवदत् तेन देवदत्ताऽतिकौतुकात् ॥२५॥
वल्लकीं वादयन्तं च व्यक्तग्राम-श्रुति-स्वराम्। धूनयन्ती शिरो देवदत्ताऽपि प्रशशंस तम् ॥२६॥
स्मित्वाऽवदन्मूलदेवोऽप्यहो उज्जयिनीजनः[१]। जानात्यत्यन्तनिपुणो गुणा-ऽगुणविवेचनम् ॥२७॥
साशङ्का साऽप्युवाचैवं किमत्र क्षूणमस्त्यहो। छेकश्छेकप्रशंसायामुपहासं हि शङ्कते ॥२८॥
सोऽप्याचचक्षे किं क्षूणमस्ति क्वापि भवादृशाम्। सगर्भा किन्त्वसौ तन्त्री किञ्च वंशोऽपि शल्यवान् ॥२९॥

१ उज्जयनी° खं.। पवमग्रेऽपि ॥

कथं ज्ञायत इत्युक्तस्तयाऽऽदाय स वल्लकीम्। वंशादश्मानमाकृष्य तन्त्र्याः केशमदर्शयत् ॥३०॥
समारचय्य तां वीणां ततः स्वयमवादयत्। श्रोतृकर्णेषु पीयूषच्छटामिव परिक्षिपन् ॥३१॥
देवदत्ताऽब्रवीन्नैव[1] सामान्यस्त्वं कलानिधे। नररूपं प्रपेदाना साक्षादसि सरस्वती ॥३२॥
वीणाकारश्चरणयोः प्रणिपत्येत्यवोचत। स्वामिन् शिक्षे भवत्पार्श्वे वीणावाद्यं प्रसीद मे ॥३३॥
मूलदेवो जगादैवं सम्यग् जानामि न ह्यहम्। किन्तु जानामि तान् ये हि सम्यग् जानन्ति वल्लकीम् ॥३४॥
के नाम ते क्व सन्तीति पृष्टोऽसौ देवदत्तया। अवोचदस्ति पूर्वस्यां पाटलीपुत्रपत्तनम् ॥३५॥ 5
तस्मिन् विक्रमसेनोऽस्ति कलाचार्यो महागुणः। मूलदेवोऽहं च तस्य सदाप्यासन्नसेवकः ॥३६॥
अत्रान्तरे विश्वभूतिर्नाट्याचार्यः समागतः। साक्षाद् भरत इत्यस्मै कथितो देवदत्तया ॥३७॥
मूलदेवोऽप्येवमूचे सत्यमेवायमीदृशः। ग्राहिताभिः कलां युष्मादृशीभिरपि लक्ष्यते ॥३८॥
विश्वभूतिरुपक्रान्ते विचारे भारते ततः। तं खर्व इत्यवाज्ञासीद् बाह्यार्थज्ञा हि तादृशाः ॥३९॥ 10
मेने च धूर्त्तराजेन विद्वन्मान्ययमस्य तत्। ताम्र-स्वर्णालङ्करणस्येवान्तर्दर्शयाम्यहम् ॥४०॥
स्वच्छन्दं भरते तस्य गल्भमानस्य धूर्त्तराट्। पूर्वापरविरोधाख्यं व्याख्याने दोषमग्रहीत् ॥४१॥
विश्वभूतिस्ततः कोपादसंबद्धमभाषत। प्राज्ञैः पृष्टा ह्युपाध्यायाश्छादयन्त्यज्ञतां रुषा ॥४२॥

[1] °न्नैवं खं. ॥

॥२९९॥

त्वमेवं नाटयेर्नाट्याचार्य[1] नारीषु नान्यतः[2]। हसितो मूलदेवेन तूष्णीकः सोऽप्यजायत ॥४३॥
स्मेराक्षी देवदत्ताऽपि पश्यन्ती वामनं मुदा। उपाध्यायस्य वैलक्ष्यमपनेतुमवोचत ॥४४॥
इदानीमुत्सुका यूयमूपाध्यायाः क्षणान्तरे। परिभाव्याभिधातव्यं प्रश्ने विज्ञानशालिनाम् ॥४५॥
देवदत्ते वयं यामो नाट्यस्यावसरोऽधुना। सज्जस्व त्वमपीत्युक्त्वा विश्वभूतिस्ततो ययौ ॥४६॥
देवदत्ताऽप्यथादिक्षदावयोः स्नानहेतवे। अङ्गमर्दो निर्विमर्दे[3] कश्चिदाहूयतामिति ॥४७॥
अजल्पद्धूर्त्तराजोऽपि व्याहार्षीर्माऽङ्गमर्दकम्। सुभ्रू यद्यनुजानासि तवाभ्यङ्गं करोमि तत् ॥४८॥
किमेतदपि वेत्सीति तयोक्तः प्रत्युवाच सः। न जानामि स्थितः किन्तु तज्ज्ञानामहमन्तिके ॥४९॥
आदेशाद्देवदत्तायाः पक्वतैलान्यथाययुः। अभ्यङ्गं कर्तुमारेभे स मायावामनस्ततः ॥५०॥
मृदु-मध्य-दृढं स्थानौचित्यात् पाणिं प्रचारयन्[4]। अङ्गे तस्या मूलदेवः सुखमद्वैतमादधे ॥५१॥
सर्वार्थेषु कलादाक्ष्यमीदृग् नान्यस्य कस्यचित्। न सामान्योऽयमित्यंह्र्योः पतित्वा साऽब्रवीदिति ॥५२॥
गुणैरपि त्वमाख्यातः कोऽप्युत्कृष्टः पुमानिति। मयूरव्यंसकाऽऽत्मानं किं गोपयसि मायया ॥५३॥
प्रसीद दर्शयात्मानं किं मोहयसि मां मुहुः। भक्तानामुपरोधेन साक्षात् स्युर्देवता अपि ॥५४॥
आकृष्य गुलिकामास्याद् रूपं तत् परिवर्त्य सः। प्रतिपेदे निजं रूपं शैलूष इव तत्क्षणात् ॥५५॥

5 10

१ छादयेर्नां° ख. च. ङ. ॥ २ मान्यतः खं. ॥ ३ निर्विमर्दः च. ॥ ४ प्रसारयन् मु. ॥

अनङ्गमिव जाताङ्गं तं लावण्यैकसागरम् । उद्वीक्ष्य विस्मिता सोचे प्रसादः साधु मे कृतः ॥५६॥
तस्यार्पयित्वा स्नानीयं पोतं प्रीता स्वपाणिना । अङ्गाभ्यङ्गं व्यरचयद्देवदत्ताऽनुरागिणी ॥५७॥
खलिप्रक्षालनापूर्वं पिष्टातकसुगन्धिभिः । कवोष्णवारिधाराभिस्ततो द्वावपि सस्नतुः ॥५८॥
देवदूष्ये देवदत्तोपनीते पर्य्यधत्त सः । सुगन्ध्याढ्यानि भोज्यानि बुभुजाते समं च तौ ॥५९॥
रहःकलारहस्यानि वयस्यीभूतयोस्तयोः । मिथः कथयतोरेकः क्षणः सुखमयो ययौ ॥६०॥ 5
ततः सा व्याजहारैवं हृतं मे हृदयं त्वया । गुणैर्लोकोत्तरैर्नाथ प्रार्थयेऽहं तथाऽप्यदः ॥६१॥
यथा पदमकार्षीस्त्वं[1] हृदये मम सुन्दर । विदधीथास्तथा नित्यमस्मिन्नेव निकेतने ॥६२॥
मूलदेवोऽप्युवाचैवं निर्धनेषु विदेशिषु । अस्मादृशेषु युष्माकमनुबन्धो न युज्यते ॥६३॥
गुणानां पक्षपातेनानुरागो निर्धनेऽपि चेत् । वेश्यानामर्जनाभावात् कुलं सीदेत्तदाऽखिलम् ॥६४॥
बभाषे देवदत्ताऽपि को विदेशो भवादृशाम् । सर्वः स्वदेशो गुणिनां नृणां केसरिणामिव ॥६५॥ 10
आत्मानमर्थयन्त्यर्थैर्मूर्खा हि बहिरेव नः । प्रवेशं न लभन्तेऽन्तर्विना त्वां गुणमन्दिर[2] ॥६६॥
सर्वथा प्रतिपत्तव्यं त्वया सुभग मद्वचः । इत्युक्ते मूलदेवेनाप्यामेति जगदे वचः ॥६७॥
ततश्च क्रीडतोः स्नेहाद्विनोदैर्विविधैस्तयोः । राजद्वाःस्थोऽब्रवीदेत्याऽऽगच्छ प्रेक्षाक्षणोऽधुना ॥६८॥

१ °काषीस्त्वं शां. खं. ॥   २ °मन्दिरं खं. ॥



॥३०१॥

छन्नवेषं मूलदेवं सा नीत्वा राजवेश्मनि । राज्ञोऽग्रे नृत्तमारेभे[1] रम्भेव करणोज्ज्वलम् ॥६९॥
शक्रपाटहिकसमः पाटप्रकटने पटुः । मूलदेवोऽपि निपुणोऽवादयत् पटहं ततः ॥७०॥
राजाऽरज्यत नृत्तेन तस्याः करणशालिना । प्रसादं मार्गयेत्यूचे तं च न्यासीचकार सा ॥७१॥
सा मूलदेवसहिता जगौ चानु ननर्त्त च । ददौ चास्यै नृपस्तुष्टः स्वाङ्गलग्नं विभूषणम् ॥७२॥
पाटलीपुत्रराजस्य राजदौवारिकस्ततः । हृष्टो विमलसिंहाख्य इत्युवाच महीपतिम् ॥७३॥
अयं हि पाटलीपुत्रे मूलदेवस्य धीमतः । कलाप्रकर्षोऽमुष्या वा न तृतीयस्य कस्यचित् ॥७४॥
ततः प्रदीयतां देव मूलदेवादनन्तरम् । विज्ञानिषु च पट्टोऽस्यै पताका नर्त्तकीषु च ॥७५॥
ततो राज्ञा तथा दत्ते साऽब्रवीदेष मे गुरुः । ततः प्रसादमादास्ये स्वामिन्नस्याभ्यनुज्ञया ॥७६॥
राजाऽप्यवोचत् तदियं महाभागानुमन्यताम् । धूर्त्तोऽप्यवादीद्यद्देव आज्ञापयति तत् कुरु ॥७७॥
अत्रान्तरे धूर्त्तराजो वीणां स्वयमवादयत् । हरन् मनांसि विश्वेषां विश्वावसुरिवापरः ॥७८॥
ततो विमलसिंहेन बभाषे देव खल्वयम् । मूलदेवश्छन्नरूपो नापरस्येदृशी कला ॥७९॥
विज्ञानातिशयस्यास्य प्रयोक्ता नापरः क्वचित् । मूलदेवं विना देव सर्वथाऽसौ स एव तत् ॥८०॥
राजा जगाद यद्येवं तदाहो स्वं प्रदर्शय । दर्शने मूलदेवस्य रत्नस्येवास्मि कौतुकी ॥८१॥

---

१ नृत्यमा॰ मु. शां. ॥

गुलिकां मूलदेवोऽपि मुखादाकृष्य तत्क्षणात् । व्यक्तोऽभूत् कान्तिमान् मेघनिर्मुक्त इव चन्द्रमाः ॥८२॥
साधु ज्ञातोऽसि विज्ञानिन्निति सप्रेमभाषिणा । ततो विमलसिंहेन धूर्त्तसिंहः स सस्वजे ॥८३॥
अपतन्[1]मूलदेवोऽपि[2] नृदेवस्य पदाब्जयोः । राजाऽपि तं प्रसादेन सगौरवमपूजयत् ॥८४॥
एवं च देवदत्ताऽपि तस्मिन्नत्यनुरागिणी । पुरूरवस्युर्वशीवाऽन्वभूद्विषयजं सुखम् ॥८५॥
अतिष्ठन्मूलदेवोऽपि न विना द्यूतदेवनम् । भवितव्यं हि केनापि दोषेण गुणिनामपि ॥८६॥ 5
ययाचे देवदत्ताऽपि धिग् द्यूतं त्यज्यतामिति । नात्यजन्मूलदेवस्तत् प्रकृतिः खलु दुस्त्यजा ॥८७॥
तस्यां नगर्यामासीच्च धनेन धनदोपमः । सार्थवाहोऽचलो नाम मूर्त्योऽपर इव स्मरः ॥८८॥
आसक्तो देवदत्तायां मूलदेवाग्रतोऽपि[3] सः । कृतस्वीकरणो भाट्या बुभुजे तां निरन्तरम् ॥८९॥
ईर्ष्यां स मूलदेवाय महतीं वहति स्म च । अन्विष्यति स्म तच्छिद्राण्युपद्रवचिकीर्षया ॥९०॥
तच्छङ्कया मूलदेवोऽप्यगात्तद्वेश्मनि च्छलात् । पारवश्येऽप्यविच्छिन्नो रागः प्रायेण रागिणाम् ॥९१॥ 10
देवदत्तां जनन्यूचे धूर्त्ततामृगधूर्त्तकम्[4] । निर्धनं द्यूतकारं च मूलदेवं सुते त्यज ॥९२॥
प्रत्यहं विविधं[5] द्रव्यं यच्छत्यस्मिन् रमस्व तत् । अचले निश्चलरती रम्भेव धनदात्मजे ॥९३॥
देवदत्ता प्रत्युवाच मातरेकान्ततो ह्यहम् । धनानुरागिणी नास्मि किं त्वस्मि गुणरागिणी ॥९४॥

१ न्यप° च. मु. ॥ २ °देवो नृपदेवस्य खं. ॥ ३ °वाग्रतो शां. ॥ ४ धूर्तना° ख. ॥ ५ विविधद्रव्यं शां. ॥

अमुष्य द्यूतकारस्य गुणास्तिष्ठन्ति कीदृशाः। इति कोपाज्जनन्योक्ता देवदत्तेत्यभाषत ॥९५॥
धीरो[1] वदान्यो विद्याविद् गुणरागी स्वयं गुणी। विशेषज्ञः शरण्योऽयं नामुं त्यक्ष्यामि तत् खलु ॥९६॥
ततश्च कुट्टनी[2] रुष्टा कूटजुष्टा प्रचक्रमे। उच्चाटयितुं तनयां स्वैरिणीं[3] वैरिणीमिव ॥९७॥
साऽदात्तयाऽर्थिते[4] माल्ये निर्माल्यं सरके[5] पयः। इक्षुखण्डे वंशखण्डं श्रीखण्डे नीपखण्डलम् ॥९८॥
सकोपं देवदत्तोक्ता कुट्टनी कुटिलाऽब्रवीत्। मा कुपः पुत्रि यादृक्षो यक्षस्तादृग् बलिः किल ॥९९॥
लतेव कण्टकितरुं किमालम्ब्य स्थिताऽस्यमुम्। सर्वथा मूलदेवं तत् त्यजाऽपात्रमिमं पतिम् ॥१००॥
अवादीद्देवदत्तैवं मातः किमिति मुह्यसि। पुमान् पात्रमपात्रं वा किमुच्येतापरीक्षितः ॥१०१॥
परीक्षा क्रियतां तर्हीत्युक्ता साक्षेपमम्बया। मुदिता देवदत्तैवमादिदेश स्वचेटिकाम् ॥१०२॥
यदिक्षौ देवदत्ताया अभिलाषोऽद्य विद्यते। प्रेष्यन्तामिक्षवः सार्थवाहाऽचल ततस्त्वया ॥१०३॥
तयोक्तः सार्थवाहोऽपि धन्यमानी प्रमोदतः। शकटानीक्षुपूर्णानि प्रेषयामास तत्क्षणात् ॥१०४॥
हृष्टा कुट्टन्युवाचैवमचलस्वामिनो हले। अचिन्तनीयमौदार्यं पश्य चिन्तामणेरिव ॥१०५॥
विषण्णा देवदत्तोचे किमम्बाऽस्मि करेणुका। भक्षणायेक्षवः क्षिप्ता यत् समूल-दला-ऽग्रकाः ॥१०६॥




---

१ चीरो शां. ॥ २ कुट्टिनी मु.। एवमग्रेऽपि ॥ ३ स्वैरिणी शां. मु. ॥ ४ °त्तत्प्रार्थिते खं. ॥
५ शरके मु.। सरको मद्यविशेषः ॥

||३०५||

आदिश्यतां मूलदेवोऽप्यस्मिन्नर्थे भुजिष्यया । विवेके ज्ञायते मातर्द्वयोरपि यथाऽन्तरम् ॥१०७॥
मूलदेवोऽपि चेट्योक्त इक्षूनादाय पञ्चषान् । मूला-ऽग्राणि त्यजन् मङ्क्षु निस्ततक्ष विचक्षणः ॥१०८॥
कठोरत्वेन दुश्चर्वपर्वग्रन्थीन् परित्यजन् । द्वयङ्गुला गण्डिकाश्चक्रे पीयूषस्येव कुण्डिकाः ॥१०९॥
चतुर्जातेन संस्कृत्य कर्पूरेणाधिवास्य च । शूलप्रोता वर्द्धमानसंपुटे प्राहिणोत् स ताः ॥११०॥
देवदत्ताऽपि ताः प्रेक्ष्य बभाषे शम्भलीमिति । धूर्त्तशा-ऽचलयोः पश्य स्वर्ण-रीर्योरिवान्तरम् ॥१११॥
कुट्टन्यचिन्तयदहो महामोहान्धमानसा । मृगीव मृगतृष्णाम्भो धूर्त्तमेषाऽनुधावति ॥११२॥
स कोऽप्युपायः क्रियते येन निष्कास्यते पुरात् । अत्युष्णजलसेकेन बिलादिव महोरगः ॥११३॥
कुट्टनी मूलदेवस्योच्चाटनायाचलं जगौ । कर्त्तव्यः कृत्रिमो ग्रामगमनोपक्रमस्त्वया ॥११४॥
ग्रामे यास्यामीत्यलीकं सार्थवाह त्वमञ्जसा । कथयेर्देवदत्ताया विश्रब्धा सा यथा भवेत् ॥११५॥
ततो ग्रामान्तरगतं श्रुत्वा त्वां धूर्त्तपांसनः । निःशङ्कं देवदत्तायाः स समीपमुपैष्यति[1] ॥११६॥
देवदत्तान्तिके मूलदेवे दीव्यति निर्भरम् । आगच्छेः सर्वसामग्रया मत्सङ्केतेन सुन्दर ॥११७॥
ततस्तथा कथमपि त्वमेतमवमानयेः[2] । यथैतां न भजेद् भूयस्तित्तिरीमिव तित्तिरिः[3] ॥११८॥
तत्तथा प्रतिपद्याथ यास्यामि ग्राममित्यसौ । आख्याय देवदत्ताया द्रव्यं दत्त्वा च निर्ययौ ॥११९॥

१ °मुपेष्यति खं. ॥ २ त्वमेन° खं. ॥ ३ तित्तिरः खं. ॥



5 10

||३०५||

ततस्तया निरातङ्कं मूलदेवे प्रवेशिते। आह्वास्त कुट्टन्यचलं कुट्टाकभटवेष्टितम् ॥१२०॥
देवदत्ता च सहसा प्रविशन्तं ददर्श तम्। मूलदेवं च खट्वाऽधो न्यधात् पत्रकरण्डवत् ॥१२१॥
तथास्थितं मूलदेवं कुट्टन्या ज्ञापितोऽचलः। पर्यङ्के कृतपर्य्यङ्को निषसाद स्मिताननः ॥१२२॥
अवोचदचलस्तत्र कुर्वन् कैतवनाटितम्। देवदत्ते वयं श्रान्ताः स्नास्यामः प्रगुणीभव ॥१२३॥
देवदत्ताऽब्रवीदेवं विलक्षवितथस्मिता। स्नानयोग्यासने तर्हि स्नातुं पादोऽवधार्यताम् ॥१२४॥
एवमुत्थाप्यमानोऽपि सादरं देवदत्तया। विशेषतोऽभूत् खट्वायामचलो निश्चलासनः ॥१२५॥
शशाक धूर्त्तराजोऽपि स्थातुं गन्तुं च नो तदा। प्रायेण विगलन्त्येवास्वस्थे मनसि शक्तयः ॥१२६॥
अवोचदचलो देवदत्ते स्वप्नो मयेक्षितः। पर्यङ्केऽस्मिन् कृताभ्यङ्गः सचेलः स्नातवानहम् ॥१२७॥
स्वप्नं सत्यापयिष्यामि तदर्थमहमागमम्। सत्यीकृतो ह्ययं स्वप्नः शुभोदर्काय जायते ॥१२८॥
कुट्टन्यवोचदादेशः प्रमाणं जीवितेशितुः। पुत्रि किं न श्रुतं स्वामी यदिच्छति करोति तत् ॥१२९॥
देवदत्ताऽब्रवीदार्य किमेतदुचितं तव। अदूष्यदेवदूष्येयं तूलिका यद्विनाश्यते[1] ॥१३०॥
अचलोऽप्यवदद् भद्रे कार्पण्यं किमिदं तव। शरीरमपि यच्छन्ति पत्यर्थे त्वादृशः स्त्रियः ॥१३१॥
किं तेऽन्यास्तूलिका न स्युः पतिर्यस्याः किलाऽचलः। लवणेन स किं सीदेद्यस्य रत्नाकरः सखा ॥१३२॥

---

१ यद्विनश्यति मु. ॥

5

10

ततो भाटीविवशया कारितो देवदत्तया। अभ्यङ्गोद्वर्त्तनादीनि पर्यङ्कस्थित एव सः ॥१३३॥
स्नप्यमाने[1] ततस्तस्मिन्नीशे खलिजलादिना। मूलदेवश्चण्ड इव भ्रियते स्म समन्ततः ॥१३४॥
आजुहावाऽचलभटान् कुट्टनी दृष्टिसंज्ञया। निदिदेशाऽचलं चाशु धूर्त्ताकर्षणकर्मणे ॥१३५॥
कोपाटोपसमाविष्टो मूलदेवं ततोऽचलः। चकर्ष धृत्वा केशेषु द्रौपदीमिव कौरवः ॥१३६॥
तं चोवाच नयज्ञोऽसि विद्वानसि सुधीरसि। कर्मणोऽस्यानुरूपोऽद्य ब्रूहि कस्तेऽस्तु निग्रहः ॥१३७॥
धनाधीनशरीरेयं वेश्या तां चेद् रिरंससे। ग्रामपङ्कवद् भूरिधनेन न किमग्रहीः ॥१३८॥
मूलदेवोऽपि निष्पन्दस्तदा मुकुलितेक्षणः। विफलीभूतफालस्योदुवाह द्वीपिनस्तुलाम् ॥१३९॥
एवं च चिन्तयामास सार्थवाहपतिस्ततः। न निग्राह्यो महात्माऽसौ दैवादेवं दशां गतः ॥४०॥
इति चोवाच मुक्तोऽद्य त्वमस्मादागसो मया। कृतज्ञोऽस्युपकर्त्तव्यं त्वयाऽपि समये मम ॥१४१॥
मुक्तोऽथ तेन धूर्त्तेशो वेश्मतो निर्ययौ ततः। तूर्णं तूर्णं परिक्रामन्[2] रणाद् भग्न इव द्विपः ॥१४२॥
गत्वा पुरीपरिसरे सस्नौ सरसि विस्तृते। शरत्काल इव भ्रेजे तत्क्षणात् क्षालिताम्बरः ॥१४३॥
अचलस्यापकर्तुं चोपकर्त्तुं च स धूर्त्तराट्। मनोरथरथारूढोऽचलद् वेणातटं[3] प्रति ॥१४४॥
द्वादशयोजनायामां स श्वापदकुलाकुलाम्। दुर्दशायाः प्रियसखीमिव प्राप महाटवीम् ॥१४५॥

१ स्नाप्य° शां.। "ज्वल-ह्वल-ह्मल-ग्ला-स्ना-वनू-वम-नमोऽनुपसर्गस्य वा" सि० ४।२।३२॥
२ °क्रामद्रणा° खं॥ ३ वेण्णातटं ख.। पद्यमग्रेऽपि॥

पारावारमिवापारां तितीर्षुस्तां महाटवीम्। सहायं चिन्तयामास तरण्डमिव धूर्त्तराट् ॥१४६॥
कस्मादप्यागतोऽकस्मादभ्रादिव परिच्युतः। शम्बलस्थगिकां बिभ्रत् कोऽपि टक्को द्विजस्तदा ॥१४७॥
असहायः सहायीयं तं विप्रं क्षिप्रमागतम्। वृद्धो यष्टिमिव प्राप्य मूलदेवो मुदं ययौ ॥१४८॥
जगाद मूलदेवस्तं ममारण्ये प्रपेतुषः। आत्मच्छायाद्वितीयस्य दिष्ट्या मिलितवानसि ॥१४९॥
स्वच्छन्दं वार्त्तयिष्यावस्तदावां द्विजसत्तम। मार्गखेदापहरणी विद्या वार्त्ता हि या पथि ॥१५०॥
दूरे कियति गन्तव्यं स्थाने जिगमिषा क्व ते। कथ्यतां भो महाभाग मार्गमैत्रीं वशीकुरु ॥१५१॥
विप्रोऽप्याख्यद् गमिष्यामि पारेऽरण्यमवस्थितम्। स्थानं वीरनिधानाख्यं ब्रूहि त्वं कुत्र यास्यसि ॥१५२॥
मूलदेवोऽब्रवीद्यास्याम्यहं वेणातटे पुरे। विप्रोऽप्यूचे तदेहि त्वमेकोऽध्वा द्वयोरावयोः ॥१५३॥
ललाटन्तपतपने मध्याह्नेऽथ समागते। मिलिताभ्यां च गच्छद्भ्यां ताभ्यां प्रापि महासरः ॥१५४॥
पाणि-पाद-मुखं मूलदेवः प्रक्षाल्य वारिणा। निरन्तरतरुच्छाये भूतले समुपाविशत् ॥१५५॥
स्थगिकायाः समाकृष्य सक्तूनालोड्य वारिणा। एकोऽपि भोक्तुमारेभे टक्को रङ्क इव द्रुतम् ॥१५६॥
धूर्त्तोऽप्यचिन्तयदसौ नाऽऽदौ मे भोजनं ददौ। अतिक्षुधाऽऽतुरो भुङ्क्ते भुक्तः सन् खलु दास्यति ॥१५७॥
भुक्त्वा तत्रोत्थिते विप्रे बध्नति स्थगिकामुखम्[1]। दध्यौ धूर्त्तोऽपि यद्यद्य नादात्तच्छ्वः प्रदास्यति ॥१५८॥

१ स्थतिका° शां. ॥



5

10

तस्मिन्नदत्त्वा भुञ्जाने मूलदेवस्तदाशया । त्रीन् वासरानगमयन्नृणामाशा हि जीवितम् ॥१५९॥
अटवीं तां परित्यज्य धूर्त्तराजं द्विजोऽवदत् । स्वस्ति तुभ्यं महाभाग यास्याम्यहमितोऽधुना ॥१६०॥
तमूचे मूलदेवोऽपि त्वत्साहाय्यादियं मया । द्वादशयोजनायामा क्रोशवल्लङ्घिताऽटवी ॥१६१॥
वेणातटे गमिष्यामि मूलदेवाभिधोऽस्म्यहम् । तत्र मे कथयेः कार्यं कथ्यतां किं च नाम ते ॥१६२॥
लोकैर्निर्घृणशर्मेति विहितापरनामकः । विप्रोऽहं सद्धडो नामेत्युक्त्वा टक्कस्ततो ययौ ॥१६३॥
गच्छता मूलदेवेन ततो वेणातटं प्रति । दृष्टः संवसथः कश्चिद्वसदावसथः पथि ॥१६४॥
प्रविष्टस्तत्र भिक्षार्थं क्षामकुक्षिर्बुभुक्षया । भ्रमन्नासादयामास कुल्माषान् कुत्रचिद् गृहे ॥१६५॥
ग्रामान्निष्क्रामतस्तस्याभिमुखः कोऽप्यभून्मुनिः । मासक्षपणपुण्यात्मा पुण्यपुञ्ज इवाङ्गवान् ॥१६६॥
तं दृष्ट्वा मुदितः सोऽभूदहो मे सुकृतोदयः । यन्मयाप्तमिदं पात्रं यानपात्रं भवोदधौ ॥१६७॥
साधोः[1] कुल्माषदानेन रत्नत्रितयशालिनः । उन्मीलतु चिरादद्य मद्विवेकतरोः फलम् ॥१६८॥
कुल्माषान् साधवे दत्त्वा मूलदेवः पपाठ च । धन्यास्ते खलु येषां स्युः कुल्माषाः साधुपारणे ॥१६९॥
तस्य भावनया हृष्टा बभाषे व्योम्नि देवता । अर्द्धश्लोकेन याचस्व भद्र किं ते प्रदीयताम् ॥१७०॥
प्रार्थयामास सद्यस्तां मूलदेवोऽपि देवताम् । गणिका देवदत्तेभसहस्रं राज्यमस्तु मे ॥१७१॥

---

१ साधो खं. ॥



॥३०९॥

एवमस्त्विति देव्यूचे मूलदेवोऽपि तं मुनिम्। वन्दित्वाऽथ ग्राममध्ये भिक्षित्वा बुभुजे स्वयम् ॥१७२॥
मार्गं क्रामन् क्रमेणासौ प्राप वेणातटं पुरम्। सुष्वाप पान्थशालायां निद्रासुखमवाप च ॥१७३॥
यामिन्याः पश्चिमे यामे स सुप्तः स्वप्नमैक्षत। यत् पूर्णमण्डलश्चन्द्रः प्रविवेश मुखे मम ॥१७४॥
तमेव स्वप्नमद्राक्षीत् कोऽपि कर्पटिकस्तदा[1]। अन्यकर्पटिकानां च प्रबुद्धस्तमचीकथत् ॥१७५॥
तेषु कर्पटिकेष्वेकः स्वप्नमेवं व्यचारयत्। अचिरेण लप्स्यसे त्वं सखण्डघृतमण्डकम्[2] ॥१७६॥
हृष्टः कर्पटिकः सोऽभूदेवं भूयादिति ब्रुवन्। जायेत बदरेणापि श्रृगालस्य महोत्सवः ॥१७७॥
स्वप्नं नाचीकथत् तेषामज्ञानां[3] धूर्त्तराड् निजम्। मूर्खा हि दर्शिते रत्ने दृषत्खण्डं प्रचक्षते ॥१७८॥
मण्डकं कर्पटिः प्राप गृहाच्छादनपर्वणि। प्रायेण फलति स्वप्नो विचारस्यानुसारतः ॥१७९॥
धूर्त्तोऽपि प्रातरारामे गत्वा पुष्पोच्चयादिना। अप्रीणान्मालिकं लोकंपृणं कर्मापि तादृशाम् ॥१८०॥-
गृहीत्वा मालिकात्तस्मात् स पुष्पाणि फलानि च। शुचिर्भूत्वा ययौ वेश्म स्वप्नशास्त्रविपश्चितः ॥१८१॥
मूलदेवस्ततो नत्वा दत्त्वा पुष्पफलानि च। उपाध्यायाय तज्ज्ञाय शशंस स्वप्नमात्मनः ॥१८२॥
मुदितः सोऽवदद्विद्वान् वत्स स्वप्नफलं तव। सुमुहूर्त्ते कथयिष्याम्यद्यास्माकं भवातिथिः ॥१८३॥
मूलदेवं स्नपयित्वा भोजयित्वा च गौरवात्। परिणाययितुं कन्यामुपाध्याय उपानयत् ॥१८४॥

१ कार्पटिक॰ मु। पयमग्रेऽपि ॥ २ सखण्डं खं.। सखण्डु शां. ॥ ३ गृहस्छा (च्छा)दन॰ खं. ॥

बभाषे मूलदेवोऽपि ताताऽज्ञातकुलस्य मे। कन्यां प्रदास्यसि कथं विचारयसि किं न हि ॥१८५॥
उपाध्यायोऽप्युवाचैवं त्वन्मूर्त्याऽपि कुलं गुणाः। ज्ञातास्तत् सर्वथा कन्या ममेयं परिणीयताम् ॥१८६॥
तद्वाचा मूलदेवोऽपि कन्यकां तामुपायत। कार्यसिद्धेर्भविष्यन्त्याः प्रादुर्भूतमिवाननम् ॥१८७॥
मध्ये दिनानां सप्तानां त्वं राजेह भविष्यसि। इति तस्य स्वप्नफलमुपाध्यायो न्यवेदयत् ॥१८८॥
हृष्टस्तत्र वसन् धूर्त्तराजो गत्वा बहिः पुरात्। सुष्वाप चम्पकतले संप्राप्ते पञ्चमेऽहनि ॥१८९॥ 5
तदा च नगरे तस्मिन्नप्रेतनमहीपतिः। अपुत्रो निधनं प्राप निष्पाद इव पादपः ॥१९०॥
मन्त्रोक्षिताः पुरीभा-ऽश्व-च्छत्र-भृङ्गार-चामराः। भ्रेमुः प्रापुर्न राज्यार्हं दुष्प्रापस्तादृशो जनः ॥१९१॥
ततो बहिः पर्यटन्तो निकषा चम्पकद्रुमम्। अपश्यन्मूलदेवं ते नरदेवपदोचितम् ॥१९२॥
हयेन हेषितं चक्रे गजेनोर्जितगर्जितम्। भृङ्गारेण च तस्याऽर्घश्चामराभ्यां च वीजनम् ॥१९३॥
पुण्डरीकं स्वर्णदण्डमण्डितं तस्य चोपरि। शरदभ्रमिवादभ्रतडिद्दण्डमजृम्भत ॥१९४॥ 10
तं चाधिरोहयामास स्वस्कन्धे जयकुञ्जरः। स्वाम्याप्तिमुदितैर्लोकैश्चक्रे जयजयारवः ॥१९५॥
पुरं महातूर्यरवैः पूर्यमाणदिगन्तरम्। तत् प्राविशन्मूलदेवो राजराज इवालकाम् ॥१९६॥
उत्तीर्णो राजहर्म्येऽसौ सिंहासनमधिष्ठितः। समन्ततः समायातैः सामन्तैरभ्यषिच्यत ॥१९७॥
अथोचे देवता व्योम्नि देवतानां प्रसादतः। अयं विक्रमराजाख्यो राजा जज्ञे कलानिधिः ॥१९८॥

॥३११॥

वर्त्तिष्यन्ते न येऽमुष्य शासने क्षितिशासितुः । तानहं निग्रहीष्यामि महीभृत इवाशनिः ॥१९९॥
तद्गिरा विस्मितं भीतं सर्वं प्रकृतिमण्डलम् । यतेरिवेन्द्रियग्रामः सदा तस्य वशेऽभवत् ॥२००॥
ततः स राजा विषयसुखान्यनुभवन् व्यधात् । प्रीतिमुज्जयिनीशेन मिथः संव्यवहारतः ॥२०१॥
तदानीं देवदत्ताऽपि मूलदेवविडम्बनाम् । तादृक्षीं प्रेक्ष्य साक्षेपा व्यब्रवीदचलं प्रति ॥२०२॥
किं ज्ञाता द्रव्यदर्पान्ध त्वया कुलगृहिण्यहम् । मुमूर्षो मूर्ख[1] मद्गेहे व्यवाहार्षीर्यदीदृशम् ॥२०३॥ 5
त्वयाऽस्मदीयसदने नागन्तव्यमतः परम् । इति निष्कास्य तं गेहात् समीपे नृपतेरगात् ॥२०४॥
तया च याचितो राजा स वरो दीयतामिति । यथेच्छं ब्रूहि यच्छामि तं येनेत्यवदन्नृपः ॥२०५॥
सोचे मां प्रति नाऽऽज्ञाप्यो मूलदेवं विना पुमान् । वारणीयोऽचलश्चायमागच्छन् मम वेश्मनि ॥२०६॥
एवमस्त्विति राज्ञो(ज्ञो)क्त्वा हेतुः कोऽत्रेति पृष्टवान् । शशंस माधवी देवदत्ताभ्रूसंज्ञया ततः ॥२०७॥
जितशत्रुनृपः कोपाच्चलितभ्रूलतस्ततः । सार्थवाहं तमाहूय साक्षेपमिदमब्रवीत् ॥२०८॥ 10
मत्पुरीमण्डनावेतौ रत्नभूतावरे त्वया । मूर्खेण धनमत्तेन ग्रावणीव निघर्षितौ ॥२०९॥
ततोऽमुष्यापराधस्य प्राणापहरणं तव । दण्डोऽस्त्विति नरेन्द्रोक्ते देवदत्ता न्यवारयत् ॥२१०॥
त्वं यद्यप्यनया त्रातोऽधुना त्राणं तथापि ते । मूलदेवे समानीते भवेदित्यभ्यधान्नृपः ॥२११॥

---

[1] मूर्खयद् गेहे क छ. ॥

॥३१३॥

नृपं नत्वा[1] बहिर्गत्वा सार्थवाहः प्रचक्रमे। नष्टरत्नमिवान्वेष्टुं मूलदेवं समन्ततः ॥२१२॥
मूलदेवमपश्यन् स भीतो न्यूनतया तथा। भाण्ड भृत्वा ययौ शीघ्रं पारसकूलमण्डलम् ॥२१३॥
दध्यौ च मूलदेवोऽपि विना मे देवदत्तया। भोज्येनाऽलवणेनेव प्राज्यराज्यश्रियाऽपि किम् ॥२१४॥
ततः स देवदत्ताया जितशत्रोश्च भूपतेः। चतुरं प्रेषयमास दूतं प्राभृतसंयुतम् ॥२१५॥
गत्वोज्ञयिन्यां दूतोऽपि जितशत्रुं व्यजिज्ञपत्। देवतादत्तराज्यश्रीर्मूलदेवो वदत्यदः ॥२१६॥ 5
यथा मे देवदत्तायां प्रेम जानीथ तत्तथा। यद्यस्यै रोचते वोऽपि तदियं प्रेष्यतामिति ॥२१७॥
ततोऽवददवन्तीशस्तेनेदं कियदर्थितम्। राज्ञा विक्रमराजेन भेदो राज्येऽपि नास्ति नः ॥२१८॥
आकार्य देवदत्तां च जगादोज्ञयिनीपतिः। दिष्टया जाताऽसि भद्रे त्वं चिरात् पूर्णमनोरथा ॥२१९॥
राजा जज्ञे मूलदेवो देवतायाः प्रसादतः। त्वामानेतुं च स प्रैषीत् प्रधानपुरुषं निजम् ॥२२०॥
ततस्त्वं तत्र गच्छेति प्रसादाज्जितशत्रुणा। आदिष्टा देवदत्ताऽगाद्वेणातटपुरं क्रमात् ॥२२१॥ 10
राजा विक्रमराजोऽपि महोत्सवपुरःसरम्। स्वचेतसीव विपुले स्ववेश्मनि निनाय ताम् ॥२२२॥
जिनार्चामर्चतस्तस्य सम्यक् पालयतः प्रजाः। दीव्यतो देवदत्तां च त्रिवर्गोऽभूदबाधितः ॥२२३॥
इतश्च पारसकूलाद् वह्वात्तक्रेयवस्तुकः। आययावचलस्तत्र जलपूर्ण इवाम्बुदः ॥२२४॥ ॥३१३॥

१ नत्वा ततो गत्वा मु. शां. ॥

लक्ष्मीमहत्त्वपिशुनैर्मणि-मौक्तिक-विद्रुमैः । भृत्वा विशालं स स्थालं महीनाथमुपास्थित[1] ॥२२५॥
अचलोऽयमिति क्षिप्रमुपलक्षितवान् नृपः । दृष्ट्वा प्रागूजन्मसम्बन्धमपि प्राज्ञाः स्मरन्ति हि ॥२२६॥
राजानं मूलदेवोऽयमित्यज्ञासीत्तु नाचलः । आत्तवेषं[2] नटमपि स्थूलप्रज्ञा न जानते ॥२२७॥
कुतस्त्वमिति राज्ञोक्तः पारसादित्युवाच सः । ययाचे पञ्चकुलं च भाण्डालोकनकर्मणे ॥२२८॥
कौतुकात् स्वयमेष्याम इत्युक्तो भूभुजा स तु । महाप्रसाद इत्यूचे कोपं को वेत्ति तादृशाम् ॥२२९॥
ततः पञ्चकुलोपेतो ययौ राजा तदाश्रये । मञ्जिष्ठा-पट्टसूत्रादि सोऽपि भाण्डमदर्शयत् ॥२३०॥
भाण्डं किमियदेवेदं सत्यं ब्रूहीति भूभुजा । उक्त इत्युक्तवान् श्रेष्ठी सत्यमेतावदेव मे ॥२३१॥
नृपेण पुनरप्यूचे सम्यग् ज्ञात्वा निवेदय । अस्मद्राज्ये शुल्कचौर्यां यच्छरीरेण निग्रहः ॥२३२॥
अवोचदचलोऽप्येवमस्माभिः कथ्यतेऽन्यथा । पुरतो नापरस्यापि स्वयं देवस्य किं पुनः ॥२३३॥
राजेत्युवाच तर्ह्यस्य श्रेष्ठिनः सत्यभाषिणः । क्रियतामर्द्धदानं च सम्यग्भाण्डं च वीक्ष्यताम् ॥२३४॥
ततः पञ्चकुलेनांह्रिप्रहाराद्वंशवेधतः । असारभाण्डमध्यस्थं सारभाण्डमशङ्क्यत ॥२३५॥
जाताशङ्कैस्ततो राजपुंभिर्बिभिदिरे क्षणात् । शुल्कदस्युमनांसीव भाण्डस्थानानि सर्वतः ॥२३६॥
तैर्यथा शङ्कितं भाण्डवित्तशाठ्यं[3] तथाऽभवत् । परपुरान्तःप्रवेशकारिणो ह्यधिकारिणः ॥२३७॥

१ °मुपस्थितः खं. । °मुपास्थितः रोमु. ॥ २ अन्यवेषं खं. ॥ ३ भाण्डं वित्त° खं. मु. ॥

तज् ज्ञात्वा कुपितो राजा बन्धयामास तं क्षणात् । सामन्ता अपि बध्यन्ते राजादेशाद् वणिक् कियान् ॥२३८॥
ततस्तं मदने नीत्वा छोटयित्वा च बन्धनम् । किं मां प्रत्यभिजानासि पप्रच्छेति महीपतिः ॥२३९॥
अचलोऽपि जगादैवं जगदुद्द्योतकारिणम् । भानुमन्तं भवन्तं च बालिशोऽपि न वेत्ति कः ॥२४०॥
पर्याप्तं चाटुवचनैः सम्यक्[1] चेद् वेत्सि तद्वद । राज्ञेत्युक्तोऽचलोऽवोचत् तर्हि जानामि न ह्यहम् ॥२४१॥
देवदत्तामथाहूय भूपतिस्तमदर्शयत् । इष्टैर्दृष्टा कृतार्थी स्यान्मानसिद्धि[2]र्हि मानिनाम् ॥२४२॥
देवदत्तामसौ दृष्ट्वा ह्रीतः कष्टां दशां ययौ । अग्रेस्त्र्यपभ्राजना हि मृत्योरप्यधिका नृणाम् ॥२४३॥
साऽप्यूचे[3] मूलदेवोऽयमित्युक्तो यस्तदा त्वया । 'एवं कुर्या ममापि त्वं दैवाद् व्यसनमीयुषः' ॥२४४॥
तदसि व्यसनं प्राप्तः प्राणसन्देहकारणम् । मुक्तोऽसि चार्यपुत्रेण नेदृक्षाः क्षुद्रघातिनः ॥२४५॥
ततो विलक्षः स वणिक् पतित्वा पादयोस्तयोः । ऊचे सर्वापराधान् मे तितिक्षध्वं तदा कृतान् ॥२४६॥
रुष्टस्तेनापराधेन जितशत्रुर्महीपतिः । प्रवेशमुज्जयिन्यां मे युष्मद्वाचा प्रदास्यति ॥२४७॥
अथोचे मूलदेवोऽपि मया क्षान्तं तदैव ते । यदा प्रसादो विदधे देव्या श्रीदेवदत्तया ॥२४८॥
ततः प्रसादं दत्त्वोच्चैर्दूतमेकं समर्प्य च । पुरीमुज्जयिनीं गन्तुं विससर्जाचलं नृपः ॥२४९॥
प्रवेशोऽवन्तिनाथेन तस्यावन्त्यामदीयत । मूलदेवस्य वचसा कोपस्तन्मूल एव यत् ॥२५०॥

१ सम्यक् त्वं वेत्सि मु. ॥ २ °न्मनःसिद्धि° मु. शां. ॥ ३ सा तूचे खं. ॥

अन्येद्युर्दुःखविधुराः प्रजाकार्यधुरन्धरम् । मिलित्वा वणिजो मूलदेवमेवं व्यजिज्ञपन् ॥२५१॥
जाग्रत्यपि प्रजात्रातुं त्वयि देव दिवानिशम् । अमुष्यतेदं नगरं परितः परिमोषिभिः ॥२५२॥
कोला इव चिरं[1] चौराः पुरेऽस्मिन् मन्दिराणि नः । प्रतिक्षपं खनन्त्युच्चैर्नारक्षा रक्षितुं क्षमाः ॥२५३॥
अदृश्यमानाः केनापि कृतसिद्धाञ्जना इव । भ्राम्यन्ति चौराः स्वैरं नो गृहेषु स्वगृहेष्विव ॥२५४॥
अचिरान्निग्रहीष्यामि तस्करानयशस्करान् । मूलदेवोऽभिधायैवं वणिजो विससर्ज तान् ॥२५५॥ 5
आदिक्षन्नगराध्यक्षं साक्षेपं क्ष्मापतिस्ततः । अन्विष्य[2] तस्करान् सर्वान् गृहाण निगृहाण च ॥२५६॥
अथोवाच पुराध्यक्षः स्वामिन्नेकोऽस्ति तस्करः । असौ न शक्यते धर्तुं दृष्टनष्टः[3] पिशाचवत् ॥२५७॥
जातामर्षस्ततो राजा महौजा निर्ययौ निशि । नीलाम्बरप्रावरणो नीलाम्बर इवापरः ॥२५८॥
स्थानेषु शङ्कास्थानेषु बभ्राम स्थामधाम सः । दस्युं कमपि नापश्यदहेः पदमिवाम्भसि ॥२५९॥
स सर्वं नगरं भ्रान्तः श्रान्तः सुष्वाप कुत्रचित् । खण्डदेवकुले शैलगुहायामिव केसरी ॥२६०॥ 10
निशाचर इवाकस्मान्निशाचरणदारुणः । तस्कराग्रेसरस्तत्रोपासरन्मण्डिकाभिधः ॥२६१॥
कोऽत्रेति व्याहरन्नुच्चैर्मलिम्लुचपतिस्ततः । रुष्टः सुप्तमिव व्यालं पदा नृपमघट्टयत् ॥२६२॥
चेष्टां स्थानं च चित्तं[4] च जिज्ञासुस्तस्य भूपतिः । ऊचे कर्पटिकोऽस्मीति क्व क्व निष्णा न तादृशाः ॥२६३॥

१ निरातंकाः पुरे ख. । भिभो चौराः पुरे ग. च. ॥ २ अन्विक्ष शां. ॥ ३ दृष्टः नष्टः खं. ॥ ४ वित्तं शां. मु. ॥

एहि कर्पटिकाद्य त्वामदरिद्रीकरोम्यहम् । इत्यूचे तस्करो भूपं मदान्धानां धिगज्ञताम् ॥२६४॥
तमन्वचालीत् सोऽर्थेच्छुः पत्तिवत् पृथिवीपतिः । ममर्द गर्दभस्यापि पादौ कार्याज्जनार्दनः ॥२६५॥
अजानानः स राजानं पार्श्वे मृत्युमिवात्मनः । जगाम धाम कस्यापि श्रेष्ठिनः श्रेष्ठसम्पदः ॥२६६॥
तत्र खात्रं खनित्रेण पातयित्वा स वेश्मनः । जग्राह सारद्रविणं राहुः कुण्डात् सुधामिव ॥२६७॥
अज्ञो राज्ञा समस्तं तद्वाहयामास तस्करः । उदरं मर्दयामास[1] शाकिन्येव स मूढधीः ॥२६८॥
तमुन्मूलयितुं मूलान्मूलदेव उवाह तत् । धूर्त्ता हि कारणोपात्तमार्दवाः कार्यराक्षसाः ॥२६९॥
जीर्णोद्यानं ततो गत्वा गुहामुद्घाट्य सोऽविशत् । निनाय तत्र भूपं च च्छगणारोपितालिवत् ॥२७०॥
आसीन्नागकुमारीव कुमारी तत्र तत्स्वसा । नवयौवनलावण्यपुण्यावयवशालिनी ॥२७१॥
क्षालयाऽस्याऽतिथेः पादावित्यादिष्टा स्वबन्धुना । सोपकूपं ततो भूपमुपावेशयदासने ॥२७२॥
प्रक्षालयन्ती तत्पादकमले कमलेक्षणा । अनुभूय मृदुस्पर्शं तं सर्वाङ्गमुदैक्षत ॥२७३॥
अहो कोऽप्येष कन्दर्पः साक्षादिति सविस्मया । सानुरागा सानुकम्पा साऽब्रवीदिति भूपतिम् ॥२७४॥
पादप्रक्षालनव्याजात् कूपेऽस्मिन्नपरे नराः[2] । अपात्यन्त महाभाग तस्कराणां कुतः कृपा ॥२७५॥
क्षेप्स्यामि नेह कूपे त्वां त्वत्प्रभाववशीकृता । महतामनुभावो हि वशीकरणमद्भुतम् ॥२७६॥

१ दर्शयामास मु. ॥ २ जनाः च ड. ॥

ततो मदुपरोधेन सुन्दरापसर द्रुतम्। द्वयोरप्यन्यथा नाथ कुशलं न भविष्यति ॥२७७॥
विमृश्याथ महीनाथो निर्जगाम द्रुतं ततः। धीमन्तो हि धिया घ्नन्ति द्विषः सत्यपि विक्रमे ॥२७८॥
गते नृपे तु व्याहारि तया गच्छत्यसाविति। स्वक्षूणरक्षणार्थं हि प्रपञ्चो धीमतामयम् ॥२७९॥
कृष्टकङ्कासिजिह्वालो वेताल इव दारुणः। अनुभूपालमुत्तालो दधावे मण्डिकस्ततः ॥२८०॥
तं समासन्नमालोक्य भूपतिर्धीबृहस्पतिः। चत्वरोत्तम्भितग्रावस्तम्भेनाऽन्तरितोऽभवत् ॥२८१॥
कोपान्धनयनश्चासौ स एवैष पुमानिति। कङ्कासिना दृषत्स्तम्भं च्छित्वाऽगाद्धाम मण्डिकः ॥२८२॥
ययौ स्वं धाम राजाऽपि हृष्टश्चौरोपलम्भतः। प्राप्तः सौख्याय जायेत दोषकारी न कस्य वा ॥२८३॥
राजा प्रातस्ततो राजपाटिकाव्याजतो बहिः। दस्युं विश्वमनोदस्युस्तं निरूपयितुं ययौ ॥२८४॥
अथ वस्त्रापणद्वारे कुर्वाणं तुन्नकारताम्। पट्टैर्वेष्टितजङ्घोरुं किञ्चिदुद्घाटिताननम् ॥२८५॥
तस्करं मस्करलतोपेतं छद्मश्लथाकृतिम्। दृष्ट्वोपालक्षयत् क्ष्मापः क्षपादृष्टानुमानतः (युग्मम्) ॥२८६॥
गत्वा हर्म्यं महीनाथोऽभिज्ञानानि निवेदयन्। पुरुषान् प्रेषयामास तस्याऽऽकारणहेतवे ॥२८७॥
न हतः स पुमान्नूनं तद्विजृम्भितमित्यसौ। आहूतोऽमंस्त चौरा हि महाराजिकवेदिनः ॥२८८॥
सोऽगात्ततो राजकुले राज्ञाऽऽस्यत महासने। महाप्रसादं कुर्वन्ति नीतिज्ञा हि जिघांसवः ॥२८९॥
तं भूपतिरभाषिष्ट प्रसादसुखया[1] गिरा। स्वस्वसा दीयतां मह्यं दातव्या एव कन्यका[2]: ॥२९०॥

१ °दमुखया शां मु.॥ २ °का शां. मु.॥

दृष्टपूर्वी स्वसारं मे नापरो निरगात्ततः। अयं स एव राजेति निश्चिक्ये मण्डिको हृदि ॥२९१॥
गृह्यतां मत्स्वसा देव देवकीयैव सा किल। मदीयमन्यदप्येवमवोचत स पार्थिवम् ॥२९२॥
तदानीमप्युपायंस्त रूपातिशयशालिनीम्। तस्य स्वसारं नृपतिः कंसारिरिव रुक्मिणः[1] ॥२९३॥
महामात्यपदे चक्रे तस्करं तं नरेश्वरः। को वेत्ति भूभुजां भावं मध्यं पत्युरिवाम्भसाम् ॥२९४॥
तस्माद् भूषणवस्त्रादि तद्भगिन्यैव भूपतिः। नित्यमानाययदहो धूर्तो धूर्तैरधृष्यत[2] ॥२९५॥
बहु यावत् समाकृष्टं द्रव्यं तावन्नृपेण सा। अभाषि वित्तं त्वद्बन्धोः कियदद्यापि तिष्ठति ॥२९६॥
वित्तमेतावदेवासीदस्य दस्योः स्वसाऽपि हि। एवं न्यवेदयद्राज्ञो गोप्यं प्रियतमे न हि ॥२९७॥
विडम्बनाभिर्बह्वीभिर्मण्डिकं चण्डशासनः। निजग्राह ततो राजा पापानां कुशलं कियत् ॥२९८॥
चौर्यात् श्वशुर्यमपि विक्रमराजराज आनीय मण्डिकमखण्डनयो जघान।
स्तैन्यं न तेन विदधीत सुधीः कथञ्चिदत्रापि जन्मनि विरुद्धफलानुबन्धि ॥२९९॥

[3][ इति मूलदेव-मण्डिकयोः कथानकम् ]

आसीद्राजगृहे सम्पज्जितामरपुरे पुरे। पादाक्रान्तनृपश्रेणिः श्रेणिको नाम पार्थिवः ॥१॥
राज्ञस्तस्य च तनयो नयविक्रमभाजनम्। नाम्नाऽभयकुमारोऽभूत् प्रद्युम्नः श्रीपतेरिव ॥२॥

---

१ रुक्मिणीम् शां. मु. ॥ २ °रघृष्यत खं. ॥ ३ [ ] एतदन्तर्गतः पाठो नास्ति शां. खं. ॥

5

10

॥३१९॥

इतश्च[1] तस्मिन्नगरे वैभारगिरिकन्दरे। चौरो लोहखुराख्योऽभूद्रौद्रो रस इवाङ्गवान् ॥३॥
स तु राजगृहे नित्यं पौराणामुत्सवादिषु। लब्ध्वा छिद्राणि विदधे पिशाचवदुपद्रवम् ॥४॥
आददानस्ततो द्रव्यं भुञ्जानश्च परस्त्रियः। भाण्डागारं निशान्तं वा निजं मेने स तत्पुरम् ॥५॥
चौर्यमेवाभवत्तस्य प्रीत्यै वृत्तिर्न चापरा। अपास्य क्रव्यं क्रव्यादा भक्ष्यैस्तृप्यन्ति नापरैः ॥६॥
तस्यानुरूपो रूपेण चेष्टया च सुतोऽभवत्। भार्यायां रोहिणीनाम्न्यां रौहिणेयोऽभिधानतः[2] ॥७॥
स्वमृत्युसमये प्राप्ते पित्राऽऽहूयेत्यभाषि सः। यद्यवश्यं करोषि त्वमुपदेशं ददामि तत् ॥८॥
अवश्यमेव कर्त्तव्यमादिष्टं भवतां मया। कः पितुः पातयेदाज्ञां पृथिव्यामित्युवाच सः ॥९॥
प्रहृष्टो वचसा तेन चौरो लोहखुरस्ततः। पाणिना संस्पृशन् पुत्रमभाषिष्टेति निष्ठुरम् ॥१०॥
योऽसौ समवसरणे स्थितः सुरविनिर्मिते। विधत्ते देशनां वीरो मा श्रौषीस्तस्य भाषितम् ॥११॥
अन्यत्तु स्वेच्छया वत्स कुर्यास्त्वमनियन्त्रितः। उपदिश्येति पञ्चत्वं प्राप लोहखुरस्ततः ॥१२॥
मृतकार्यं पितुः कृत्वा रौहिणेयस्ततोऽनिशम्। चकार चौरिकां लोहखुरोऽपर इवोद्गतः ॥१३॥
पालयन् पितुरादेशं जीवितव्यमिवात्मनः। स्वदासेरमिवामुष्णात् स राजगृहपत्तनम् ॥१४॥

---

१ इत आरभ्य १११ श्लोकपर्यन्तं समग्रं रौहिणेयचरित्रं त्रिषष्टिशलाकापुरुषचरिते दशमे पर्वण्येकादशे सर्गे समानप्रायं विद्यते ॥ २ रौहिणेयाभि° खं. ॥

तदा च नगर-ग्रामा-ऽऽकरेषु विहरन् क्रमात् । चतुर्दशमहासाधुसहस्रपरिवारितः ॥१५॥
सुरैः संचार्य्यमाणेषु स्वर्णाम्भोजेषु चारुषु । न्यस्यन् पदानि तत्रागाद् वीरश्चरमतीर्थकृत् ॥१६॥
वैमानिकैर्ज्योतिषिकैर्व्यन्तरैरसुरैरपि[1] । सुरैः समवसरणं चक्रे जिनपतेस्ततः ॥१७॥
आयोजनविसर्पिण्या सर्वभाषानुयातया । भारत्या भगवान् वीरः प्रारेभे धर्मदेशनाम् ॥१८॥
तदानीं रौहिणेयोऽपि गच्छन् राजगृहं प्रति । मार्गान्तराले समवसरणाभ्यर्णमाययौ ॥१९॥ 5
एवं स चिन्तयामास पथाऽनेन व्रजामि चेत् । श्रृणोमि वीरवचनं तदाज्ञा भज्यते पितुः ॥२०॥
न चान्यो विद्यते पन्था भवत्वेवं विमृश्य सः । कर्णौ पिधाय पाणिभ्यां द्रुतं राजगृहं ययौ ॥२१॥
एवमन्वहमप्यस्य याता-ऽऽयातकृतोऽन्यदा । उपसमवसरणं पादेऽभज्यत कण्टकः ॥२२॥
औत्सुक्यगमनाद् गाढमग्नं पादे स कण्टकम् । अनुद्धृत्य समुद्धर्तुं न शशाक क्रमात् क्रमम् ॥२३॥
नास्त्युपायोऽपरः कोऽपीत्याकृष्य श्रवणात् करम् । कर्षन् कण्टकमश्रौषीदिति विश्वगुरोर्गिरम् ॥२४॥ 10
महीतलास्पर्शिपादा निर्निमेषविलोचनाः । अम्लानमाल्या निःस्वेदा नीरजोऽङ्गाः सुरा इति ॥२५॥
बहुश्रुतमिदं धिग् धिगित्याशूद्धृतकण्टकः । पिधाय पाणिना कर्णं तथैवापससार सः ॥२६॥
अथाऽन्वहं मुष्यमाणे पत्तने तेन दस्युना । उपेत्य श्रेणिकं श्रेष्ठिश्रेष्ठा व्यज्ञपयन्निति ॥२७॥

१ —ख. ग. च. ङ. । व्यन्तरैरसुरैर्ज्योतिषिकैर्वैमानिकैरपि मु. ॥



॥३२१॥

त्वयि शासति देवाऽन्यत्र भयं द्रविणं तु नः। आकृष्य गृह्यते चौरैरदृष्टैश्चेटकैरिव ॥२८॥
बन्धूनामिव तेषां तु गृहीतः पीडया ततः। सकोपाटोपमित्यूचे नृपतिर्दाण्डपाशिकम् ॥२९॥
किं चौरीभूय दायादीभूय वा मम वेतनम्। गृह्णासि चौरैर्गृह्यन्ते यदेते त्वदुपेक्षितैः ॥३०॥
सोऽप्यूचे देव कोऽप्येष चौरः पौरान् विलुण्टति। रौहिणेयाह्वयो धर्तुं दृष्टोऽपि न हि शक्यते ॥३१॥
विद्युदुत्क्षिप्तकरणेनोत्प्लुत्याऽयं प्लवङ्गवत्। गेहाद् गेहं ततो वप्रमुल्लङ्घयति हेलया ॥३२॥
मार्गेण यामस्तन्मार्गं यावत्तावत् स नेक्ष्यते। त्यक्तो ह्येकक्रमेणापि शतेन त्यज्यते क्रमैः ॥३३॥
न तं हन्तुं न वा धर्तुमहं शक्नोमि तस्करम्। गृह्णातु तदिमां देवो दाण्डपाशिकतां निजाम् ॥३४॥
नृपेणोल्लासितैकभ्रूसंज्ञया भाषितस्ततः। कुमारोऽभयकुमारस्तमूचे दाण्डपाशिकम् ॥३५॥
चतुरङ्गचमूं सज्जीकृत्य मुञ्च बहिष्पुरात्। यदान्तः प्रविशेच्चौरः पत्तनं वेष्टयेस्तदा ॥३६॥
अन्तश्च त्रासितो विद्युदुत्क्षिप्तकरणेन सः। पतिष्यति बहिः सैन्ये[1] वागुरायां कुरङ्गवत् ॥३७॥
प्रतिभूभिरिवानीतो निजपादैस्ततश्च सः। ग्रहीतव्यो महान् दस्युरप्रमत्तैः पदातिभिः ॥३८॥
तथेत्यादेशमादाय निर्ययौ दाण्डपाशिकः। तथैव च चमूं सज्जां प्रच्छन्नं निर्ममे सुधीः ॥३९॥
तद्दिने रौहिणेयो[2]ऽपि ग्रामान्तरसमागमात्। अजानानः पुरीं रुद्धां वारीं गज इवाविशत् ॥४०॥

१ सैन्यवागु° खं. ॥ २ रोहि° ख.। एवमग्रेऽपि ॥

तैरुपायैस्ततो धृत्वा बद्ध्वा च स मलिम्लुचः। आनीय नृपतेर्दाण्डपाशिकेन समर्पितः ॥४१॥
यथा न्याय्यं सतां त्राणमसतां निग्रहस्तथा। निगृह्यतामसौ तस्मादित्यादिक्षन्महीपतिः ॥४२॥
अलोप्त्रः प्राप्त इन्त्येष नहि निग्रहमर्हति। विचार्य निग्रहीतव्य इत्युवाचाऽभयस्ततः ॥४३॥
अथ पप्रच्छ तं राजा क्वत्यः कीदृशजीविकः। कुतो हेतोरिहायातो रौहिणेयः स चासि किम् ॥४४॥
स्वनामशङ्कितः सोऽपि प्रत्युवाचेति भूपतिम्। शालिग्रामे दुर्गचण्डाभिधानोऽहं कुटुम्बिकः ॥४५॥
प्रयोजनवशेनेहायातः संजातकौतुकात्। एकदेवकुले रात्रिं महतीमस्मि च स्थितः ॥४६॥
स्वधाम गच्छन्नारक्षैराक्षिप्तो राक्षसैरिव। अलङ्घ्यमहं वप्रं प्राणभीर्महती हि भीः ॥४७॥
मध्यारक्षविनिर्यातो बाह्यारक्षगणेष्वहम्। कैवर्तहस्तविस्रस्तो जाले मत्स्य इवापतम् ॥४८॥
ततो निरपराधोऽपि बद्ध्वा चौर इवाधुना। अहमेभिरिहानीतो नीतिसार विचारय ॥४९॥
ततस्तं भूपतिर्गुप्तौ प्रेषयामास तत्क्षणात्। तत्प्रवृत्तिज्ञानहेतोस्तत्र ग्रामे च पूरुषम् ॥५०॥
सोऽग्रेऽपि ग्राहितो ग्रामः सङ्केतं तेन दस्युना। चौराणामपि केषाञ्चिच्चित्रमायतिचिन्तनम् ॥५१॥
तत्स्वरूपं राजपुंसा ग्रामः पृष्टोऽब्रवीदिदम्। दुर्गचण्डोऽत्र वास्तव्यः परं ग्रामान्तरं गतः ॥५२॥
तत्रार्थे तेन विज्ञप्ते दध्यौ श्रेणिकस्त्विदम्। अहो सुकृतदम्भस्य ब्रह्माऽप्यन्तं न गच्छति ॥५३॥
अभयोऽसज्जयदथ प्रासादं सप्तभूमिकम्। महार्घरत्नखचितं विमानमिव नाकिनाम् ॥५४॥

5

10

॥३२३॥

श्रियाऽप्सरायमाणाभी रमणीभिरलङ्कृतम्। दिवोऽमरावतीखण्डमिव भ्रष्टमतर्कि सः ॥५५॥
गन्धर्ववर्गप्रारब्धसङ्गीतकमहोत्सवः। सोऽधादकस्मादुद्भूतगन्धर्वनगरश्रियम् ॥५६॥
ततोऽभयो मद्यपानमूढं निर्माय तस्करम्। परिधाप्य देवदूष्ये अधितल्पमशाययत् ॥५७॥
मदे परिणते यावदुदस्थात्तावदैक्षत। सोऽकस्माद्विस्मयकरीमपूर्वां दिव्यसंपदम् ॥५८॥
अत्रान्तरेऽभयादिष्टैर्नरनारीगणैस्ततः। उदचारि जय जय[1] नन्देत्यादिकमङ्गलम् ॥५९॥
अस्मिन् महाविमाने त्वमुत्पन्नस्त्रिदशोऽधुना। अस्माकं स्वामिभूतोऽसि त्वदीयाः किङ्करा वयम् ॥६०॥
अप्सरोभिः सहैताभी रमस्व स्वैरमिन्द्रवत्। इत्यादि चतुरं चाटुगर्भमूचे च तैरसौ ॥६१॥
जातः सुरः किमस्मीति दध्यौ यावत् स तस्करः। संगीतकार्थं तावत्तैः प्रदत्तः समहस्तकः ॥६२॥
उपेत्य पुंसा केनापि स्वर्णदण्डभृता ततः। सहसा भो किमारब्धमेतदेवमभाष्यत ॥६३॥
ततः प्रतिवभाषे तैः प्रतीहार[2] निजप्रभोः। प्रदर्शयितुमारब्धं स्वकं[3] विज्ञानकौशलम् ॥६४॥
सोऽप्युवाच स्वनाथस्य दर्श्यतां निजकौशलम्। देवलोकसमाचारं कार्यतां किं त्वसाविति ॥६५॥
तैरुक्तं कीदृगाचार इति श्रुत्वा स पूरुषः। साक्षेपमित्यभाषिष्ट किमेतदपि विस्मृतम् ॥६६॥
य इहोत्पद्यते देवः स स्वे सुकृतदुष्कृते। आख्याति प्राक्तने स्वर्गभोगाननुभवेत्ततः ॥६७॥

१ जगन्नन्दे° शां.। जयेन्नन्दे° खं ॥ २ प्रति° शां. मु. ॥ ३ स्वक शां. खं. ॥



5

10

विस्मृतं स्वामिलाभेन[1] सर्वमेतत् प्रसीद नः। देवलोकस्थितिं देव: कार्यतामिति तेऽवदन् ॥६८॥
स रौहिणेयमित्यूचे निजे हन्त शुभाशुभे। प्राक्तने शंस न: स्वर्गभोगान् भुङ्क्ष्व ततः परम् ॥६९॥
ततः सोऽचिन्तयद्दस्यु: किमेतत् सत्यमीदृशम्। मां ज्ञातुमभयेनैष प्रपञ्चो रचितोऽथवा ॥७०॥
ज्ञेयं कथमेतदिति ध्यायता तेन संस्मृतम्। कण्टकोद्धरणकालाकर्णितं भगवद्वच: ॥७१॥
देवस्वरूपं श्रीवीराच्छ्रुतं चेत् संवदिष्यति। तत् सत्यं कथयिष्यामि करिष्याम्यन्यथोत्तरम् ॥७२॥ 5
इति बुद्ध्या स तानीक्षाञ्चक्रे क्षितितलस्पृशः। प्रस्वेदमलिनान् म्लानमाल्यान्निमिषदीक्षणान् ॥७३॥
तत् सर्वं कपटं ज्ञात्वाऽचिन्तयत् दस्युरुत्तरम्। तेनोचे कथ्यतां देव लोकः सर्वोऽयमुत्सुकः ॥७४॥
रौहिणेयस्ततोऽवादीन्मया पूर्वत्र जन्मनि। अदीयत सुपात्रेभ्यो दानं चैत्यानि चक्रिरे ॥७५॥
प्रत्यष्ठाप्यन्त बिम्बानि पूजितान्यष्टधाऽर्चया। विहितास्तीर्थयात्राश्च गुरवः पर्युपासिताः ॥७६॥
इत्यादि सदनुष्ठानं मया कृतमिति ब्रुवन्। ऊचे दण्डभृता शंस दुश्चरित्रमपि स्वकम् ॥७७॥ 10
रौहिणेयोऽप्युवाचेदं साधुसंसर्गशालिना। कदाचिदप्याचरितं किञ्चिन्नाशोभनं मया ॥७८॥
व्याजहार प्रतीहारो जन्म नैकस्वभावतः। याति तत् कथ्यतां चौर्य्य-पारदारिकतादिकम् ॥७९॥
रौहिणेयोऽभ्यधत्तैवं किमेवंविधचेष्टितः। स्वर्लोकं प्राप्नुयादन्धः किमारोहति पर्वतम् ॥८०॥

[1] °लोभेन शां. ॥

गत्वा ततस्तैस्तत् सर्वमभयाय निवेदितम्। अभयेन च विज्ञप्तं श्रेणिकस्य महीपतेः ॥८१॥
एवंविधैरुपायैर्यश्चौरो ज्ञातुं न शक्यते। स चौरोऽपि विमोक्तव्यः शक्या नीतिर्न लङ्घितुम् ॥८२॥
अभयः पार्थिवादेशाद्रौहिणेयमथामुचत्। वञ्चयन्ते वञ्चनादक्षैर्दक्षा अपि कदाचन ॥८३॥
ततः सोऽचिन्तयच्चौरो धिगादेशं पितुर्मम। वञ्चितोऽस्मि चिरं येन भगवद्वचनामृतात् ॥८४॥
नागमिष्यत् प्रभुवचो यदि मे कर्णकोटरम्। तदा विविधमारेणागमिष्यं यमगोचरम् ॥८५॥
अनिच्छयाऽपि हि तदा गृहीतं भगवद्वचः। मम जीवातवे जज्ञे भैषज्यमिव रोगिणः ॥८६॥
त्यक्त्वार्हद्वचनं हा धिक् चौरवाचि रतिर्मया। आम्राण्यपास्य निम्बेषु काकेनेव चिरं कृता ॥८७॥
उपदेशैकदेशोऽपि यदीयः फलतीदृशम्। तस्योपदेशः सामस्त्यात् सेवितः किं करिष्यति ॥८८॥
एवं विमृश्य मनसा ययौ भगवतोऽन्तिके। पादाम्बुजे च नत्वैवं रौहिणेयो व्यजिज्ञपत् ॥८९॥
भवाब्धौ प्राणिनां घोरविपन्नक्रकुलाकुले। महापोतायते ते गीरायोजनविसर्पिणी ॥९०॥
निषिद्धस्त्वद्वचः श्रोतुमनाप्तेनाप्तमानिना। इयत्कालमहं पित्रा वञ्चितस्तज्जगद्गुरो[१] ॥९१॥
त्रैलोक्यनाथ ते धन्याः श्रद्दधानाः पिबन्ति ये। भवद्वचनपीयूषं कर्णाञ्जलिपुटैः सदा ॥९२॥
अहं तु पापोऽशुश्रूषुर्भगवन् भवतो वचः। पिधाय कर्णौ हा कष्टमिदं स्थानमलङ्घ्यम् ॥९३॥

5

10

१ °द्गुरोः खं. ॥

॥३२७॥

एकदाऽनिच्छताऽप्येकं श्रुतं युष्मद्वचो मया। तेन मन्त्राक्षरेणेव रक्षितो राजराक्षसात् ॥९४॥
यथाऽहं मरणात् त्रातस्तथा त्रायस्व नाथ माम्। संसारसागरावर्त्ते निमज्जन्तं जगत्पते ॥९५॥
ततस्तत्कृपया स्वामी निर्वाणपददायिनीम्। विशुद्धां विदधे साधु साधुधर्मस्य देशनाम् ॥९६॥
ततः प्रबुद्धः प्रणमन् रौहिणेयोऽब्रवीदिदम्। यतिधर्मस्य योग्योऽस्मि न वेत्त्यादिश[1] मां प्रभो ॥९७॥
योग्योऽसीति स्वामिनोक्ते ग्रहीष्यामि विभो व्रतम्। परं किञ्चिद्वदिष्यामि श्रेणिकेनेत्युवाच सः ॥९८॥ 5
निर्विकल्पं निर्विशङ्कं स्ववक्तव्यमुदीरय। इत्युक्तः श्रेणिकनृपेणोचे लोहखुरात्मजः ॥९९॥
इह देव भवद्भिर्यः श्रुतोऽहं लोकवार्त्तया। स एष रौहिणेयोऽस्मि भवत्पत्तनमोषकः ॥१००॥
भगवद्वचसैकेन दुर्लङ्घ्या लङ्घिता मया। प्रज्ञाऽभयकुमारस्य तरण्डेनेव निम्नगा ॥१०१॥
अशेषमेतन्मुषितं पत्तनं भवतो मया। नान्वेषणीयः कोऽप्यन्यस्तस्करो राजभास्कर ॥१०२॥
कमपि प्रेषय यथा तल्लोप्त्रं दर्शयाम्यहम्। करिष्ये सफलं जन्म ततः प्रव्रज्यया निजम् ॥१०३॥ 10
अभयोऽथ समुत्थाय श्रेणिकादेशतः स्वयम्। कौतुकात् पौरलोकश्च सहाऽगात्तेन दस्युना ॥१०४॥
ततो गिरि-नदी-कुञ्ज-श्मशानादिषु तद्धनम्। स्थगितं दर्शयामास सोऽथ श्रेणिकसूनवे ॥१०५॥
अभयोऽपि हि यद्यस्य तत्तस्य धनमार्पयत्। नीतिज्ञानामलोभानां मन्त्रिणां नापरा स्थितिः ॥१०६॥

१ °त्यादिश्यतां प्रभो खं. क. ख. ग. ॥

॥३२७॥

परमार्थं कथयित्वा प्रबोध्य निजमानुषान् । श्रद्धालुर्भगवत्पार्श्वे रौहिणेयः समाययौ ॥१०७॥
ततः श्रेणिकराजेन कृतनिष्क्रमणोत्सवः । स[1] जग्राह परिव्रज्यां पार्श्वे श्रीवीरपादयोः ॥१०८॥
ततश्चतुर्थादारभ्य षण्मासान् यावदुज्ज्वलम् । विनिर्ममे तपःकर्म कर्मनिर्मूलनाय सः ॥१०९॥
तपोभिः कृशितः कृत्वा भावसंलेखनां च सः । श्रीवीरमापृच्छ्य गिरौ पादपोपगमं व्यधात् ॥११०॥
शुभध्यानः स्मरन् पञ्चपरमेष्ठिनमस्क्रियाम् । त्यक्त्वा देहं जगाम द्यां रौहिणेयो महामुनिः ॥१११॥
रौहिणेय इव चौर्यनिवृत्तः स्वर्गलोकमचिरादुपयाति ।
तत् सुधीर्न विदधीत कथञ्चिच्चौरिकामुभयलोकविरुद्धाम् ॥११२॥७२॥

[2][ इति रौहिणेयकथानकम् ]

स्तेयस्याऽतिपरिहरणीयतामाह—

दूरे परस्य सर्वस्वमपहर्तुमुपक्रमः ।
उपाददीत नादत्तं तृणमात्रमपि क्वचित् ॥७३॥

दूरे आस्तां तावत् परस्य सर्वस्वं निःशेषधनम् अपहर्तुमुपक्रमः प्रारम्भः, अदत्तं स्वामिना तृणमात्रमपि नोपाददीत न गृह्णीयात्, न तदर्थं यत्नं कुर्यादिति यावत् ॥७३॥

१ जग्राह स—च. ड. ॥ २ [ ] एतदन्तर्गतः पाठो नास्ति शां. खं. ॥


5
10

॥३२९॥

स्तेयनिवृत्तानां फलं श्लोकद्वयेनाह—

परार्थग्रहणे येषां नियमः शुद्धचेतसाम् ।
अभ्यायान्ति श्रियस्तेषां स्वयमेव स्वयंवराः ॥७४॥

परार्थग्रहणे परधनहरणे येषां नियमो निवृत्तिः शुद्धचेतसां निर्मलचित्तानां न तु बकवृत्तीनां कश्मलमनसां तेषामभ्यायान्ति अभिमुखमायान्ति श्रियः सम्पदः स्वयमेव न तु परप्रेरणया व्यवसायेन वा । स्वयंवरा इत्युपमानगर्भम् । स्वयंवरा इव कन्याः ॥७४॥ 5

तथा—

अनर्था दूरतो यान्ति साधुवादः प्रवर्त्तते ।
स्वर्गसौख्यानि ढौकन्ते स्फुटमस्तेयचारिणाम् ॥७५॥

अनर्था विपदः दूरतो यान्त्यासन्ना अपि न भवन्ति, साधुरयमिति प्रवादः साधुवादः श्लाघा, प्रवर्त्तते प्रसरति, एतावदैहिकं फलम्; स्वर्गसौख्यानीति तु पारलौकिकम्, अस्तेयव्रतेनावश्यं चरन्तीत्यस्तेयचारिणस्तेषाम् । 10

अत्रान्तरश्लोकाः—

वरं[1] वह्निशिखा पीता सर्पास्यं चुम्बितं वरम् । वरं हालाहलं लीढं परस्वहरणं न तु ॥१॥

॥३२९॥

१ वह्निः शिखाः पीताः खं. ॥

अथाभयोचे कथमप्येकवारं तमानय। तत ऊर्ध्वमहं सर्वं करिष्यामि न ते च्छलम् ॥१०२॥
विचिन्त्य चेतसा किञ्चिदित्यशोचत पण्डिता। यद्ययं निश्चयस्ते तदस्त्युपायोऽयमेककः ॥१०३॥
पर्वहि शून्यगेहादौ कायोत्सर्गं करोति सः। तथास्थितो यदि परमानेतव्योऽन्यथा तु न ॥१०४॥
उपायः साधुरेषोऽस्मिन् यतितव्यं त्वयाऽन्वहम्। इत्युक्तवत्यां तात्पर्याद्व्यामोमित्युवाच सा ॥१०५॥
ततः परं व्यतीतेषु दिवसेषु कियत्स्वपि। विश्वानन्दकृत्कौमुदीमहोत्सव उपाययौ ॥१०६॥ 5
अथ राज्ञोत्सवोत्सेकविधित्सोत्सुकचेतसा। आरक्षकाः समादिष्टाः पटहेनेत्यघोषयन् ॥१०७॥
सर्वद्धर्या सर्वलोकेन कौमुद्युत्सवमीक्षितुम्। अद्योद्यानेऽभिगन्तव्यमिति वो राजशासनम्। १०८॥
प्रातरेष्यच्चतुर्मासधर्मकर्मक्रियोन्मनाः। श्रुत्वा सुदर्शनस्त विषादादित्यचिन्तयत् ॥१०९॥
मनः प्रह्वमिदं प्रातश्चैत्यवन्दनकर्मणे। उद्यानगतये चैतत् प्रचण्डं राजशासनम् ॥११०॥
क उपायो भवत्वेवं तावदित्यभिचिन्त्य सः। समर्प्योपायनं भूमिपतिमेवं[1] व्यजिज्ञपत् ॥१११॥ 10
प्रातः पर्वदिनं युष्मत्प्रसादाद्विदधाम्यहम्। देवार्चादीनि तेनोक्तोऽनुमेने तन्महीपतिः ॥११२॥
द्वितीयेऽह्नि जिनेन्द्राणां भक्त्या स्नात्रं विलेपनम्। अर्चां च रचयंश्चैत्यपरिपाट्यां चचार सः ॥११३॥
ततः सुदर्शनो रात्रौ गृहीत्वा पौषधव्रतम्। कायोत्सर्गेण कस्मिंश्चित्तस्थौ नगरचत्वरे ॥११४॥

१ °पतिमिदं व्यजि° खं॥

पण्डिताऽप्यभयामूचे कदाचित्ते मनोरथाः। पूर्यन्ते परमुद्यानमद्य त्वमपि मा गमः ॥११५॥
शिरो मे बाधत इति कृत्वोत्तरमिलापतेः। तस्थौ राज्ञी प्रपञ्चे हि सिद्धसारस्वताः स्त्रियः ॥११६॥
ततो लेप्यमयीं काममूर्त्तिमाच्छाद्य वाससा। याने कृत्वा पण्डिताऽगात् प्रवेष्टुं राजवेश्मनि ॥११७॥
किमेतदिति पृच्छद्भिर्वेत्रिभिः स्खलिता तु सा। इत्यूचे पण्डिता भाण्डागारिकी कूटसम्पदाम् ॥११८॥
शरीरकारणाद्देवी नाद्योद्यानं ययौ ततः। पूजां स्मरादिदेवानां वेश्मन्येव करिष्यति ॥११९॥
इयं प्रवेश्यते तस्मात् प्रतिमा पुष्पधन्वनः। अप्यन्यासां देवतानां प्रवेश्या ह्यद्य मूर्त्तयः ॥१२०॥
तदिमां दर्शयित्वैव याहीति द्वाःस्थभाषिता। सा काममूर्त्तिमुद्घाट्यादर्शयच्च जगाम च ॥१२१॥
सा प्रतीहारमोहाय गृहीताऽपरमूर्त्तिका। द्विस्त्रिश्च[1] प्रविवेशाहो नारीणां छद्मकौशलम् ॥१२२॥
याने सुदर्शनं न्यस्योत्तरीयेण पिधाय च। द्वाःस्थैरस्खलिताऽऽनीयाभयायाः पण्डिताऽऽर्पयत् ॥१२३॥
आविर्विकारा साऽनेकप्रकारं मदनातुरा। अभया संक्षोभयितुमित्यभाषत तं ततः ॥१२४॥
कन्दर्पो मां दुनोत्येष निःशङ्कं निशितैः शरैः। कन्दर्पप्रतिरूपस्तच्छ्रितोऽसि[2] शरणं मया ॥१२५॥
शरण्य[3] शरणायातामार्त्तां त्रायस्व नाथ! माम्। परकार्ये महीयांसो ह्यकार्यमपि कुर्वते ॥१२६॥
आनीत[4]च्छद्मनास्मीति कार्यः कोपस्त्वया न हि। कार्ये त्राणे यदार्त्तानां गृह्यते न खलु च्छलम् ॥१२७॥

१ °श्चतुर्विवेशाहो ख.॥ २ °परस्त्वं श्रितो क. ख. च.॥ ३ शरण्यः—मु.॥ ४ °नास्मीति—मु.॥


5
10

ततः सुदर्शनोऽप्युच्चः परमार्थविचक्षणः। देवताप्रतिमेवाऽस्थात् कायोत्सर्गेण निश्चलः ॥१२८॥
पुनरप्यभयाऽवादीद् भावहावमनोहरम्[1]। नाथ! सम्भाषमाणां मां तूष्णीकः किमुपेक्षसे ॥१२९॥
व्रतकष्टमिदं मुञ्च मा कृथास्त्वमतः परम्। मत्संप्राप्त्या व्रतफलं विद्धि संसिद्धमात्मनः ॥१३०॥
ताम्यन्तीं याचमानां मां नम्रां मानय मानद!। दैवात् पतितमुत्सङ्गे रत्नं गृह्णासि किं न हि ॥१३१॥
कियदद्यापि सौभाग्यगर्वमुन्नाटयिष्यसि। इत्यालपन्त्या जगृहे तया पाणौ स पाणिना ॥१३२॥
निबिडं मण्डलीभूतपीनोत्तुङ्गस्तनं तया। भुजाभ्यां पद्मिनीनालमृदुलाभ्यां स सस्वजे ॥१३३॥
एवं तदुपसर्गेषु निसर्गेण स धीरधीः। धर्मध्याने निश्चलोऽभूत् किं चलत्यचलः क्वचित् ॥१३४॥
स दध्यौ चेति चेन्मुच्ये कथञ्चिदहमेतया। पारयामि तदोत्सर्गमन्यथाऽनशनं मम ॥१३५॥
अमानिताऽथ घटितभ्रकुटिः कुटिलाशया। अभया तं भापयितुमित्यभाषत निर्भया ॥१३६॥
मुमूर्षो! मूर्ख! मा कार्षीर्मान्यायाः मेऽवमाननाम्[2]। न वेत्सि मानिनी[3] नृणां निग्रहाऽनुग्रहक्षमा ॥१३७॥
मनोभववशाया मे वशमाविश रे जड!। नो चेद्यमवशं यास्यस्यत्र नास्त्येव संशयः ॥१३८॥
इति संरम्भकाष्ठायां साऽऽरुरोह यथा यथा। धर्मध्याने महात्माऽसावारुरोह[4] तथा तथा ॥१३९॥

---

१ हावभावमनो° ख. च.॥ २ °माननम् क.॥ ३ मानिनीर्नृणां निग्रहानुग्रहक्षमाः –खं॥
४ महात्मा स चारुरोह–खं. च.॥



॥३७७॥

एवं कदर्थितो रात्रिं तया ध्यानान्न सोऽचलत्। किं क्षुभ्यति[1] महाम्भोधिः क्वापि नौदण्डताडनैः ॥१४०॥
ततः प्रेक्ष्य प्रभातं सा स्वं लिलेख नखैर्वपुः। कोऽप्यसौ मे बलात्कारकारीत्युच्चै[2] रराम च ॥१४१॥
ततः प्राहरिकास्तत्र संभ्रान्ता यावदागमन्। कायोत्सर्गस्थितं तावद्ददृशुस्ते सुदर्शनम् ॥१४२॥
अस्मिन्न सम्भवत्येतदिति द्रुतमुपेत्य तैः। विज्ञप्तो भूपतिस्तत्रायया‌ै पप्रच्छ चाभयाम् ॥१४३॥
सोचे संपृच्छ्य देव! त्वामहं यावदिह स्थिता। एषोऽकस्मादिहायातो दृष्टस्तावत्पिशाचवत् ॥१४४॥
एष मेष इवोन्मत्तो मन्मथव्यसनी ततः। रिरंसुर्मामयाचिष्ट पापिष्ठश्चाटुकोटिभिः ॥१४५॥
ऊचे मयैष रे मैषीरसतीवत् सतीरपि। शक्यन्ते हि चणकवन्मरिचानि न चर्वितुम् ॥१४६॥
ततः परं बलात्कारादेष एवं चकार मे। मया च पूत्कृतमन्यदबलानां बलं न हि ॥१४७॥
अस्मिन्निदमसम्भाव्यमिति मत्वा महीपतिः। किमेतदिति पप्रच्छ बहुधैव सुदर्शनम् ॥१४८॥
पृष्टोऽपि राज्ञा कृपया किञ्चिन्नोचे सुदर्शनः। परतापोपशान्त्यै हि निघृष्टमपि चन्दनम् ॥१४९॥
ततः सम्भावयामास दोषं तस्यापि भूपतिः। पारदारिक-दस्यूनां तूष्णीकत्वं हि लक्षणम् ॥१५०॥
इत्यादिदेश स क्रोधात् सकलेऽप्यत्र पत्तने। दोषप्रख्यापनां कृत्वा पाप एष निगृह्यताम् ॥१५१॥
आरक्षपुरुषैर्दोर्ष्णि स धृत्वोत्पाटितस्ततः। वचसा सिद्धयो राज्ञां मनसेव दिवौकसाम् ॥१५२॥

---

१ क्षुभ्यते मु.॥ २ °कामीत्युच्चै शां.॥

स मण्डितो मुखे मष्या शरीरे रक्तचन्दनैः । करवीरस्रजा मुण्डे कण्ठे कोशक[1]मालया ॥१५३॥
खरमारोप्य विधृतसूर्पच्छत्रः स तैस्ततः । वाद्यमानेनाऽऽनकेनारेभे भ्रमयितुं पुरे ॥१५४॥
कृतापराधः शुद्धान्ते वध्यतेऽसौ सुदर्शनः । नात्र दोषो नृपस्येति चक्रुराघोषणां च ते ॥१५५॥
न युक्तं सर्वथाऽप्येतन्नेह सम्भवतीदृशम् । इति लोकप्रघोषोऽभूद् हाहारवयुतस्ततः ॥१५६॥
एवं च भ्रम्यमाणोऽगाद् द्वारदेशे स्ववेश्मनः । अदृश्यत महासत्या स मनोरमयाऽपि च ॥१५७॥ 5
चिन्तयामास सा चैवं सदाचारः पतिर्मम । भूपतिश्च प्रियाचारो दुराचारो[2] विधिर्ध्रुवम् ॥१५८॥
इदमप्यसदथवा ध्रुवमस्य महात्मनः । उपस्थितं फलमिदं प्राक्तनाशुभकर्मणः ॥१५९॥
कोऽपि नास्य प्रतीकारस्तथाप्येष भविष्यति । निश्चित्येति प्रविश्यान्तर्जिनार्चाः साऽर्चयत्ततः ॥१६०॥
कायोत्सर्गेण च स्थित्वा सोचे शासनदेवताः । भगवत्यो मम पत्युर्दोषसम्भावनाऽपि न ॥१६१॥
परमश्रावकस्यास्य सान्निध्यं चेत्करिष्यथ । तदाऽहं पारयिष्यामि कायोत्सर्गमिमं खलु ॥१६२॥ 10
अन्यथैवंस्थिताया मे भवत्वनशनं ध्रुवम् । धर्मध्वंसे पतिध्वंसे किं जीवन्ति कुलस्त्रियः ? ॥१६३॥
इतश्च न्यधुरारक्षाः शूलिकायां सुदर्शनम् । अलङ्घनीया भृत्यानां राजाज्ञा हि भयङ्करा[3] ॥१६४॥
स्वर्णाब्जासनतां भेजे शूलाऽप्यस्य महात्मनः । देवतानां प्रभावेन यमदंष्ट्राऽपि कुण्ठति ॥१६५॥

१ कोशिक° क. ॥  २ ह्यनाचारो शां. ॥  ३ भयङ्करी-खं ॥

वधाय तस्य चारक्षैर्दृढं व्यापारितः शितः। करवालोऽपतत् कण्ठे पुष्पमाला च सोऽभवत् ॥१६६॥
तद् दृष्ट्वा चकितैरेत्य विज्ञप्तस्तैर्महीपतिः। आरुह्य हस्तिनीं वेगाद् ययावधिसुदर्शनम् ॥१६७॥
तमालिङ्ग्य महीपालोऽनुतापादित्यवोचत। श्रेष्ठिन्नहि विनष्टोऽसि दिष्ट्याऽऽत्मीयप्रभावतः ॥१६८॥
मया हि तावत्पापेन किंराज्ञाऽसि विनाशितः। नाथः सतामनाथानां धर्मो जागर्त्ति सर्वथा ॥१६९॥
स्त्रीणां मायाप्रधानानां प्रत्ययात्त्वां निहन्ति यः। अविमृश्यकरः पापो नाऽपरो दधिवाहनात् ॥१७०॥
किं च किञ्चिदिदं पापं भवताऽप्यस्मि कारितः। असकृद्यन्मया साधो ! तदा पृष्टोऽपि नाऽवदः ॥१७१॥
एवमालपता राज्ञा करिण्यामधिरोप्य सः। नीत्वा स्वहर्म्ये स्नपितश्चन्दनैश्च विलेपितः ॥१७२॥
वस्त्रालङ्कारजातं च परिधाप्य सुदर्शनः। राज्ञा पृष्टो रात्रिवृत्तं यथातथमचीकथत् ॥१७३॥
अथ राज्ञीं प्रति क्रुद्धो भूपतिर्निग्रहोद्यतः। सुदर्शनेन व्यषेधि शिरः प्रक्षिप्य पादयोः ॥१७४॥
ततः श्रेष्ठी नृपेणेभमारोप्य पुरमध्यतः। महाविभूत्या तद्वेश्म नायितो न्यायतायिना ॥१७५॥
अभयाऽप्येतदाकर्ण्योद्बध्यात्मानं व्यपद्यत। परद्रोहकराः पापाः स्वयमेव पतन्ति हि ॥१७६॥
पण्डिताऽपि प्रणश्यागात् पाटलीपुत्रपत्तनम्। अवसद्देवदत्ताया गणिकायाश्च सन्निधौ ॥१७७॥
तत्रापि पण्डिता नित्यं तथाऽशंसत् सुदर्शनम्। दर्शनेऽस्य यथा देवदत्ताऽभूद् भृशमुत्सुका ॥१७८॥



5

10

सुदर्शनोऽपि संसारविरक्तो व्रतमग्रहीत्। उपसृत्य गुरोः पार्श्वे रत्नमम्भोनिधेरिव ॥१७९॥
तपकृशाङ्ग एकाङ्गविहारप्रतिमास्थितः। स क्रमाद्विहरन् प्राप पाटलीपुत्रपत्तनम् ॥१८०॥
भिक्षार्थं पर्यटंस्तत्र दृष्टः पण्डितया च सः। कथितो देवदत्तायाः सा तया तमजूहवत् ॥१८१॥
भिक्षाव्याजात्तयाऽऽहूतस्तत्रापि स मुनिर्ययौ। विमर्शमविधायैव सापाय-निरपाययोः ॥१८२॥
देवदत्ता ततो द्वारं पिधाय तमनेकधा। दिनं कदर्थयामास चुक्षोभ स मुनिर्न तु ॥१८३॥
अथ मुक्तस्तया[1] सायमुद्यानं गतवानसौ। तत्रापि दृष्टोऽभयया व्यन्तरीभूतया तया ॥१८४॥
कदर्थयितुमारेभे प्राक्कर्मस्मरणादसौ। ऋणं वैरं च जन्तूनां नश्येज्जन्मान्तरेऽपि न ॥१८५॥
क्लिश्यमानो बहु तया महासत्त्वः सुदर्शनः। आरोहत् क्षपकश्रेणिमपूर्वकरणक्रमात् ॥१८६॥
ततः स भगवान् प्राप केवलज्ञानमुज्ज्वलम्। तस्य केवलमहिमा सद्यश्चक्रे सुरासुरैः ॥१८७॥
उद्दिधीर्षुर्भवाज्जन्तून् स चक्रे धर्मदेशनाम्। लोकोदयायाभ्युदयस्तादृशानां हि जायते ॥१८८॥
तस्य देशनया तत्राबुद्धयन्तान्ये न केवलम्। देवदत्ता पण्डिता च व्यन्तरी च व्यबुद्धयत ॥१८९॥
स्त्रीसन्निधावपि तदेवमदूषितात्मा जन्तून् प्रबोध्य शुभदेशनया क्रमेण।
स्थानं सुदर्शनमुनिः परमं प्रपेदे[2] जैनेन्द्रशासनजुषां न हि तद् दुरापम् ॥१९०॥

[इति सुदर्शनऋषिकथानकम्] ॥१०१॥

१ —ख. ड.। मुक्तोऽनया मु.॥ २ एतदन्तर्गतः पाठो नास्ति शां. खं.॥

धर्म्ये कर्मणि न पुरुषा एवाधिक्रियन्ते, किन्तु स्त्रीणामप्यधिकारश्चतुर्वर्णे सङ्घे तासामप्यङ्गभूतत्वात्, ततः पुरुषस्य परदारप्रतिषेधवत् स्त्रीणां परपुरुषगमनं प्रतिषेधति—

ऐश्वर्यराजराजोऽपि रूपमीनध्वजोऽपि च।
सीतया रावण इव त्याज्यो नार्या नरः परः ॥१०२॥

ऐश्वर्येण[१] विभवेन, राजराजो धनदः, स इव राजराजः, आस्तामितरः। रूपेण सौन्दर्येण, मीनध्वजोऽपि स्मरोऽपि, आस्तामन्यः। त्याज्यः परिहरणीयः, नार्या स्त्रिया, परः स्वपतेरन्यो नरः पुरुषः, क इव कया, सीतया रावण इव। सीताचरितमुक्तमेव ॥१०२॥

स्त्रीपुंसयोर्द्वयोरपि परकान्तासक्तत्वस्य फलमाह—

नपुंसकत्वं तिर्यक्त्वं दौर्भाग्यं च भवे भवे।
भवेन्नराणां स्त्रीणां चान्यकान्तासक्तचेतसाम् ॥१०३॥

नपुंसकत्वं पण्ढत्वम्, तिर्यक्त्वं तिर्यग्भावः, दौर्भाग्यमनादेयता, भवे भवे जन्मनि जन्मनि, भवेत् जायेत, नराणां स्त्रीणां च। अन्यकान्तासक्तचेतसामिति श्लिष्टं द्वयोर्विशेषणम्। यदा पुरुषाणां तदा अन्यस्य कान्ता भार्या अन्यकान्ता,

१ वैभवेन शां. ॥

तदासक्तचेतसाम्। यदा तु स्त्रीणां तदा अन्यः पत्युरपरः, स चासौ कान्तश्च कामयिता[1], तत्रासक्तचेतसाम् ॥१०३॥

अब्रह्मनिन्दां कृत्वा ब्रह्मचर्यस्यैहिकं गुणमाह—

प्राणभूतं चरित्रस्य परब्रह्मैककारणम्।
समाचरन् ब्रह्मचर्यं पूजितैरपि पूज्यते ॥१०४॥

[2]प्राणभूतं जीवितभूतं, चरित्रस्य देशचारित्रस्य सर्वचारित्रस्य च, परब्रह्मणो मोक्षस्य, एकमद्वितीयं कारणं, समाचरन् पालयन्, ब्रह्मचर्यं जितेन्द्रियस्योपस्थनिरोधलक्षणम्, पूजितैरपि सुरासुरमनुजेन्द्रैः, न केवलमन्यैः, पूज्यते मनोवाक्कायोपचारपूजाभिः ॥१०४॥

ब्रह्मचर्यस्य पारलौकिकं गुणमाह—

चिरायुषः सुसंस्थाना दृढसंहनना नराः।
तेजस्विनो महावीर्या भवेयुर्ब्रह्मचर्यतः ॥१०५॥

चिरायुषो दीर्घायुषोऽनुत्तरसुरादिषूत्पादात्, शोभनं संस्थानं समचतुरस्रलक्षणं येषां ते सुसंस्थानाः अनुत्तर-

१ कमयिता खं. ॥ २ प्राणभूतं चरित्रस्य जीवितभूतं देश० खं. ॥

सुरादिपूत्पादादेव, दृढं बलवत् संहननमस्थिसञ्चयरूपं वज्रऋषभनाराचाख्यं येषां ते दृढसंहननाः, एतच्च मनुजभवेपूत्पद्यमानानाम्, देवेषु संहननाभावात्, तेजः शरीरकान्तिः प्रभावो वा विद्यते येषां ते तेजस्विनः, महावीर्या बलवत्तमाः तीर्थंकर-चक्रवर्त्यादित्वेनोत्पादात्, भवेयुर्जायेरन्, ब्रह्मचर्यतो ब्रह्मचर्यानुभावात् ॥

अत्रान्तरश्लोकाः—

पश्यन्ति कृष्णकुटिलां कबरीमेव योषिताम्। तदभिष्वङ्गजन्मानं न दुष्कर्मपरम्पराम् ॥१॥
सीमन्तिनीनां सीमन्तः पूर्णः सिन्दूररेणुना। पन्थाः सीमन्तकाख्यस्य नरकस्येति लक्ष्यताम् ॥२॥
भ्रूवल्लरीं वर्णिनीनां वर्णयन्ति न जानते। मोक्षाध्वनि प्रस्थितानां पुरोगामुरगीमिमाम् ॥३॥
भङ्गुरान् नयनापाङ्गानङ्गनानां निरीक्षते। हतबुद्धिर्न तु निजं भङ्गुरं हन्त जीवितम् ॥४॥
नासावंशं प्रशंसन्ति स्त्रीणां सरलमुन्नतम्। निजवंशं न पश्यन्ति भ्रश्यन्तमनुरागिणः ॥५॥
स्त्रीणां कपोले संक्रान्तमात्मानं वीक्ष्य हृष्यति। संसारसरसीपङ्के मज्जन्तं वेत्ति नो जडः ॥६॥
पिबन्ति रतिसर्वस्वबुद्ध्या बिम्बाधरं स्त्रियाः। न बुध्यन्ते यत् कृतान्तः पिबत्यायुर्दिवानिशम् ॥७॥
योषितां दशनान् कुन्दसोदरान् बहु मन्वते। स्वदन्तभङ्गं नेक्षन्ते तरसा जरसा कृतम् ॥८॥
स्मरदोलाधिया कर्णपाशान् पश्यति योषिताम्। कण्ठोपकण्ठलुठितान् कालपाशांस्तु नात्मनः ॥९॥
योषितां प्रोषितमतिर्मुखं पश्यत्यनुक्षणम्। क्षणोऽपि हन्त नास्त्यस्य कृतान्तमुखवीक्षणे ॥१०॥

नरः स्मरपराधीनः स्त्रीकण्ठमवलम्बते । नात्मनो वेत्त्यसन्नद्य श्वो वा कण्ठावलम्बिनः ॥११॥
स्त्रीणां भुजलताबन्धं बन्धुरं बुध्यते कुधीः । न कर्मबन्धनैर्बद्धमात्मानमनुशोचति ॥१२॥
धत्ते स्त्रीपाणिभिः स्पृष्टो[1] हृष्टो रोमाञ्चकण्टकान् । स्मारयन्ति न किं तेऽस्य कूटशाल्मलिकण्टकान् ॥१३॥
कुचकुम्भौ समालिङ्ग्य स्त्रियाः शेते सुखं जडः । विस्मृता नूनमेतस्य कुम्भीपाकोद्भवा व्यथा ॥१४॥
मध्यमध्यासते मुग्धा मुग्धाक्षीणां क्षणे क्षणे । एतन्मध्यं भवाम्भोधेरिति नैते[2] विविञ्चते ॥१५॥ 5
धिगङ्गनानां त्रिवलीतरङ्गैर्ह्रियते जनः । त्रिवलीछद्मना ह्येतन्ननु वैतरणीत्रयम् ॥१६॥
स्मरार्त्तं मज्जति मनः पुंसां स्त्रीनाभिवापिषु । प्रमादेनापि किं नेदं साम्याम्भसि मुदास्पदे ॥१७॥
स्मरारोहणनिःश्रेणीं स्त्रीणां रोमलतां विदुः । नराः संसारकारायां न पुनर्लोहशृङ्खलाम् ॥१८॥
जघन्या जघनं स्त्रीणां भजन्ति विपुलं मुदा । संसारसिन्धोः पुलिनमिति नूनं न जानते ॥१९॥
भजते करभोरूणामूरूनल्पमतिर्नरः । अनूरूक्रियमाणं तैः सद्गतौ स्वं न बुद्ध्यते ॥२०॥ 10
स्त्रीणां पादैर्हन्यमानमात्मानं बहु मन्यते । हताशो न तु जानाति क्षेप्यमाणमधोगतौ ॥२१॥
दर्शनात् स्पर्शनाच्छ्लेषाद् या हन्ति शमजीवितम् । हेयोग्रविषनागीव वनिता सा विवेकिभिः ॥२२॥
इन्दुलेखेव कुटिला सन्ध्येव क्षणरागिणी । निम्नगेव निम्नगतिर्वर्जनीया नितम्बिनी ॥२३॥

१ स्पृष्टो नरो ख. ॥ २ नैवं ख. च. ॥



॥३८५॥

न प्रतिष्ठां न सौजन्यं न दानं न च गौरवम् । न च स्वान्यहितं वामाः पश्यन्ति मदनान्धलाः ॥२४॥
निरङ्कुशा नरे नारी तत् करोत्यसमञ्जसम् । यत् क्रुद्धाः सिंह-शार्दूल-व्याला अपि न कुर्वते ॥२५॥
दूरतस्ताः परित्याज्याः प्रादुर्भावितदुर्मदाः । विश्वोपतापकारिण्यः करिण्य इव योषितः ॥२६॥
स कोऽपि स्मर्यतां मन्त्रः स देवः कोऽप्युपास्यताम् । न येन स्त्रीपिशाचीयं ग्रसते शीलजीवितम् ॥२७॥
शास्त्रेषु श्रूयते यच्च यच्च लोकेषु गीयते । संवादयन्ति दुःशीलं तन्नार्य्यः कामविह्वलाः ॥२८॥
संपिण्डयेवाहिदंष्ट्रा-ऽग्नि-यमजिह्वा-विषाङ्कुरान् । जगज्जिघांसुना नार्य्यः कृताः क्रूरेण वेधसा ॥२९॥
यदि स्थिरा भवेद्विद्युत्तिष्ठन्ति यदि वायवः । दैवात्तथापि नारीणां न स्थेम्ना स्थीयते मनः ॥३०॥
यद्विना मन्त्र-तन्त्राद्यैर्वञ्च्यन्ते चतुरा अपि । इन्द्रजालमिदं हन्त नारीभिः शिक्षितं कुतः ॥३१॥
अपूर्वा वामनेत्राणां मृषावादेषु वैदुषी । प्रत्यक्षाण्यप्यकृत्यानि यदपह्नुवते क्षणात् ॥३२॥
पीतोन्मत्तो यथा लोष्टं सुवर्णं मन्यते जनः । तथा स्त्रीसङ्गजं दुःखं सुखं मोहान्धमानसः ॥३३॥
जटी मुण्डी शिखी मौनी नग्नो वल्की तपस्व्यथ । ब्रह्माऽप्यब्रह्मशीलश्चेत्तदा मह्यं न रोचते ॥३४॥
कण्डूयन् कच्छुरः कच्छूं यथा दुःखं सुखीयति । दुर्वारमन्मथावेशविवशो मैथुनं तथा ॥३५॥
नार्य्यो यैरुपमीयन्ते काञ्चनप्रतिमादिभिः । आलिङ्ग्याऽऽलिङ्ग्य तान्येव किमु कामी न तृप्यति ॥३६॥

१ करण्यः खं. ॥ २ शिखी लुंची नग्नो शां. ॥

5 10

यदेवाङ्गं कुत्सनीयं गोपनीयं च योषिताम्। तत्रैव हि जनो रज्येत् केनान्येन विरज्यताम् ॥३७॥
मोहादहह नारीणामङ्गैर्मांसा-ऽस्थिनिर्मितैः। चन्द्रेन्दीवर-कुन्दादि सदृक्षीकृत्य दूषितम् ॥३८॥
नारीं नितम्ब-जघन-स्तनभूरिभारामारोपयन्त्युरसि मूढधियो रताय।
संसारवारिनिधिमध्यनिमज्जनाय जानन्ति तां न हि शिलां निजकण्ठबद्धाम् ॥३९॥
भवोदन्वद्वेलां मदनमृगयुव्याधहरिणीं, मदावस्थाहालां विषयमृगतृष्णामरुभुवम्।
महामोहध्वान्तोच्चयबहुलपक्षान्तरजनीं, विपत्खानिं नारीं परिहरत हे श्राद्धसुधियः! ॥४०॥१०५॥
संप्रति मूर्च्छाफलमुपदर्शयंस्तन्नियन्त्रणारूपं पञ्चममणुव्रतमाह—

**असन्तोषमविश्वासमारम्भं दुःखकारणम्।**
**मत्वा मूर्च्छाफलं कुर्यात् परिग्रहनियन्त्रणम् ॥१०६॥**

दुःखकारणमित्यसन्तोषादिभिस्त्रिभिः प्रत्येकमभिसंबध्यते। असन्तोषादीनि दुःखकारणानि मूर्च्छाया गर्द्धस्य फलत्वेन विज्ञाय मूर्च्छाहेतोः परिग्रहस्य नियन्त्रणं नैयत्यमुपासकः कुर्यादिति योगः। तत्रासन्तोषस्तृप्त्यभावः, स दुःखकारणम्। मूर्च्छावान् हि बहुभिरपि धनैर्न संतुष्यति, उत्तरोत्तराशाकदर्थितो दुःखमेवानुभवति। परसंपदुत्कर्षश्च हीनसंपदमसन्तुष्टं दुःखाकरोति। यदाह—

"असन्तोषवतां पुंसामपमानः पदे पदे। सन्तोषैश्वर्यसुखिनां दूरे दुर्जनभूमयः॥" [ ]

॥३८७॥

5

10

॥३८७॥

अविश्वासः खल्वपि दुःखकारणम्, अविश्वस्तो ह्यशङ्कनीयेभ्योऽपि शङ्कमानः स्वधनस्य रक्षां कुर्वन्न क्वचिद्विश्वसिति । यदाह—

" उक्खणइ[1] खणइ निहणइ रत्तिं न सुअइ दिआ वि अ ससंको ।
लिंपइ ठवेइ सययं लंछियपडिलंछियं कुणइ ॥ " [ ]

मूर्च्छापरिगतश्चारम्भं प्राणातिपातादिकं प्रतिपद्यते । तथाहि—तनयः पितरं पिता च तनयं भ्राता च भ्रातरं हिनस्ति, गृहीतलञ्चश्च कूटसाक्षित्वदायी बह्वनृतं भाषते, बलप्रकर्षात् पथिकजनं मुष्णाति, खनति खात्रं, गृह्णाति वन्दं[2], धनलोभात् परदारानभिगच्छति, तथा सेवा-कृषि-पाशुपाल्य-वाणिज्यादि च करोति । मम्मणवणिगिव नद्यादिषु प्रविश्य काष्ठान्याकर्षति ।

ननु दुःखकारणं मूर्च्छाफलं ज्ञात्वा परिग्रहनियन्त्रणं कुर्यादिति केयं वाचो युक्तिः ? उक्तमत्र—मूर्च्छाकारणत्वात् परिग्रहोऽपि मूर्च्छैव, अथवा " मूर्च्छा परिग्रहः " [ तत्त्वार्थ० ७।१२] इति सूत्रकारवचनात् मूर्च्छैव परिग्रह इति निश्चयनयमतेनोच्यते, मूर्च्छामन्तरेण धन-धान्यादेरपरिग्रहत्वात् । यदाह—

" अपरिग्रह एव भवेद्वस्त्राभरणाद्यलङ्कृतोऽपि पुमान् । ममकारविरहितः सति[3] ममकारे सङ्गवान्नग्नः ॥" [स्त्रीनि० १५]

१ उत्खनति खनति निहन्ति रात्रौ न स्वपिति दिवापि च सशङ्कः ।
लिम्पति स्थापयति सततं लाञ्छितप्रतिलाञ्छितं करोति ॥ २ विंदं मु. ॥ ३ °सन् शां. ख. ष. ॥

तथा—

"ग्रामं गेहं च विशन् कर्म च नोकर्म चाददानोऽपि।
अपरिग्रहोऽममत्वोऽपरिग्रहो नान्यथा कश्चित्॥" [स्त्रीनि० १८]

तथा—

"[1]जं पि वत्थं व पायं वा कंबलं पायपुंछणं। तं पि संजमलज्जट्ठा [2]धारंति परिहरंति अ॥ 5
न सो परिग्गहो वुत्तो नायपुत्तेण ताइणा। मुच्छा परिग्गहो वुत्तो इइ वुत्तं महेसिणा॥" [दशवै० ६। २०-२१]

इति सर्वमवदातम्॥१०६॥

प्रकारान्तरेण परिग्रहनियन्त्रणमाह—

**परिग्रहमहत्त्वाद्धि मज्जत्येव [3]भवेऽम्बुधौ।**
**महापोत इव प्राणी त्यजेत्तस्मात् परिग्रहम्॥१०७॥** 10

परिगृह्यत इति परिग्रहो धन-धान्यादिस्तस्य महत्त्वं निरवधित्वं तस्माद्धेतोः मज्जत्येव, अवश्यमेव मज्जति,

---

१ यदपि वस्त्रं वा पात्रं वा कम्बलं पादप्रोञ्छनम्। तदपि संयमलज्जार्थं धारयन्ति परिभुञ्जते च॥
न स परिग्रह उक्तो ज्ञातपुत्रेण तायिना। मूर्च्छा परिग्रह उक्त इत्युक्तं महर्षिणा॥
२ धारिंति शां. खं.॥ ३ भवाम्बुधौ शां. मु.॥



॥३८९॥

प्राणी शरीरी, भवे संसारे, क इव क्व ? अम्बुधौ समुद्रे महापोत इव महायानपात्रमिव[1], यथा निरवधिधनधान्यादि-भाराक्रान्तः पोतः समुद्रे मज्जति, तथैवापरिमितपरिग्रहः प्राणी नरकादौ निमज्जति । यदाहुः—“ महारंभयाए महापरिग्गहयाए कुणिमाहारेणं पंचिंदियवहेणं जीवा नरयाउयं अज्जंति[2] ” [ ] । तथा “ बह्वारम्भपरिग्रहत्वं च नारकस्यायुषः ” [तत्त्वार्थ० ६ । १६] इति, यस्मादेवं तस्मात् त्यजेन्नियन्त्रयेत्, परिग्रहं धनधान्यादिरूपं मूर्च्छा-रूपं वा ॥ १०७ ॥

सामान्येन परिग्रहदोषानाह—

त्रसरेणुसमोऽप्यत्र न गुणः कोऽपि विद्यते ।
दोषास्तु पर्वतस्थूलाः प्रादुःषन्ति परिग्रहे ॥१०८॥

त्रसरेणवो गृहजालान्तःप्रविष्टसूर्यकिरणोपलक्ष्याः सूक्ष्मा द्रव्यविशेषाः, तत्समोऽपि तत्प्रमाणोऽपि अत्र परिग्रहे न कश्चन गुणोऽस्ति, न हि परिग्रहबलादामुष्मिकः पुरुषार्थः सिद्ध्यति । यस्तु भोगोपभोगादिः स न गुणः, प्रत्युत गर्द्धहेतुत्वाद्दोष एव । योऽपि जिनभवनविधानादिलक्षणः[3] परिग्रहस्य गुणः शास्त्रे वर्ण्यते न स गुणः, किं तु परि-ग्रहस्य सदुपयोगव्यावर्णनम्, न तु तदर्थमेव परिग्रहधारणं श्रेयः । यदाहुः—

१ महारम्भतया महापरिग्रहतया कुणिमाहारेण पञ्चेन्द्रियवधेन जीवा नरकायुरर्जयन्ति ॥ तुलना—भगवतीसूत्रे-ऽष्टमे शतके नवम उद्देशके ॥ २ अज्जेंति खं. ॥ ३ °भवनबिम्बविधाना° खं. ॥

"धर्मार्थं यस्य वित्तेहा तस्यानीहा गरीयसी। प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" [ ]

तथा—

"कंचणमणिसोवाणं[१] थंभसहस्सोसियं सुवण्णतलं।

जो कारिज्ज जिणहरं तओ वि तवसंजमो[२] अहिओ॥ [उपदेशमाला गा० ४९४]

व्यतिरेकमाह— दोषास्तु दोषाः पुनः पर्वतस्थूला अतिमहान्तो वक्ष्यमाणाः परिग्रहे सति प्रादुःषन्ति प्रादुर्भवन्ति ॥१०८॥

दोषास्तु पर्वतस्थूला इति यदुक्तं तत् प्रपञ्चयति—

सङ्गाद् भवन्त्यसन्तोऽपि रागद्वेषादयो द्विषः।

मुनेरपि चलेच्चेतो यत्तेनान्दोलितात्मनः ॥१०९॥

सङ्गात् परिग्रहाद्धेतोर्भवन्ति प्रादुर्भवन्ति असन्तोऽपि उदयावस्थामप्राप्ता अपि रागद्वेषप्रभृतयः शत्रवः। सङ्गवतो हि तन्निबन्धनो रागः प्रादुर्भवति। सङ्गप्रतिपन्थिषु च द्वेषः। एवं मोह-भयादयो वध-बन्धादयो नरकपातादयश्च द्रष्टव्याः। तदिदं पर्वतस्थूलत्वं दोषाणाम्।

१ काञ्चनमणिसोपानं स्तम्भसहस्रोच्छ्रितं सुवर्णतलम्। यः कारयेज्जिनगृहं ततोऽपि तपःसंयमोऽधिके.॥

२ °संजमो अणंतगुणो शां. ख. क. छ. ड. ढ.॥

॥३९१॥

कथमसन्तोऽपि रागादयो भवन्तीति ? उच्यते—यत् यस्मान्मुनेरपि आस्तामन्यस्य चलेत् प्रशमावस्थायाश्च्यवेत चेतो मनः तेन सङ्गेन आन्दोलितात्मनः अस्थिरीकृतात्मनः । मुनिरपि हि सङ्गानङ्गीकुर्वन् मुनित्वाद् भ्रश्यत्येव । यदाह—

[1]छेओ भेओ वसणं आयास किलेस भय विवागो अ । मरणं धम्मब्भंसो अरई अत्थाओ सव्वाइं ॥
दोससयमूलजालं पुव्वरिसिविवज्जियं जईवंतं । अत्थं वहसि अणत्थं कीस [2]अणत्थं तवं चरसि ॥
वहबंधणमारणसेहणाओ काओ परिग्गहे णत्थि । तं जइ परिग्गहो च्चिय जइधम्मो तो णणु पवंचो ॥ ”
उपदेशमाला गा० ५०–५२ ] १०९ ॥

सामान्येन परिग्रहस्य दोपानभिधाय प्रकृतेन श्रावकधर्मेणाभिसंबध्नाति—

संसारमूलमारम्भास्तेषां हेतुः परिग्रहः ।
तस्मादुपासकः कुर्यादल्पमल्पं परिग्रहम् ॥११०॥

आरम्भाः प्राण्युपमर्दादयस्ते संसारस्य मूलम्, एतदविवादसिद्धम्, ततः किम् ? तेपामारम्भाणां हेतुः कारणं

१ छेदो भेदो व्यसनमायासः क्लेशो भयं विपाकश्च । मरणं धर्मभ्रंशोऽरतिरर्थात् सर्वाणि ॥
दोपशतमूलजालं पूर्वर्षिविवर्जितं यतिवान्तम् । अर्थं वहसि अनर्थं कस्मादनर्थं तपश्चरसि ॥
वधबन्धनमारणशिक्षणाः काः परिग्रहे न सन्ति । तद् यदि परिग्रह एव यतिधर्मस्ततो ननु प्रपञ्चः ॥ २ निरत्थं मु. ॥



5

10

परिग्रहः, यत एवं तस्मादुपासकः साधूपासकः परिग्रहं[1] धनधान्यादिकमल्पमल्पं नियतपरिमाणं कुर्यात् ॥११०॥

पुनरपि सिंहावलोकितेन परिग्रहदोषानाह—

मुष्णन्ति विषयस्तेना दहति स्मरपावकः ।
रुन्धन्ति वनिताव्याधाः सङ्गैरङ्गीकृतं नरम् ॥१११॥

सङ्गैर्धनधान्यहिरण्यादिपरिग्रहैरङ्गीकृतं वशीकृतं यथा बहुपरिग्रहं कान्तारगतं पुरुषं चौरा मुष्णन्ति तथा संसार-कान्तारगतं विषयाः शब्दादयः संयमसर्वस्वापहारेण मुष्णन्ति निर्द्धनीकुर्वन्ति। यथा वा बहुपरिग्रहं नंष्टुमशक्नुवन्तं दीप्तो दवाग्निर्दहति तथा संसारकान्तारगं मन्मथाग्निश्चिन्तादिना दशप्रकारेण विकारेण दहत्युपतापयति। यथा वा बहुपरिग्रहं कान्तारगतं व्याधा लुब्धका धनशरीरलोभेन रुन्धन्ति पलायितुमपि न ददति, तथा भवकान्तारगतं वनिताः कामिन्यो धनार्थिन्यः शरीरभोगार्थिन्यश्च स्वातन्त्र्यवृत्तिनिषेधेन रुन्धन्ति। अपि च बहुनापि परिग्रहेण काङ्क्षावतां न तृप्तिः सम्भवति, अपि त्वसन्तोष एव वर्द्धते। यन्मुनयः—

“ सुवण्णरुप्पस्स[2] य पव्वया भवे सिआ हु केलाससमा असंखया ।
नरस्स लुद्धस्स न तेहि किंचि इच्छा हु आगाससमा अणंतिआ ॥

---

१ °ग्रहे ख. ॥ २ सुवर्णरूप्यस्य च पर्वता भवेयुः स्युर्हु कैलाससमा असङ्ख्याः ।
नरस्य लुब्धस्य न तैः किञ्चित् इच्छा हु आकाशसमा अनन्तिका ॥



॥३९३॥

[1] पुढवी साली जवा चेव हिरण्णं पसुभिस्सह ।
पडिपुण्णं नालमेगस्स इइ विज्जा तवं चरे ॥ " [ उत्तरा० ९ । ४८–४९ ]

कवयोऽप्याहुः—

" तृष्णा खनिरगाधेयं दुष्पूरा केन पूर्यते । या महद्भिरपि क्षिप्तैः पूरणैरेव खन्यते " [ ]

तथा—

" तण्हा[2] अखंडिअ च्चिय विहवे अच्चुन्नए वि लहिऊण ।
सेलं पि समारुहिऊण किं व गयणस्स आरूढं " ॥ [ ] १११ ॥

एतदेवाह—

**तृप्तो न पुत्रैः सगरः, कुचिकर्णो न गोधनैः ।**
**न धान्यैस्तिलकश्रेष्ठी, न नन्दः कनकोत्करैः ॥११२॥**

सगरो द्वितीयश्चक्रवर्त्ती, न षष्टिसहस्रसंख्यैः पुत्रैः सन्तुष्टस्तृप्तोऽभवत् । कुचिकर्णो नाम कश्चित्, स बहुभिरपि

---

१ पृथ्वी शालयो यवाश्चैव हिरण्यं पशुभिः सह । प्रतिपूर्णं नालमेकस्य इति विदित्वा तपश्चरेत् ॥
२ तृष्णा अखण्डिता एव विभवानत्युन्नतानपि लब्ध्वा । शैलमपि समारुह्य किं वा गगनस्यारूढम् ॥

॥३९५॥

गोधनैर्न तृप्तः। तिलको नाम श्रेष्ठी न धान्यैस्तृप्तः। न वा नन्दनृपतिः कनकराशिभिस्तृप्तः। ततोऽसन्तोषहेतुरेव परिग्रहः। सम्प्रदायगम्याश्च सगरादयः।

स चायम्—

आसीत् पुर्यामयोध्यायां जितशत्रुर्महीपतिः। युवराजः सुमित्रोऽभूदुभाववनिमावतुः ॥१॥

जितशत्रोरभूत् सूनुरजितस्वामितीर्थकृत्। सगरश्चक्रवर्त्ती च सुमित्रस्य महाभुजः ॥२॥

जितशत्रुसुमित्रौ च व्रतं जगृहतुस्ततः। राजाऽभूदजितस्वामी सगरो युवराट् पुनः ॥३॥

प्रवव्राजाजितस्वामी गते काले कियत्यपि। राजाऽभूत् सगरश्चक्रवर्त्ती ऋषभसूनुवत् ॥४॥

अथ षष्टिः[1] सहस्राणि जज्ञिरे तस्य सूनवः। खेदच्छिदः संश्रितानां शाखा इव महातरोः ॥५॥

ज्येष्ठो जह्नुकुमारोऽभूत्तेषां[2] सगरजन्मनाम्। तेनैकदा तोषितोऽदाद्देवतेव पिता वरम् ॥६॥

त्वत्प्रसादेन दण्डादिरत्नैः सह सबान्धवः। महीं विचरितुं वाञ्छामीति जह्नुरयाचत ॥७॥

तद्दत्त्वा सगरेणापि विसृष्टः प्राचलत्ततः। जह्नुर्हूनुतसहस्रांशुः[3] सहस्रैश्छत्रमण्डलैः ॥८॥

ऋद्ध्या महत्या भक्त्या चार्हच्चैत्यानि पदे पदे। सोऽर्चयन् विचरन्नुर्वीं ययावष्टापदं क्रमात् ॥९॥

तमष्टयोजनोच्छ्रायं चतुर्योजनविस्तृतम्[4]। आरोहत् सह सोदर्यैर्जह्नुर्मितपरिच्छदः ॥१०॥

१ षष्टिसह° शां. मु. ॥ २ जह्नुः शां. मु. ॥ ३ °हूत° शां. मु. ॥ ४ °स्तृतिम् खं. ॥

5

10

॥३९५॥

तत्रैकयोजनायाममर्द्धयोजनविस्तृतम् । त्रिगव्यूत्युन्नतं चैत्यं चतुर्द्वारं विवेश सः ॥११॥
बिम्बानि स्वस्वसंस्थान-मान-वर्णानि तत्र सः । अर्हतामृषभादीनां यथावत् पर्यपूजयत् ॥१२॥
ववन्दे भरतभ्रातृशतस्तूपांश्च पावनान् । किञ्चिद्विचिन्त्य श्रद्धालुरुच्चैरेवमुवाच च ॥१३॥
[1]अष्टापदसमं स्थानं मन्ये क्वापि न विद्यते । कारयामो वयं यत्र चैत्यमेतदिवापरम् ॥१४॥
मुक्तोऽपि भरतं भुङ्क्ते भरतश्चक्रवर्त्यहो । शैले भरतसारेऽस्मिंश्चैत्यव्याजादवस्थितः ॥१५॥
एतदेव कृतं चैत्यमस्माभिश्चेद्विधीयते । भविष्यत्पार्थिवैरस्य लुप्यमानस्य रक्षणम् ॥१६॥
ततः सुरसहस्राधिष्ठितमादाय पाणिना । स दण्डं [2]भ्रमयामास परितोऽष्टापदाचलम् ॥१७॥
[3]चोले योजनसहस्रं दीर्णा कूष्माण्डवन्मही । भ्राम्यता तेन भिन्नानि नागानां भुवनानि च ॥१८॥
तैर्भीतैः शरणं भेजे स्वस्वामी ज्वलनप्रभः । स ज्ञात्वाऽवधिनोपेत्य जह्नुमित्यब्रवीत् क्रुधा ॥१९॥
अनन्तजन्तुनिर्घातकारणं किमकारणं । भवद्भिर्विदधे मत्तैर्दारुणं भूमिदारणम् ॥२०॥
अजितस्वामिभ्रातृव्यैः पुत्रैः सगरचक्रिणः । किमेतत्क्रियते पापमरे रे ! कुलपांसनाः ! ॥२१॥
जह्नुरूचे [4]मयाऽत्यचैत्यं त्रातुमदः कृतम् । युष्मद्भवनभङ्गोऽभूयदज्ञानात् स सह्यताम् ॥२२॥
अज्ञानकृतमागोऽदः सोढं ते मा कृथाः पुनः । इत्युदीर्य निजं धाम जगाम ज्वलनप्रभः ॥२३॥

5

10

---

१ त्रिषष्टि० २ । ५ । १३०-१३२ ॥ २ भ्राम° मु. ॥ ३ 'अगाधे' इति टिप्पणी शां. । चेले—मु. ॥ ४ मयाचैत्य मु. ॥

॥३९७॥

सानुजोऽचिन्तयज्जन्हुः कृतेयं परिखा परम् । परिपूरिष्यते पांशुपुरैः कालेन गच्छता ॥२४॥
ततः स कृष्ट्वा दण्डेन गङ्गां तत्राक्षिपद् भृशम् । उपद्रुतानि तत्तोयैः पुनर्वेश्मानि भोगिनाम् ॥२५॥
क्रुद्धोऽथैत्य समं नागकुमारैर्ज्वलनप्रभः । तान् दृष्ट्वा भस्मसाच्चक्रे दवानल इव द्रुमान् ॥२६॥
धिग् धिग् नः स्वामिनः प्लुष्टाः क्लीबानामिव पश्यताम् । ह्रियेत्ययोध्यासविधे तस्थुरागत्य सैनिकाः ॥२७॥
स्वं मुखं दर्शयिष्यामो वक्ष्यामोऽदः कथं प्रभोः । इति मन्त्रयतां तेषां कोऽप्येत्येत्यवदद् द्विजः ॥२८॥ 5
कथयिष्याम्यदो राज्ञो न च मोहो भविष्यति । उत्तरिष्यत्यवद्यं वो मा भूत व्याकुला ननु ॥२९॥
इत्युक्त्वा मृतकं कञ्चिदादायानाथमभ्यगात् । राजद्वारे मृतापत्य इव स व्यलपत्ततः ॥३०॥
राज्ञाऽप्रच्छि[1] ततोऽवादीदयमेकः सुतो मम । दष्टः सर्पेण निश्चेष्टस्तद्देवो जीवयत्वमुम् ॥३१॥
अथादिष्टैर्नरेन्द्रेण नरेन्द्रैर्मन्त्रकौशलम् । निजं प्रयुक्तं तत्राभूत्तद् भस्मनि हुतोपमम् ॥३२॥
मृतो जीवयितुं शक्यो नायं तावद् द्विजोऽप्ययम् । कथं नु च्छान्दसो बोध्य इत्यालोच्योचिरेऽथ ते ॥३३॥ 10
यस्मिन् वेश्मनि नो कोऽपि मृतः पूर्वं ततोऽधुना । भृशमानीयतां रक्षा जीवयामस्तया त्वमुम् ॥३४॥
ततो द्वाःस्थैर्नृपादेशात्पुर्यां ग्रामेषु चेक्षितम् । गृहं न दृष्टं तत्किञ्चिन्मृतो यत्र न कश्चन ॥३५॥
राजाऽप्यूचे मदीयेऽपि कुले कुलकरा मृताः । भगवानृषभस्वामी भरतश्चक्रवर्त्यपि ॥३६॥ ॥३९७॥

१ स राज्ञा प्रच्छितोऽवादीद° शां. खं.॥

राजा बाहुबलिः सूर्ययशाः सोमयशा अपि। अन्येऽप्यनेकशः केऽपि शिवं केऽपि दिवं ययुः ॥३७॥
जितशत्रुः शिवं प्राप सुमित्रस्त्रिदिवं ततः। सर्वसाधारणं मृत्युं स्वसूनोः सहसे न किम् ॥३८॥
विप्रोऽप्यूचे सत्यमेतत्तथाऽप्येको हि मे सुतः। रक्षणीयस्त्वया दीनानाथत्राणं सतां व्रतम् ॥३९॥
अथोचे चक्रवर्त्येवं हंहो ब्राह्मण ! मा मुहः। शरणं मरणार्तौ हि भववैराग्यभावना ॥४०॥
व्याजहार द्विजोऽप्येवं यद्येवं साधु बुद्ध्यसे। महीश ! मा मुहः षष्टिसहस्रसुतमृत्युना ॥४१॥
ततः स यावद् भूपो हा किमेतदित्यचिन्तयत्। तावत् संकेतिताः सैन्याः सर्वमाख्यन्नुपेत्य ते ॥४२॥
उदन्तेन ततस्तेन दारुणेनाथ मूर्च्छितः। पपात भूपतिर्भूमौ पर्वतः पविनेव सः ॥४३॥
लब्धसंज्ञस्ततो राजा रुदित्वा जनवत् क्षणम्। भेजे संसारवैराग्यं चिन्तयामास चेत्यसौ ॥४४॥
अन्वयं मण्डयिष्यन्ति प्रीणयिष्यन्ति मां सुताः। इत्याशा धिग् ममासारं संसारं जानतोऽप्यभूत् ॥४५॥
द्वित्रैस्त्रिचतुरैः पञ्चषैर्वाऽन्येषां भवेत् कथम्। पुत्रैस्तृप्तिरियन्मात्रैरपि यन्मे बभूव न ॥४६॥
तृप्तिं कथममी कुर्युस्तावन्तोऽपि ममात्मजाः। ईदृग्गतिमकाण्डेऽयुरतृप्ताः प्राणितस्य ते ॥४७॥
इत्थं विचिन्त्याथ सुतैरतृप्तिकः, स तत्क्षये जह्नुसुतं भगीरथम्।
राज्ये निवेश्याऽजितनाथसन्निधौ, प्रव्रज्य[१] वव्राज तदक्षयं पदम् ॥४८॥

[ इति सगरचक्रिकथानकम् ]

---

१ प्रान्तं प्रव्राज तदक्षयं पदम् खं. ॥

ग्रामः सुघोषो नामाऽभून्मध्ये मगधनीवृतः[1]। कुचिकर्णाभिधानश्च ग्रामणीस्तत्र विश्रुतः ॥१॥
गवां शतसहस्राणि तस्य संजज्ञिरे क्रमात्। बिन्दुना बिन्दुना हन्त भ्रियते हि सरोवरम् ॥२॥
गोपालानां पालनाय सोऽर्पयामास गास्ततः। भव्या मम न ते भव्या इत्ययुध्यन्त ते बहिः ॥३॥
कुचिकर्णो विभज्यैता आर्पयत् कस्यचित् सिताः। कृष्णाः कस्यापि कस्यापि रक्ताः पीताश्च कस्यचित् । ४॥
पृथक् पृथगरण्येषु गोकुलानि न्यवेशयत्। भुञ्जानो दधिपयसी सोऽवसत्तेषु च क्रमात् ॥५॥
अन्वहं वर्द्धयामास गोष्ठे गोष्ठे स गोधनम्। अतृप्तो दधिपयसोः सुराया इव दुर्मदः ॥६॥
तस्याभवदथाजीर्णमध ऊर्ध्वं सरद्रसम्। प्रदीपनान्तःपतितस्येव दाहो महानभूत् ॥७॥
हा धेनवो हा नवतर्णकाश्च, हा शाक्वरा[2] वः क्व कदा च लप्स्ये।
स गोधनैरेवमतृप्त एव, मृत्वाऽथ तिर्यग्गतिमाससाद ॥८॥

[ इति कुचिकर्णकथानकम् ]

श्रेष्ठ्यासीत्तिलको नाम पुरेऽचलपुरे पुरा। असौ पुरेषु ग्रामेषु चाकरोद्धान्यसंग्रहम् ॥१॥
माष-मुद्ग-तिल-व्रीहि-गोधूम-चणकादिकम्। ददौ सार्द्धिकया धान्यं काले सार्द्धं च सोऽग्रहीत् ॥२॥
धान्यैर्धान्यं धनैर्धान्यं धान्यं जीवधनैरपि। उपायैश्चाग्रहीद्धान्यं ध्यायन् धान्यं स तत्त्ववत् ॥३॥

---

१ °नीवृति खं. ॥  २ वृषभाः इत्यर्थः। शक्वराः खं. ॥

दुर्भिक्षकाले धान्येभ्यः प्रत्युपात्तैर्महाधनैः । बभार परितो धान्यैरिवासौ धान्यकोष्ठकान् ॥४॥
पुनः सुभिक्षे धान्यं स क्रीत्वा क्रीत्वा समग्रहीत् । लब्धास्वादः पुमान् यत्र तत्रासक्तिं न मुञ्चति ॥५॥
कीटकोटिवधं नैषोऽजीगणत् कणसंग्रहे । पीडां पञ्चेन्द्रियाणामप्यतिभाराधिरोपणात् ॥६॥
नैमित्तः कोऽपि तस्याख्यद् भावि दुर्भिक्षमैषमः । सर्वस्वेनाथ सोऽक्रीणात् कणान् पुनरतृप्तिकः ॥७॥
वृद्धयाऽपि द्रव्यमाकृष्याग्रहीद्धान्यमनेकधा । स्थानाभावे गृहेऽक्षैप्सीत् किं न कुर्वीत लोभवान् ॥८॥
असौ जगदमित्रस्य मित्रस्येवोन्मनास्ततः । दुर्भिक्षस्यैष्यतो मार्गमीक्षाञ्चक्रे दिने दिने ॥९॥
अथ वर्षाप्रवेशेऽपि ववर्षोपेत्य सर्वतः । धारासारैर्घनस्तस्य हृदयं दारयन्निव ॥१०॥
गोधूम-मुद्ग-कलमाश्चणका मकुष्ठा मापास्तिलास्तदपरेऽपि कणा विनश्य ।
यास्यन्ति संप्रति हहेति स तैरतृप्तो, हृत्स्फोटजातमरणान्नरकं[१] प्रपेदे ॥११॥

[ इति तिलकश्रेष्ठिकथानकम् ]

प्राच्यां महेन्द्रनगरीप्रतिबिम्बमिवोच्चकैः । आख्यया पाटलीपुत्रमित्यस्ति प्रवरं पुरम् ॥१॥
आसीत्तत्रातिसुत्रामा शत्रुवर्गविसूत्रणे । त्रिखण्डवसुधाधीशो नन्दो नाम नरेश्वरः ॥२॥
सोऽकराणां करं चक्रे सकराणां महाकरम् । महाकराणामपि च किञ्चिच्चक्रे करान्तरम् ॥३॥

१ °मरणो नरकं क. ग. छ. ॥


5
10

यं कश्चिद्दोषमुत्पाद्य धनिभ्यो धनमग्रहीत्। छलं वहति भूपानां ह्वलं नेति नयं वदन् ॥४।
सर्वोपायैर्धनं लोकान्निष्कृपः स उपाददे। अपामब्धिर्नृपोऽर्थानां पात्रं नान्य इति ब्रुवन् ॥५॥
तथाऽर्थं सोऽग्रहील्लोकाल्लोकोऽभून्निर्धनो यथा। भूमावूर्णायुचीर्णायां न खलु प्राप्यते तृणम् ॥६॥
हिरण्यनाणकाख्याऽपि तेन लोकेषु नाशिता। प्रवृत्तो व्यवहारोऽपि चर्मणो नाणकैस्तदा ॥७॥
पाखण्डिनोऽपि वेश्या अप्यसावर्थमदण्डयत्। हुताशनः सर्वभक्षी न हि किञ्चिद्विमुञ्चति ॥८॥
श्रीवीरमोक्षादेकोनविंशेष्वब्दशतेषु[1] यः। साग्रेषु भावी किं सोऽयं कल्कीति जनवागभूत् ॥९॥
आक्रोशान् पश्यतोऽप्यस्य भूमिभाजनभोजनः। जनो ददौ गतभयो भयं भवति भाजने ॥१०॥
स स्वर्णैः पर्वतांश्चक्रे पूरयामास चावटान्। भाण्डागाराणि चापूरि पूर्णकामस्तु नाभवत् ॥११॥
आकर्ण्य तत्तथाऽयोध्यानाथेनाथ हितैषिणा। तं प्रबोधयितुं वाग्मी दूतः प्रेषित आगमत् ॥१२॥
सर्वतोऽप्याहृतश्रीकं निःश्रीकं तं तथापि हि। दूतो भूपमथापश्यन्नत्वा चोपाविशत् पुरः ॥१३॥
सोऽनुज्ञातो नृपेणोचे श्रुत्वा मत्स्वामिवाचिकम्। कोपितव्यं न देवेन न हिताश्चाडुभाषिणः ॥१४॥
अवर्णवादो देवस्य यः परम्परया श्रुतः। स प्रत्यक्षीकृतो ह्यद्य न निर्मूला जनश्रुतिः ॥१५॥
अन्यायतोऽर्थलेशोऽपि[2] राज्ञः सर्वयशश्छिदे। अप्येकं तुम्बिकाबीजं गुडभारान् विनाशयेत् ॥१६॥

5

10



१ °विंशत्यब्द° मु.॥ २ अन्यायात्तो खं.॥

आत्मभूताः प्रजा राज्ञो राजा न च्छेत्तुमर्हति । क्रव्यादा अपि न क्रव्यं निजमश्नन्ति जातुचित् ॥१७॥
प्रजाः पुराण पुष्णन्ति पोषिता एव ता नृपम् । वश्याऽपि न ह्यनड्वाही दत्ते दुग्धमपोषिता ॥१८॥
सर्वदोषप्रसूर्लोभो लोभः सर्वगुणापहः । लोभस्तत्त्यज्यतामेतत् त्वद्धितो वक्ति मत्प्रभुः ॥१९॥
नन्दोऽपि तद्गिरा दावदग्धभूरिव वारिणा । अत्युष्णबाष्पममुचद् दग्धुकाम इवाशु तम् ॥२०॥
राजदौवारिको जातु न वध्य इति नन्दराट् । उत्थाय गर्भवेश्मान्तः सशिरोऽर्त्तिरिवाविशत् ॥२१॥
नामौ सदुपदेशानां जवासक इवाम्भसाम् । योग्य इत्यामृशन् दूतोऽप्यगात् स्वस्वामिनोऽन्तिकम् ॥२२॥
नन्दोऽप्यन्यायपापोत्थैर्वेदनादानदारुणैः । रोगैरिहापि संप्राप्तः परमाधार्मिकैरिव ॥२३॥
वेदनाभिर्दारुणाभिः पीड्यमानो यथा यथा । नन्दश्चक्रन्द लोकोऽभूज्जातानन्दस्तथा तथा ॥२४॥
पच्यमानो भृज्यमानो दह्यमान इव व्यथाम् । अवाप नन्दः स्तोकं हि सर्वं तादृक्षपाप्मनः ॥२५॥
ये भूतले विनिहिता गिरिवच्च कूटीभूताश्च येऽद्य मम काञ्चनराशयस्ते ।
कस्य स्युरित्यभिगृणन्नवितृप्त एव मृत्वा निरन्तभवदुःखमवाप नन्दः ॥२६॥

[ इति नन्दकथानकम् ] ॥ ११२ ॥

अपि च योगिनामपि परिग्रहमुपगृह्णतां लाभमिच्छतां मूलक्षतिरायातेत्याह—

तपःश्रुतपरीवारां शमसाम्राज्यसंपदम् ।
परिग्रहग्रहग्रस्तास्त्यजेयुर्योगिनोऽपि हि ॥११३॥

योगो रत्नत्रयप्राप्तिः, तद्वन्तो योगिनः, तेऽपि, आसतां पृथग्जनाः, परिग्रह एव ग्रहस्तद्ग्रस्ताः पिशाचकिन इव शमसाम्राज्यसंपदं स्वाधीनामपि त्यजेयुः, शमस्य वितृष्णतायाः[1] साम्राज्यं परमैश्वर्यम्, तद्रूपा सम्पत्, ताम् । साम्राज्यं च नैकाकिनो भवतीत्याह—तपःश्रुतपरीवाराम्, तपश्चारित्रं, श्रुतं सम्यग्ज्ञानं, ते एव परीवारः परिच्छदो यस्यास्तां तथाविधां शमसाम्राज्यसंपदं स्वाधीनां परित्यज्य सुखार्थिनः परिग्रहलवलुब्धा मूलमुच्छेद्य लाभमिच्छन्तीत्यर्थः ॥११३॥

इदानीमसन्तोषफलोपदर्शनपूर्वकं सन्तोषफलमाह—

असन्तोषवतः सौख्यं न शक्रस्य न चक्रिणः ।
जन्तोः सन्तोषभाजो यदभयस्येव जायते ॥११४॥

सन्तोषरहितस्य तत्फलभूतं सौख्यं न शक्रस्य देवराजस्य, नापि चक्रिणो मनुजराजस्य, यत् सौख्यं सन्तोषवतो जन्मिनो जायते । कस्येवेत्याह—अभयस्य अभयकुमारस्य श्रेणिकराजपुत्रस्य । स हि पित्रोपनीतमपि राज्यं परिहृत्य शमसाम्राज्यसम्पदं परिगृहीतवानिति । कथानकं च सम्प्रदायगम्यम् । स चायम्—

१ वितृष्णितायाः खं. ॥

अस्तीह भरतक्षेत्रे केदारमिव सुन्दरम्। विशालशालिकमलं नाम्ना राजगृहं पुरम् ॥१॥
तत्र प्रसेनजिन्नाम नामिताशेषभूपतिः। पतिर्वीरामित्रालब्धमध्योऽभूत् पृथिवीपतिः ॥२॥
श्रीमत्पार्श्वजिनाधीशशासनाम्भोजषट्पदः। सम्यग्दर्शनपुण्यात्मा सोऽणुव्रतधरोऽभवत् ॥३॥
ओजसा तेजसा कान्त्या जितामरकुमारकाः। कुमारास्तस्य बहवो बभूवुः श्रेणिकादयः ॥४॥
को राज्ययोग्य इत्येषां परीक्षार्थं महीपतिः। एकत्र[1] पायसस्थालान्यशनायैकदाऽर्पयत् ॥५॥ 5
ततो भोक्तुं प्रवृत्तानां कुमाराणाममोचयत्। व्याघ्रानिव व्यात्तवक्त्रान् सारमेयान् स सारधीः ॥६॥
कुमारा द्रुतमुत्तस्थुरापतत्सु ततः श्वसु। एकस्तु श्रेणिकस्तस्थौ धियां धाम तथैव हि ॥७॥
सोऽन्यस्थालात् पायसान्नं स्तोकं स्तोकं शुनां ददौ। यावल्लिलिहिरे श्वानस्तावच्च बुभुजे स्वयम् ॥८॥
येन केनाप्युपायेन निषेधिष्यत्यरीनयम्। भोक्ष्यते च स्वयं पृथ्वीं राजा तेनेति रञ्जितः ॥९॥
राजा पुनः परीक्षार्थं सुतानामन्यदा ददौ। मोदकानां करण्डांश्च पयस्कुम्भांश्च मुद्रितान् ॥१०॥ 10
इमां मुद्राममञ्जन्तो भुञ्जीध्वं मोदकानमून्। पयः पिबत मा कृ[2]ढ्वं छिद्रमित्यादिशन्नृपः ॥११॥
विना श्रेणिकमेतेषां कोऽपि नाभुक्त नापिबत्। बुद्धिसाध्येषु कार्येषु कुर्युरूर्जस्विनोऽपि किम्? ॥१२॥
चलयित्वा चलयित्वा श्रेणिकोऽथ करण्डकम्। बुभुजे मोदकक्षोदं शलाकाविवरच्युतम् ॥१३॥

---

१ त्रिषष्टि० १०। ६। ९४-१८३ ॥ २ कृध्वं सं. ॥

||४०५||

रौप्यशुक्त्या घटस्याधो गलद्वार्बिन्दुपूर्णया । स पयोऽपि पपौ किं हि दुःसाधं सुधियां धियः ॥१४॥
तत् प्रेक्ष्य नृपतिः प्रीतो जातेऽन्येद्युः प्रदीपने । यो यद् गृह्णाति मद्गेहात् तत् तस्येत्यादिशत् सुतान् ॥१५॥
सर्वे गृहीत्वा रत्नानि कुमारा निर्ययुस्ततः । आदाय भम्भां त्वरितः श्रेणिकस्तु विनिर्ययौ ॥१६॥
किमेतत् कृष्टमित्युक्तो नृपेण श्रेणिकोऽवदत् । जयस्य चिह्नं भम्भेयं प्रथमं पृथिवीभुजाम् ॥१७॥
अस्याः शब्देन भूपानां दिग्यात्रामङ्गलं भवेत् । रक्षणीया क्षमापालैः स्वामिंस्तदियमात्मवत् ॥१८॥ 5
ततः परीक्षानिर्वाहज्ञातबुद्धिर्महीपतिः । तस्य प्रीतो ददौ भम्भासार इत्यपराभिधाम् ॥१९॥
राज्यार्हमानिनो मैनं राज्यार्हं सूनवोऽपरे । ज्ञासिषुरित्यवाज्ञासीच्छ्रेणिकं पृथिवीपतिः ॥२०॥
पृथक् पृथक् कुमाराणां ददौ देशान्नरेश्वरः । न किञ्चिच्छ्रेणिकस्यास्तु राज्यमस्यायताविति ॥२१॥
ततोऽभिमानी स्वपुरात् कलभः काननादिव । निःसृत्य श्रेणिकोऽगच्छत्तूर्णं वेणातटं[1] पुरम् ॥२२॥
तत्र च प्रविशन् भद्राभिधस्य श्रेष्ठिनोऽथ सः । कर्म लाभोदयं मूर्त्तमिवोपाविशदापणे ॥२३॥ 10
तदा च नगरे तस्मिन् विपुलः कश्चिदुत्सवः । नव्यदिव्यदुकूलाङ्गरागपौराऽऽकुलोऽभवत् ॥२४॥
प्रभूतक्रायकैरासीत् स श्रेष्ठी व्याकुलस्तदा । कुमारोऽप्यार्पयद् बद्ध्वाऽस्मै पुटीपुटिकादिकम्[2] ॥२५॥
द्रव्यं कुमारमाहात्म्याच्छ्रेष्ठी भूयिष्ठमार्जयत् । पुण्यपुंसां विदेशेऽपि सहचर्य्यो ननु श्रियः ॥२६॥ ||४०५||

१ वेण्णा° खं ॥ २ पुटापुटि° खं. त्रिषष्टि० १०।६।१२३ ॥

अथावितथपुण्यस्य कस्यातिथिरसीत्यथ। श्रेणिकः श्रेष्ठिना पृष्टो भवतामित्यभाषत ॥२७॥
नन्दायोग्यो वरो दृष्टः स्वप्नेऽद्य निशि यो मया। असौ साक्षात् स एवेति श्रेष्ठी चेतस्यचिन्तयत् ॥२८॥
सोऽभाषिष्ट च धन्योऽस्मि यद् भवस्यतिथिर्मम। असावलसमध्येन ननु गङ्गा समागता ॥२९॥
संवृत्याट्टं ततः श्रेष्ठी तं नीत्वा निजवेश्मनि। स्नपयित्वा परिधाप्य सगौरवमभोजयत् ॥३०॥
एवं च तिष्ठंस्तद्गेहे श्रेणिकः श्रेष्ठिनाऽन्यदा। कन्यां परिणयेमां मे नन्दां नाम्नेत्ययाच्यत ॥३१॥
ममाज्ञातकुलस्यापि कथं दत्से सुतामिति। श्रेणिकेनोक्त ऊचे स ज्ञातं तत्र गुणैः कुलम् ॥३२॥
ततस्तस्योपरोधेनोदधेरिव सुतां हरिः। श्रेणिकः पर्यणैषीत्तां भवद्धवलमङ्गलम् ॥३३॥
भुञ्जानो विविधान् भोगान् सह वल्लभया तया। अतिष्ठच्छ्रेणिकस्तत्र निकुञ्ज इव कुञ्जरः ॥३४॥
श्रेणिकस्य स्वरूपं तद्विवेदाशु प्रसेनजित्। सहस्राक्षा हि राजानो भवन्ति चरलोचनैः ॥३५॥
उग्रं प्रसेनजिद्रोगं प्रापाऽथाऽन्तं विदन्निजम्। सुतं श्रेणिकमानेतुं शीघ्रानादिक्षदौष्ट्रिकान् ॥३६॥
औष्ट्रिकेभ्यो ज्ञातयाऽऽर्त्तः पितुरत्यर्त्तिवार्त्तया। नन्दां संबोध्य सस्नेहं प्रतस्थे श्रेणिकस्ततः ॥३७॥
वयं पाण्डुरकुड्या गोपाला राजगृहे पुरे। आह्वानमन्त्रप्रतिमान्यक्षराणीति चार्पयत् ॥३८॥
माऽन्या तातस्य रोगार्त्तेर्मदर्त्तिर्भूदिति द्रुतम्। उष्ट्रीं श्रेणिक आरुह्य ययौ राजगृहं पुरम् ॥३९॥

१ म नं भे नं.। तत श्रे' शां. त्रिषष्टि० १०।६।१३४॥ २ ज्ञातवार्तः ग. त्रिषष्टि० १०।६।१३५॥



5

10

तं दृष्ट्वा मुदितो राजा हर्षनेत्राश्रुभिः समम्। राज्येऽभ्यषिञ्चद्विमलैः सुवर्णकलशाम्बुभिः ॥४०॥
राजाऽपि संस्मरन् पार्श्वजिनं[1] पञ्चनमस्क्रियाम्। चतुःशरणमापन्नो विपद्य त्रिदिवं ययौ ॥४१॥
विश्वं विश्वम्भराभारं बभार श्रेणिकस्ततः। तेन सा गुर्विणी मुक्ता गर्भं नन्दाऽपि दुर्वहम् ॥४२॥
तस्या दोहद इत्यासीद् गजारूढा शरीरिणाम्। महाभूत्योपकुर्वाणा भवाम्यभयदा यदि ॥४३॥
विज्ञपय्याथ राजानं तत्पित्राऽपूरि दोहदः। पूर्णे काले च साऽसूत प्राची रविमिवार्भकम् ॥४४॥ 5
दोहदार्थानुसारेण तस्याथ दिवसे शुभे। चकाराभयकुमार इति मातामहोऽभिधाम् ॥४५॥
स क्रमाद्ववृधे विद्या निरवद्याः पपाठ च। अष्टवर्षोऽभवद्दक्षो द्वासप्तत्यां कलासु च ॥४६॥
सवयाः[2] कलहे कोऽपि तं कोपादित्यतर्जयत्। किं त्वं जल्पसि यस्याहो पिता[3] विज्ञायते न हि ॥४७॥
ऊचेऽभयकुमारस्तं ननु भद्रः पिता मम। पिता भद्रो भवन्मातुः प्रत्युवाचेति सोऽभयम् ॥४८॥
नन्दां प्रत्यभयोऽप्यूचे मातः! को मे पितेत्यथ। अयं तव पिता भद्रः[4] श्रेष्ठी नन्देत्यचीकथत्[5]। ४९॥ 10
भद्रस्तव पिता शंस मदीयं पितरं ननु। पुत्रेणेत्युदिता नन्दा निरानन्देदमब्रवीत् ॥५०॥
देशान्तरादागतेन परिणीताऽस्मि केनचित्। मम च त्वयि गर्भस्थे तमीयुः[6] केचिदौष्ट्रिकाः ॥५१॥

१ पार्श्वं मु.॥ २ सवय.कलहे खं.॥ ३ पितापि ज्ञा° खं. त्रिषष्टि० १०। ६। १४५॥
४ भद्रश्रेष्ठी शां. त्रिषष्टि० १०। ६। १४७॥ ५ सा चेत्यचीकथत् शां. खं.॥ ६ समीयुः खं.॥

[1]रहः स किञ्चिदुक्त्वा तैः सहैव क्वचिदप्यगात्। अद्यापि तं न जानामि कुतस्त्यः कश्चिदित्यहम् ॥५२॥
स यान् किञ्चिज्जजल्प त्वामिति पृष्टाऽभयेन सा। अक्षराण्यर्पितान्येतानीति पत्रमदर्शयत् ॥५३॥
तद्विभाव्याभयः प्रीतोऽब्रवीन्मम पिता नृपः। पुरे राजगृहे तत्र गच्छामो ननु संप्रति ॥५४॥
आपृच्छ्य श्रेष्ठिनं भद्रं सामग्रीसंयुतस्ततः। नान्देयो नन्दया सार्द्धं ययौ राजगृहं पुरम् ॥५५॥
मातरं बहिरुद्याने विमुच्य सपरिच्छदाम्। तत्र स्वल्पपरीवारः प्रविवेशाभयः पुरे ॥५६॥ 5
इतश्च मेलितान्यासंस्तदा श्रेणिकभूभुजा। शतानि पञ्चैकोनानि मन्त्रिणां मन्त्रसत्रिणाम् ॥५७॥
मन्त्रिपञ्चशतीं पूर्णां कर्त्तुं नरपतिस्ततः। लोके गवेषयामास कञ्चिदुत्कृष्टपूरुषम् ॥५८॥
ततश्च तत्परीक्षार्थं शुष्ककूपे निजोर्मिकाम्। प्रचिक्षेप क्षितिपतिर्लोकानित्यादिदेश च ॥५९॥
[2]आदास्यते करेणैतामूर्मिकां यस्तटस्थितः। तस्य धीकौशल[3]क्रीती [4]मदीया मन्त्रिधुर्यता ॥६०॥
तेऽप्यूचुर्यदशक्यानुष्ठानमस्मादृशामिदम्। ताराः करेण यः कर्षेत् स इमामूर्मिकामपि ॥६१॥ 10
ततोऽभयकुमारोऽपि संप्राप्तस्तत्र सस्मितम्। ऊचे किं गृह्यते नैषा किमेतदपि दुष्करम् ॥६२॥
तं दृष्ट्वा च [5]जना दध्युः कोऽप्यसावतिशायिधीः। समये मुखरागो हि नृणामाख्याति पौरुषम् ॥६३॥
ऊचुश्च ते महाभाग! त्वं गृहाणेत्थमूर्मिकाम्। ऊर्मिकाकर्षणपणां धुर्यतां चैषु मन्त्रिषु ॥६४॥

१ रहसि कि° सं.॥ २ आदास्यति मु.॥ ३—क. ख. ग. ढ.। क्रीता मु.॥ ४ मदीये शां. सं.॥ ५ ते जना ख. च.॥

ततोऽभयकुमारस्तामूर्मिकां[1] कूपमध्यगाम्। आर्द्रगोमयपिण्डेन निजघानोपरि स्थितः ॥६५॥
प्रक्षिप्योपरि तत्कालं ज्वलन्तं तृणपूलकम्। सद्यः संशोषयामास गोमयं तन्महामतिः ॥६६॥
नन्दाया नन्दनः सद्यः कारयित्वाऽथ सारणिम्। वारिणाऽपूरयत् कूपं विस्मयेन च तं जनम् ॥६७॥
तद् गोमयं श्रेणिकस्थः करेण तरदाददे[2]। धीमद्भिः सुप्रयुक्तस्य किमुपायस्य दुष्करम् ॥६८॥
तस्मिन् स्वरूपे चारक्षैर्विज्ञप्ते जातविस्मयः। नृपोऽभयकुमारं द्रागाजुहावात्मसन्निधौ ॥६९॥
अभयं श्रेणिकः पुत्रप्रतिपत्त्याऽथ सस्वजे। बन्धुरज्ञायमानोऽपि दृष्टो मोदयते मनः ॥७०॥
कुतस्त्वमागतोऽसीति पृष्टः श्रेणिकभूभुजा। वेणातटादागतोऽहमिति चाभिदधेऽभयः ॥७१॥
राजाऽपृच्छद् भद्रमुख ! किं भद्र इति विश्रुतः। श्रेष्ठी तत्रास्ति तस्यापि नन्दानाम्नी च नन्दना[3] ॥७२॥
अस्त्येव सम्यगित्युक्ते तेन भूयोऽपि भूपतिः। ऊचे नन्दोदरिण्यासीत् किमपत्यमजायत ? ॥७३॥
अथाख्यत् कान्तदन्तांशुश्रेणिः श्रेणिकस्थरिदम्। देवाभयकुमाराख्यं सा नन्दनमजीजनत् ॥७४॥
किंरूपः किंगुणः सोऽस्तीत्युदिते सति भूभुजा। ऊचेऽभयः स एवाहं स्वामिन्नस्मीति चिन्त्यताम् ॥७५॥
परिष्वज्याङ्कमारोप्य समाघ्राय च मूर्द्धनि। स्नेहात् स्नपयितुमिव सिषेच नयनाम्बुभिः ॥७६॥
कुशलं वत्स ! ते मातुरिति पृष्टे महीभुजा। इति विज्ञपयामास बद्धाञ्जलिपुटोऽभयः ॥७७॥

१ कुंमारोऽयमूर्मिकां शां. खं.॥ २ तरसाददे मु.॥ ३ नन्दनी शां. खं.॥



॥४०९॥

अनुस्मरन्ती भृङ्गीव त्वत्पादाम्भोजसङ्गमम्। स्वामिन्नायुष्मती मेऽम्बा बाह्योद्यानेऽस्ति संप्रति ॥७८॥
ततो नन्दां समानेतुममन्दानन्दकन्दलः। न्ययुङ्क्त सर्वसामग्रीमग्रेकृत्य नृपोऽभयम् ॥७९॥
ततः स्वयमपि प्राज्योत्कण्ठोल्लिखितमानसः। नन्दामभिययौ राजा राजहंस इवाब्जिनीम् ॥८०॥
शिथिलीभूतवलयां कपोललुलितालकाम्। अनञ्जनाक्षीं कबरीधारिणीं मलिनांशुकाम् ॥८१॥
तनोस्तनिम्ना दधतीं द्वितीयेन्दुकलातुलाम्। ददर्श राजा सानन्दो नन्दामुद्यानवासिनीम् ॥८२॥ [युग्मम्] 5
नन्दामानन्द्य नृपतिर्नीत्वा च स्वं निकेतनम्। पट्टराज्ञीपदेऽकार्षीत् सीतामिव रघूद्वहः ॥८३॥
भक्तितः पितरि स्वस्य पदातिपरमाणुताम्। मन्वानः साधयामास दुःसाधान् भूभुजोऽभयः ॥८४॥
अन्यदोज्जयिनीपुर्याश्चण्डप्रद्योतभूपतिः। चलितः सर्वसामग्र्या रोद्धुं राजगृहं पुरम् ॥८५॥[1]
प्रद्योतो बद्धमुकुटाश्चतुर्दश परे नृपाः। तत्राऽऽयान्तो[2] जनैर्दृष्टाः परमाधार्मिका इव ॥८६॥
पादातपटलैरश्वैः पाटयन्निव मेदिनीम्। आगच्छन् प्रणिधिभ्योऽथ शुश्रुवे श्रेणिकेन सः ॥८७॥ 10
किञ्चिच्च चिन्तयामास प्रद्योतोऽद्य[3] समापतन्। क्रूरग्रह इव क्रुद्धः कार्यो हतबलः कथम् ॥८८॥
ततोऽभयकुमारस्यौत्पत्तिक्यादिधियां निधेः। नृपतिर्मुखमैक्षिष्ट सुधामधुरया दृशा ॥८९॥
यथार्थनामा राजानमभयोऽथ व्यजिज्ञपत्। का चिन्तोज्जयिनीशोऽद्य भूयाद्युद्धातिथिर्मम ॥९०॥

---

१ °ज्जयनी खं.। प्रथमग्रेऽपि। त्रिषष्टि० १०। ११। ११४-१८३॥ २ °याता खं.॥ ३ यथोऽत्र रभसापतन् शां.॥

यदि वा बुद्धिसाध्येऽर्थे शस्त्राशस्त्रिकथा वृथा । बुद्धिमेव प्रयोक्ष्ये तद् बुद्धिर्हि जयकामधुक् ॥९१॥
अथ बाह्येऽरिसैन्यानामावासस्थानभूमिषु । लोहसंपुटमध्यस्थान् दीनारान् स न्यचीखनत् ॥९२॥
प्रद्योतनृपतेः सैन्यैस्ततो राजगृहं पुरम् । पर्यवेष्ट्यत भूगोलः पयोधिसलिलैरिव ॥९३॥
अथेत्थं प्रेषयामास लेखं प्रद्योतभूपतेः । अभयो गुप्तपुरुषैः परुषेतरभाषिभिः ॥९४॥
शिवादेवी-चेल्लणयोर्भेदं नेक्षे मनागपि । तन्मान्योऽसि शिवादेवीसम्बन्धेनापि सर्वदा ॥९५॥ 5
तदवन्तीश ! वच्मि त्वामेकान्तहितवाञ्छया[1] । सर्वे श्रेणिकराजेन भेदितास्तव भूभुजः ॥९६॥
दीनाराः प्रेषिताः सन्ति तेभ्यस्तान् कर्तुमात्मसात् । ते तानादाय बद्ध्वा त्वामर्पयिष्यन्ति मत्पितुः ॥९७॥
तदावासेषु दीनारा निखाताः सन्ति तत्कृते । खानयित्वा पश्य को वा दीपे सत्यग्निमीक्षते ॥९८॥
विदित्वैवं स भूपस्यैकस्यावासमचीखनत् । लब्धास्तत्र च दीनारास्तान् दृष्ट्वाऽऽशु पलायत ॥९९॥
नष्टे तत्र तु तत्सैन्यं विलोड्याब्धिमिवाखिलम् । हस्त्यश्वाद्याददे सारं मगधेन्द्रः समन्ततः ॥१००॥ 10
नासारूढेन जीवेन वायुवाजेन वाजिना । ततः प्रद्योतनृपतिः कथञ्चित् स्वां पुरीं ययौ ॥१०१॥
ये चतुर्दश भूपाला ये चान्येऽपि महारथाः । तेऽपि नेशुः काकनाशं हतं सैन्यं ह्यनायकम् ॥१०२॥
असंयतलुलत्केशैश्छत्रशून्यैश्च मौलिभिः । राजामनुयान्तस्तेऽप्यापुरुज्जयिनीं पुरीम् ॥१०३॥

---

१-क. ग. छ. । °तकांक्षया मु. । °तवांक्षया शां. ॥

अभयस्यैव मायेयं वयं नेदृशकारिणः। प्रत्यायितः सशपथं तैरथोज्जयिनीपतिः ॥१०४॥
कदाचिद्रूचेऽवन्तीशो मध्येसभममर्षणः। योऽर्पयत्यभयं बद्ध्वा मम सम्पत्स्यते स किम् ॥१०५॥
पताकं हस्तमुत्क्षिप्य काऽप्येका गणिका ततः। व्यजिज्ञपदवन्तीशमलमस्मीह कर्मणि ॥१०६॥
तामादिदेशावन्तीशो यद्येवमनुतिष्ठ तत्। करोम्यर्थादिसाहाय्यं ब्रूहि किं तव संप्रति ? ॥१०७॥
सा च दध्यौ यदभयो नोपायैर्गृह्यतेऽपरैः। धर्मच्छद्म तदादाय साधयामि समीहितम् ॥१०८॥
अयाचत ततश्च द्वे द्वितीयवयसौ स्त्रियौ। ते तदैवार्पयद्राजा ददौ द्रव्यं च पुष्कलम् ॥१०९॥
कृतादराः प्रतिदिनमुपास्योपास्य संयताः[1]। बभुवुरुत्कटप्रज्ञास्तास्तिस्रोऽपि बहुश्रुताः ॥११०॥
तास्तिस्रोऽपि ततो जग्मुः श्रेणिकालङ्कृतं पुरम्। जगत्त्रयीं वञ्चयितुं मायाया इव मूर्त्तयः ॥१११॥
बाह्योद्याने कृतावासा सा पणस्त्रीमतल्लिका। पत्तनान्तर्ययौ चैत्यपरिपाटीचिकीर्षया ॥११२॥
सा त्रिभूत्याऽतिशायिन्या चैत्ये नृपतिकारिते। प्रविवेश समं ताभ्यां कृत्वा नैषेधिकीत्रयम् ॥११३॥
मालवकैशिकीमुख्यभाषामधुरया गिरा। देवं वन्दितुमारेभे सपर्यां विरचय्य सा ॥११४॥
तत्राभयकुमारोऽपि ययौ देवं विवन्दिषुः। आत्मतुल्यां तामग्रे वन्दमानां ददर्श च ॥११५॥
देवदर्शनविघ्नोऽस्या मा भूत् प्रविशता मया। द्वार्येवैरयभयस्तस्थौ मण्डपान्तर्विवेश न ॥११६॥

1. संयती:-त्रिषष्टि० १०। ११। १३९॥



5

10

प्रणिधानस्तुतिं कृत्वा सा मुक्ताशुक्तिमुद्रया। यावदुत्तस्थुषी तावदभयोऽभ्याजगाम ताम् ॥११७॥
तादृशीं भावनां तस्यास्तं वेषं प्रशमं च तम्। अभयो वर्णयामास सानन्दं च जगाद ताम् ॥११८॥
दिष्ट्या भद्रेऽधुना त्वादृक्साधर्मिकसमागमः। साधर्मिकात् परो बन्धुर्न संसारे विवेकिनाम् ॥११९॥
का त्वं किमागमः का वा वासभूमिके[1] च के। यकाभ्यां स्वाति-राधाभ्यामिन्दुलेखेव शोभसे ॥१२०॥
व्याजहाराथ सा व्याजश्राविकाऽवन्तिवासिनः। महेभ्यवणिजः पाणिगृहीती विधवा त्वहम् ॥१२१॥
इमे च मम पुत्रस्य कलत्रे कालधर्मतः। विच्छाय्यभूतां विधवे भग्नवृक्षे लते इव ॥१२२॥
व्रतार्थमापप्रच्छाते उभे अपि तदैव माम्। विपन्नपतिकानां हि सतीनां शरणं व्रतम् ॥१२३॥
मयाऽप्युक्ते ग्रहीष्यामि निर्वीराऽहमपि व्रतम्। गार्हस्थ्यस्य फलं किन्तु गृह्यतां तीर्थयात्रया ॥१२४॥
व्रते हि भावतः पूजा युज्यते द्रव्यतो न तु। इत्यहं तीर्थयात्रार्थमेताभ्यां सह निर्गता[2] ॥१२५॥
अथेत्थमभयोऽवोचदतिथीभवताद्य नः। आतिथेयं सतीर्थ्यानां तीर्थादप्यतिपावनम् ॥१२६॥
प्रत्युवाचाभयं साऽपि युक्तमाह भवान् परम्। कृततीर्थोपवासाऽहं भवाम्यद्यातिथिः कथम् ? ॥१२७॥
अथ तन्निष्ठया हृष्टोऽभयस्तामवदत् पुनः। अवश्यं मम तत् प्रातरागन्तव्यं निकेतने ॥१२८॥
साप्यूचे यत् क्षणेनापि जन्मिनो जन्म पूर्यते। अहं प्रातरिदं कर्त्ताऽस्मीति जल्पेत् कथं सुधीः ? ॥१२९॥

१ वासभूमिरिमे च के-मु. ॥ २ निर्ययौ मु. ॥

अस्त्विदानीमियं भूयः श्वो निमन्त्र्येति चिन्तयन्। तां विसृज्याभयश्चैत्यं वन्दित्वा स्वगृहं ययौ ॥१३०॥
तां निमन्त्र्याभयः प्रातर्गृहचैत्यान्यवन्दयत्। भोजयामास च प्राज्यवस्त्रदानादि च व्यधात् ॥१३१॥
निमन्त्रितस्तयाऽन्येद्युर्मितीभूयाभयोऽप्यगात्। साधर्मिकोपरोधेन किं न कुर्वन्ति तादृशाः? ॥१३२॥
तया च विविधैर्भोज्यैरभयोऽकारि भोजनम्। चन्द्रहाससुरामिश्रपानकानि च पायितः ॥१३३॥
भुक्तोत्थितश्च तत्कालं सुष्वाप श्रेणिकात्मजः। आदिमा मद्यपानस्य निद्रा सहचरी खलु ॥१३४॥
तं रथेन स्थाने स्थाने स्थापितैश्चापरै रथैः। अवन्तीं प्रापयामास दुर्लक्ष[1]च्छद्मसद्म सा ॥१३५॥
ततोऽभयान्वेषणाय श्रेणिकेन नियोजिताः। स्थाने स्थानेऽन्वेषयन्तस्तत्राप्येयुर्गवेषकाः[2] ॥१३६॥
किमिहाभय आयात इत्युक्ता तैरुवाच सा। इहाभयः समायातः परं यातस्तदैव हि ॥१३७॥
वचनप्रत्ययात् तस्या अन्यत्रेयुर्गवेषकाः। स्थाने स्थाने स्थापिताश्वैः साऽप्यवन्तीं समाययौ ॥१३८॥
सा प्रचण्डाऽभयं चण्डप्रद्योतस्यार्पयत्ततः। अभयानयनोपायस्वरूपं च व्यजिज्ञपत् ॥१३९॥
तां प्रद्योतोऽप्युवाचैवं न साधु विहितं त्वया। यदमुं धर्मविश्रब्धं त्वं धर्मच्छद्मनाऽऽनयः ॥१४०॥
कथासप्ततिसंशंसी मार्जार्य्येव शुकोऽनया। नीतिज्ञोऽपि गृहीतोऽसि जगादेत्यभयं च सः ॥१४१॥
अभयोऽप्यब्रवीदेवं त्वमेव मतिमानसि। यस्यैवंविधया बुद्ध्या राजधर्मः प्रवर्द्धते ॥१४२॥

१ दुर्लक्ष्य॰ मु. त्रिषष्टि॰ १०। ११। १६४॥ २ ॰त्रापीयु॰ मु.। ॰त्रोपेयु॰ त्रिषष्टि॰ १०। ११। १६९॥

लज्जितः कुपितश्चाथ चण्डप्रद्योतभूपतिः। राजहंसमिवाक्षैप्सीदभयं काष्ठपञ्जरे ॥१४३॥
अग्निभीरू रथो देवी शिवा नलगिरिः करी। लोहजङ्घो लेखवाहो राज्ये रत्नानि तस्य तु ॥१४४॥
लोहजङ्घं नृपः प्रैषीद् भृगुकच्छे मुहुर्मुहुः। तद्गतागतसंक्लिष्टास्तत्रत्या इत्यमन्त्रयन्[1] ॥१४५॥
आयात्ययं दिनेनापि पञ्चविंशतियोजनीम्। असकृद्व्याहरत्यस्मान् हन्मः संप्रत्यमुं ततः ॥१४६॥
ते विमृश्येत्यदुस्तस्य शम्बले विषमोदकान्। तद्भस्त्राशम्बलं चान्यत् समन्तादप्यपाहरन् ॥१४७॥ 5
कश्चित् पन्थानमुल्लङ्घ्य नदीरोधसि शम्बलम्। तद् भोक्तुमवतस्थे सोऽभूवन्नशकुनान्यथ ॥१४८॥
शकुनज्ञस्तु सोऽभुक्त्वोत्थाय दूरं ययौ ततः। क्षुधितो भोक्तुकामस्तद्वारितः शकुनैः पुनः ॥१४९॥
दूरं गत्वा भोक्तुकामः शकुनैर्वारितः पुनः। ततो गत्वा स तत् सर्वं प्रद्योतस्य न्यवेदयत् ॥१५०॥
ततो राज्ञा समाहूय तत् पृष्टः श्रेणिकात्मजः। पाथेयभस्त्रामाघ्राय जगाद मतिमानिदम् ॥१५१॥
अस्ति दृष्टिविषोऽत्राहिर्द्रव्यसंयोगसम्भवः। असौ दग्धो भवेन्नूनं भस्त्रामुद्घाटयेद्यदि ॥१५२॥ 10
ततः पराङ्मुखोऽरण्ये मोच्य इत्यभयोदिते। तथैव मुमुचे सद्यो दग्धा[2] वृक्षा मृतश्च सः ॥१५३।
विना बन्धनमोक्षं त्वं वरं याचस्व मामिति। नृपेणोक्तेऽभयोऽवादीन्न्यासीभूतोऽस्तु मे वरः ॥१५४॥
[3]अन्यदाऽऽलानमुन्मूल्य पातयित्वा निषादिनौ। स्वैरं नलगिरिर्भ्राम्यन् क्षोभयामास नागरान् ॥१५५॥

१ इत्यसूत्रयन्-खं. क. छ. त्रिषष्टि० १०। ११। १७४॥ २ दग्धो वृक्षो खं.॥ ३ त्रिषष्टि० १०। ११। २२८-२३१॥

॥४१५॥

असाववशगो हस्ती वशं नेयः कथं न्विति। राज्ञा पृष्टोऽभयोऽशंसद् गायतूदयनो नृपः ॥१५६॥
पुत्र्या वासवदत्ताया गान्धर्वाधीतये[1] धृतः। जगावुदयनस्तत्र समं वासवदत्तया ॥१५७॥
तद्गीताकर्णनाक्षिप्तो बद्धो नलगिरिः करी। पुनर्ददौ वरं राजा न्यासीचक्रेऽभयस्तथा ॥१५८॥
[2]अभूदवन्त्यामन्येद्युर्निर्विच्छेदं प्रदीपनम्। पृष्टश्च तत्प्रतीकारं प्रद्योतेनाभयोऽवदत् ॥१५९॥
विषस्येव विषं वह्नेर्वह्निरेव यदौषधम्। तदन्यः क्रियतां वह्निर्यथा शाम्येत् प्रदीपनम् ॥१६०॥
तत्तथा विदधे राज्ञाऽशाम्यत्तच्च प्रदीपनम्। तृतीयं च वरं सोऽदान्न्यासीचक्रेऽभयश्च तम् ॥१६१॥
अशिवं महदन्येद्युरुज्जयिन्यां समुत्थितम्। तत्प्रशान्त्यै नरेन्द्रेण पृष्ट इत्यभयोऽब्रवीत् ॥१६२॥
आगच्छन्त्वन्तरास्थानं देव्यः सर्वा विभूषिताः। युष्मान् जयति या दृष्ट्या कथनीया तु सा मम ॥१६३॥
तथैव विदधे राज्ञा राज्योऽन्या विजिता दृशा। देव्या तु शिवया राजा कथितं चाभयाय तत् ॥१६४॥
अभापताभयोऽप्येवं महाराज्ञी शिवा स्वयम्। करोतु कूरबलिना भूतानामर्चनं निशि ॥१६५॥
यद्यद् भूतं शिवारूपेणोत्तिष्ठत्यथ वासते। तस्य तस्य मुखे देव्या क्षेप्यः कूरबलिः स्वयम् ॥१६६॥
विदधे शिवया तच्चाशिवशान्तिर्बभूव च। तुर्यं चाऽदाद्वरं राजा ययाचे चाभयोऽप्यदः ॥१६७॥
स्थितो नलगिरौ मेण्ठीभूते त्वयि शिवाङ्कगः। अहं विशाम्यग्निभीरुरथदारुकृतां चिताम् ॥१६८॥




---

[1] °गांन्धयने ग. म.॥ [2] त्रिषष्टि० १०। ११। २६६-३११॥

ततो विषण्णः प्रद्योतो वरान्[१] दातुमशक्नुवन् । विससर्जाञ्जलिं कृत्वा कुमारं मगधेशितुः ॥१६९॥
आशुश्रावाभयोऽप्येवं त्वयाऽऽनीतश्छलादहम् । दिवा रटन्तं पूर्मध्ये त्वां तु नेष्याम्यसावहम् ॥१७०॥
ततोऽभयकुमारोऽगात् क्रमाद्राजगृहे पुरे । कथमप्यवतस्थे च कञ्चित् कालं महामतिः ॥१७१॥
गृहीत्वा गणिकापुत्र्यौ रूपवत्यावथाभयः । वणिग्वेषोऽगादवन्त्यां राजमार्गेऽग्रहीद् गृहम् ॥१७२॥
प्रद्योतेनेक्षिते ते च दारिके पथि गच्छता । ताभ्यां च सविलासाभ्यां प्रद्योतोऽपि निरीक्षितः ॥१७३॥
प्रद्योतेन गृहे गत्वा रागिणा प्रेषिता ततः । दूतिकाऽनुनयन्त्याभ्यां क्रुद्धाभ्यामपहस्तिता ॥१७४॥
द्वितीयस्मिन्नपि दिनेऽर्थयमाना नृपाय सा । ताभ्यां शनैः सरोषाभ्यामवामन्यत दूतिका ॥१७५॥
तृतीयेऽप्यह्नि निर्वेदादेत्य ते याचिते[२]ऽनया । ऊचतुश्च सदाचारो भ्राता नावेष रक्षति ॥१७६॥
ततो बहिर्गतेऽमुष्मिन् सप्तमेऽह्नि समागते । इहाऽऽयातु नृपश्छन्नस्ततः सङ्गो भविष्यति ॥१७७॥
ततोऽभयेन प्रद्योतसदृगेकः पुमान्निजः । उन्मत्तो विदधे तस्य प्रद्योत इति नाम च ॥१७८॥
ईदृशोऽयं मम भ्राता भ्राम्यतीतस्ततस्ततः । रक्षितव्यो मया हा किं करोमीत्यवदज्जने ॥१७९॥
तं वैद्यसद्मनयनच्छद्मना प्रत्यहं बहिः । रटन्तं मञ्चकारूढं निनायाऽऽर्त इवाभयः ॥१८०॥
नीयमानश्च तेनोच्चैः स उन्मत्तश्चतुष्पथे । प्रद्योतोऽहं ह्रियेऽनेनेत्युदश्रुवदनोऽरटत् ॥१८१॥

---

१ वरम् शां. त्रिषष्टि० १० । ११ । २७६ ॥     २ याचिते तया क. ख. छ. ॥



॥४१७॥

सप्तमेऽह्नि नृपोऽप्येकस्तत्र प्रच्छन्न आययौ । कामान्धः सिन्धुर इव बद्धश्चाभयपूरुषैः ॥१८२॥
नीयतेऽसौ वैद्यवेश्मेत्यभयेनाभिभाषिणा । पर्यङ्केन समं जह्रे पुरान्तः स रटन् दिवा ॥१८३॥
क्रोशे क्रोशे पुरा मुक्तै रथैरथ सुवाजिभिः । पुरे राजगृहेऽनैषीत् प्रद्योतमभयोऽभयः ॥१८४ ।
ततो निनाय प्रद्योतं श्रेणिकस्य पुरोऽभयः । दधावे खड्गमाकृष्य तं प्रति श्रेणिको नृपः ॥१८५॥
ततोऽभयकुमारेण बोधितो मगधेश्वरः । संमान्य वस्त्राभरणैः प्रद्योतं व्यसृजन्मुदा ॥१८६॥
अन्यदा गणभृद्देवसुधर्मस्वामिनोऽन्तिके । प्रव्रज्यामग्रहीत् कोऽपि विरक्तः काष्ठभारिकः ॥१८७॥
विहरन् स पुरे पौरैः पूर्वावस्थाऽनुवादिभिः । अभत्सर्यतोपाहस्यतागर्ह्यतापि पदे पदे ॥१८८॥
नावज्ञां सोढुमीशेऽत्र विहरामि तदन्यतः । इति व्यज्ञपयत् स श्रीसुधर्मस्वामिनं ततः ॥१८९॥
सुधर्मस्वामिनाऽन्यत्र विहारक्रमहेतवे । आपृच्छ्यताभयः पृच्छन् ज्ञापितस्तच्च कारणम् ॥१९०॥
दिनमेकं प्रतीक्षध्वमूर्ध्वं यत् प्रतिभाति वः । तद्विधत्तेत्ययाचिष्ट प्रणम्य श्रेणिकात्मजः ॥१९१॥
सोऽथ राजकुलात् कृष्ट्वा रत्नकोटित्रयीं[2] बहिः । दास्याम्येतामेत लोकाः पटहेनेत्यघोषयत् ॥१९२॥
ततश्चेयुर्जनाः सर्वेऽप्यवोचदभयोऽप्यदः । जला-ऽग्नि-स्त्रीवर्जको यस्तस्य रत्नोच्चयोऽस्त्वयम् ॥१९३॥
लोकोत्तरमिदं लोकः स्वामिन्! किं कर्तुमीश्वरः ? । इति तेष्वाभाषमाणेष्वभयोऽपीत्यभाषत ॥१९४॥

१ मीशो मु. त्रिषष्टि० १० । ११ । २०६ ॥ २ °त्रयं मं. ॥ ३ ततश्चेयु° मु. त्रिषष्टि० १० । ११ । २०० ॥

5

10

यदि वो नेदृशः कश्चिद्रत्नकोटीत्रयं ततः। जला-ऽग्नि-स्त्रीमुचः काष्ठभारिणोऽस्तु महामुनेः ॥१९५॥

सम्यगीदृगयं साधुः पात्रं[1] दानस्य युज्यते। मुधाऽसौ जहसेऽस्मारिति तैर्जगदेऽभयः ॥१९६॥

अस्य भर्त्सोपहासादि न कर्त्तव्यमतः परम्। आदिष्टमभयेनैवं प्रतिपद्य ययुर्जनाः ॥१९७॥

एवं बुद्धिमहाम्भोधिः पितृभक्तिपरोऽभयः। निरीहो धर्मसंसक्तो राज्यमन्वशिषत् पितुः ॥१९८॥

वर्त्तमानः स्वयं धर्मे स प्रजा अप्यवर्त्तयत्। प्रजानां च पशूनां च गोपायत्ताः प्रवृत्तयः ॥१९९॥

राजा चक्रे जजागार यथा द्वादशधा स्थिते। तथा श्रावकधर्मेऽसावप्रमद्वरमानसः ॥२००॥

बहिरङ्गान् यथाऽजैषीद् दुर्जयानपि विद्विषः। अन्तरङ्गानपि तथा स लोकद्वयसाधकः ॥२०१॥

तमूचे श्रेणिकोऽन्येद्युर्वत्स! राज्यं त्वमाश्रय। अहं श्रयिष्ये श्रीवीरशुश्रूषासुखमन्वहम् ॥२०२॥

पित्राज्ञाभङ्ग-संसारभीरुरित्यभयोऽब्रवीत्। यदादिशत तत् साधु प्रतीक्षध्वं क्षणं परम् ॥२०३॥

इतश्च भगवान् वीरः प्रव्रज्योदायनं नृपम्। मरुमण्डलतस्तत्राभ्यागत्य समवासरत् ॥२०४॥

ततो गत्वाऽभयो नत्वा पप्रच्छ चरमं जिनम्। राजर्षिः कोऽन्तिमोऽथाख्यत्तत्रैवोदायनं प्रभुः ॥२०५॥

गत्वोचे श्रेणिकं सोऽस्मि राजा चेन्न ऋषिस्तदा। श्रीवीरोऽन्तिमराजर्षिं शशंसोदायनं यतः ॥२०६॥

श्रीवीरं स्वामिनं प्राप्य प्राप्य त्वत्पुत्रतामपि। नो छेत्स्ये भवदुःखं चेन्मत्तः कोऽन्योऽधमस्ततः ॥२०७॥

---

१ पात्रदानस्य खं. त्रिषष्टि० १०। ११। ३०३॥ २ राजचक्रे त्रिषष्टि० १०। ११। ३०७॥

5

10



॥४१९॥

नाम्नाऽहमभयस्तात । सभयोऽस्मि भवाद् भृशम् । भुवनाभयदं वीरं तच्छ्रयामि समादिश ॥२०८॥
तदलं मम राज्येनाभिमानसुखहेतुना । यतः सन्तोषसाराणि सौख्यान्याहुर्महर्षयः ॥२०९॥
निर्बन्धाद् ग्राह्यमाणोऽपि न यदा राज्यमग्रहीत् । तदाऽभयो व्रतायानुजज्ञे राज्ञा प्रमोदतः ॥२१०॥
राज्यं तृणमिव त्यक्त्वा सन्तोषसुखभागसौ । दीक्षां चरमतीर्थेशवीरपादान्तिकेऽग्रहीत् ॥२११॥
संतोषमेवमभयः सुखदं दधानः सर्वार्थसिद्धिसुरधाम जगाम मृत्वा ।
सन्तोषमेवमपरोऽप्यवलम्बमानस्तान्युत्तरोत्तरसुखानि नरो लभेत ॥२१२॥

[ इति श्री अभयराजर्षिकथानकम् ॥ ] ॥११४॥

प्रकृतं सन्तोषमेव स्तौति—

सन्निधौ निधयस्तस्य कामगव्यनुगामिनी ।
अमराः किङ्करायन्ते सन्तोषो यस्य भूषणम् ॥११५॥

निधयो महापद्मादयः, सन्निधौ सन्निहिताः, कामगवी कामधेनुः, सा अनुगच्छतीत्येवंशीला अनुगामिनी, अमराः सुराः, किङ्करा इवाचरन्ति किङ्करायन्ते । तस्येति योगः । यस्य किम् ? यस्य पुंसः सन्तोषो भूषणमल-

१ त्रिषष्टि० १० । ११ । ३२८ ॥ २ त्रिषष्टि० १० । १२ । ९९-१०३ ॥



5

10

ङ्करणम् । तथाहि–सन्तुष्टा मुनयः शमप्रभावात्तृणाग्रादपि रत्नसमूहान् पातयन्ति, कामितफलदायिनश्च सुरेन्द्रैरप्यहमहमिकयोपचर्यन्त इत्यत्र कः सन्देहः ।



अत्रान्तरश्लोकाः[1]—

धनं[2] धान्यं स्वर्ण-रूप्य-कुप्यानि क्षेत्र-वास्तुनी । द्विपाश्चतुष्पाचेति स्युर्नव बाह्याः परिग्रहाः ॥१॥
राग-द्वेषौ कषायाः शुग्हासौ रत्यरती भयम् । जुगुप्सा वेद-मिथ्यात्वे आन्तराः स्युश्चतुर्दश ॥२॥ 5
बाह्यात् परिग्रहात् प्रायः प्रकुप्यन्त्यान्तरा अपि । प्रावृषो मूषिकालर्कविषजोपद्रवा इव ॥३॥
प्राप्तप्रतिष्ठानपि च वैराग्यादिमहाद्रुमान् । उन्मूलयति निर्मूलं परिग्रहमहाबलः ॥४॥
परिग्रहनिषण्णोऽपि योऽपवर्गं विमार्गति । लोहोडुपनिविष्टोऽसौ पारावारं तितीर्षति ॥५॥
बाह्याः परिग्रहाः पुंसां धर्मस्य ध्वंसहेतवः । तज्जन्मानोऽपि जायन्ते समिधामिव वह्नयः ॥६॥
बाह्यानपि हि यः सङ्गान्न नियन्त्रयितुं क्षमः । जयेत् क्लीबः कथं सोऽन्तःपरिग्रहचमूममूम् ॥७॥ 10
क्रीडोद्यानमविद्यानां वारिधिर्व्यसनार्णसाम् । कन्दस्तृष्णामहावल्लेरेक एव परिग्रहः ॥८॥
अहो आश्चर्यमुन्मुक्तसर्वसङ्गान् मुनीनपि । धनार्थित्वेन शङ्कन्ते धनरक्षापरायणाः ॥९॥
राज-तस्कर-दायाद-वह्नि तोयादिभीरुभिः । धनैकतानैर्धनिभिर्निशास्वपि न सुप्यते ॥१०॥



---

१ °न्तरे शां. ॥ २ धनधान्यस्वर्ण° क. ख. घ. । धान्यं धन स्वर्ण° ङ. ॥

दुर्भिक्षे वा सुभिक्षे वा वने जनपदेऽपि वा। शङ्कातङ्काकुलतया धनी सर्वत्र दुःखितः ।११॥
निर्दोषा वा सदोषा वा सुखं जीवन्ति निर्धनाः। बाध्यन्ते धनिनो लोके दोषैरुत्पादितैरपि ॥१२॥
अर्जने रक्षणे नाशे व्यये सर्वत्र दुःखदम्। धत्ते कर्णगृहीताच्छभल्ललीलां धनं नृणाम् ॥१३॥
धिग् धनं धनवन्तो यदेकामिषजिघृक्षुभिः। स्वजनैरपि बाध्यन्ते शुनकाः शुनकैरिव ॥१४॥
इत्थमर्थं लभेयाहं रक्षेयं वर्द्धयेय च। कृतान्तदन्तयन्त्रस्थोऽपीत्याशां न त्यजेद्धनी ॥१५॥
पिशाचीव धनाशेयं यावदुच्छृङ्खला भवेत्। तावत् प्रदर्शयेन्नृणां नानारूपां विडम्बनाम् ॥१६॥
यदीच्छसि सुखं धर्मं मुक्तिसाम्राज्यमेव च। तदा परपरीहारादेकामाशां वशीकुरु ॥१७॥
स्वर्गापवर्गनगरप्रवेशप्रतिरोधिनी। अभेद्या वज्रधाराभिराशैव हि महार्गला ॥१८॥
आशैव राक्षसी पुंसामाशैव विषमञ्जरी। आशैव जीर्णमदिरा धिगाशा सर्वदोषभूः ॥१९॥
ते धन्याः पुण्यभाजस्ते तैस्तीर्णः क्लेशसागरः। जगत्संमोहजननी यैराशाऽऽशीविषी जिता ॥२०॥
पापवल्लीं दुःखखानिं सुखाग्निं दोषमातरम्। आशां निराशीकुरुते यस्तिष्ठति सुखेन सः ॥२१॥
आशादवाग्नेर्महिमा कोऽपि लोकपथातिगः। धर्ममेघं समाधिं यो विध्यापयति तत्क्षणात् ॥२२॥
दीनं जल्पन्ति गायन्ति नृत्यन्त्यभिनयन्ति च। आशापिशाचीविवशाः पुमांसो धनिनां पुरः ॥२३॥
न यान्ति वायवो यत्र नाप्यर्केन्दुमरीचयः। आशामहोर्मयः पुंसां तत्र यान्ति निरर्गलाः ॥२४॥


5
10

येनाशायै ददे स्वाम्यं तेनाऽऽत्तं दास्यमात्मनः। आशा दासीकृता येन तस्य स्वाम्यं जगत्त्रये ॥२५॥
नाशा[1] नैसर्गिकी पुंसि या जीर्यति न जीर्यति। उत्पात एव कोऽप्येषा तस्यां सत्यां कुतः सुखम् ॥२६॥
वलयो वलयाः पुंसां पलितानि स्रजः कृताः। किमन्यन्मण्डनं कृत्वा कृतार्था[2]ऽऽशा भविष्यति ॥२७॥
प्राप्तेभ्योऽप्यतिरिच्यन्ते तेऽर्थास्त्यक्ता य आशया। क्रोडीकरोति यानाशा ते तु स्वप्नेऽपि दुर्लभाः ॥२८॥
यानर्थान् बहुभिर्यत्नै[3]रिच्छेत् साधयितुं नरः। अयत्नसिद्धा एवैते कृते ह्याशानिमीलने ॥२९॥
पुण्योदयोऽस्ति चेत् पुंसां व्यर्थैवाशापिशाचिका। अथ पुण्योदयो नास्ति व्यर्थैवाशापिशाचिका ॥३०॥
अधीती पण्डितः प्राज्ञः पापभीरुस्तपोधनः। स एव येन हित्वाऽऽशां नैराश्यमुररीकृतम् ॥३१॥
सुखं सन्तोषपीयूषजुषां यत् स्ववशात्मनाम्। तत्पराधीनवृत्तीनामसन्तोषवतां कुतः ॥३२॥
सन्तोषवर्मणि व्यर्था आशानाराचपङ्क्तयः। ताः कथं प्रतिरोद्धव्या इति मा स्माकुलो भव ॥३३॥
वाक्येनैकेन तद्वच्मि यद्वाच्यं वाक्यकोटिभिः। आशापिशाची शान्ता च प्राप्तं च परमं पदम् ॥३४॥
तत् सन्त्यजाऽऽशावैवश्यं मितीकृतपरिग्रहः। भजस्व[4] द्रव्यसाधुत्वं यतिधर्मानुरक्तधीः ॥३५॥
मिथ्यादृग्भ्यो विशिष्यन्ते सम्यग्दर्शनिनो जनाः। तेभ्योऽपि देशविरता मितारम्भपरिग्रहाः ॥३६॥
यामन्यतीर्थिका यान्ति गतिं तीव्रतपोजुषः। उपासकाः सोमिलवत् तां विराद्धव्रता अपि ॥३७।

१ आशा शां. ॥   २ °र्था सा खं. ॥   ३ बहुभिः क्लेशै° ख. च. ॥   ४ भजस्व भावसाधुत्वं च. ड. ॥

मासे मासे हि ये बालाः कुशाग्रेणैव भुञ्जते । सन्तुष्टोपासकानां ते कलां नार्हन्ति षोडशीम् ॥३८॥
अप्यद्भुततपोनिष्टप्तामलिः- पूरणोऽपि वा । सुश्रावकोचितगतेरतिहीनां गतिं ययौ ॥३९॥

आशापिशाचविवशं कुरु मा स्म चेतः सन्तोषमुद्वह परिग्रहनिग्रहेण ।
श्रद्धां विधेहि यतिधर्मधुरीणतायामन्तर्भवाष्टकमुपैपि यथाऽपवर्गम् ॥४०॥११५॥

इति परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचन्द्रविरचिते अध्यात्मोपनिषन्नाम्नि सञ्जातपट्टबन्धे श्रीयोगशास्त्रे स्वोपज्ञं द्वितीयप्रकाशविवरणम्[2] ।



१ °भग्ने द्वादशप्रकाशे श्रीयोगशास्त्रे शां. ॥ २ °णम् ॥ पद्यं ग्रंथ ३१०० ॥ मंगलं महाश्री ॥-खं ॥

परमपूज्यवर्याचार्य सज्जैगमोद्धारक श्रीमत्सागरानंदसूरि महाराजैः

पूज्य पन्यास श्री क्षमासागर पूज्य मुनिवर्य श्रीमच्चन्द्रसागराभ्यां
समर्प्यमाणोपाध्यायपद गणिपद पन्यासपदोपलक्ष्ये

तदतिशययोग्यपदन्यासातिशयहर्षवर्षातिरेकसमुच्छलितमानसो राजनगराभिजनः
सुपात्रदानैकप्रौढविक्रमः श्राद्धकुलकमलकमलबन्धुः
श्रेष्ठिवर्य छोटालाल तनूजन्मा श्रेष्ठिश्रेष्ठ श्री मोहनलाल सद्द्रव्यव्ययोपलब्धमिदं
ग्रन्थरत्नं सुलभीकृत्य

श्रीमदुपाध्याय क्षमासागर श्रीमत्पन्यास चन्द्रसागरमहाराजाभ्यां विद्वत्साधुसाध्वीजनानां
सदुपयोगाय समुपदीकृतम्